उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

# संस्कृतव्याकरणम् - ३४६

## पुस्तकम् - २




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in    निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**
A-२४-२५, Institutional Area, Sector – ६२
NOIDA – २०१ ३०९ (UP)

# उच्चतरमाध्यमिककक्षा - संस्कृतव्याकरणम् (३४६)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**प्रो. डॉ. अर्कनाथ-चौधरी (समितेः अध्यक्षः)**
उप-कुलपतिः
श्रीसोमनाथ-संस्कृत-विश्वविद्यालयः
वेरावल -३६२२६६ (गुर्जरप्रदेशः)

**डॉ. नीरजकुमारभार्गवः (समितेः उपाध्यक्षः)**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. हरि-राम-मिश्रः**
सहायकप्राध्यापकः (संस्कृतविभागः)
जवाहरलाल-नेहरू-विश्वविद्यालयः
नवदेहली

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. विजेन्द्र-सिंहः**
वरिष्ठ-प्राध्यापकः (संस्कृतम्)
शिक्षानिदेशालयः, केन्द्रसर्वकारः, देहली

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५ (प.वङ्गम्)

**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १-८)**
**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S)
(संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५
पश्चिमवङ्गम्

**(पाठः ९-११)**
**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः
(संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १२-२०)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २१-२७, ३०-३१)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः २८-२९)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतव्याकरणस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

(डॉ. चन्द्रभूषणशर्मा)
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्रोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतव्याकरणस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्सति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।
किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै।। ॐ शान्तिः शान्तिः शान्तिः।।**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

संस्कृतव्याकरणस्य अध्ययनं सोपानक्रमेण भवति। अतः सोपानस्य प्रति पर्व आरोहणं क्रमेणैव कर्तव्यमिति इत्यतः पाणिनीयाम् अष्टाध्यायीं विद्वांसः भिन्नक्रमेणापि व्याख्यातवन्तः। सोऽयं प्रक्रियाक्रमः। तं क्रमम् अवलम्ब्य निर्मिता इयं सामग्री सोपनपर्वक्रमेणैव आयोजिता अस्ति। माध्यमिककक्षायां एकः भागः उच्चमाध्यमिककक्षायां च अवशिष्टः भागः वर्तते। एतेन पाणिनीयतन्त्रे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री पाणिनीयतन्त्रस्य सश्रद्धम् अध्ययने प्रवेशाय प्रोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति। अस्य अध्ययनेन व्याकरणस्य मूलभूतं ज्ञानं छात्रस्य भवेत्। सूत्राणि सूत्रव्याख्या, उदाहरणानि, उदाहरणेषु सूत्रस्य प्रवृत्तिः, रूपनिष्पत्तिश्च इति लक्ष्यलक्षणात्मकोऽयं व्याकरणप्रपञ्चः अत्र वर्तते।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

पाठ्यक्रमस्य सविस्तरं विवेचनं प्रश्नपत्रस्य पारूपम् प्रश्नपत्रस्य प्रतिमा तदुत्तराणि च पुस्तकस्य अन्ते द्रष्टव्यानि। अध्ययनारम्भात् प्राक् नूनमेव अध्येता तत्र दत्तान् बिन्दून् अवलोकयेत्। तेन अध्ययनस्य दिशा गतिः च सुष्ठु स्याताम्।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकूटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय।। ॐ शान्तिः शान्तिः शान्तिः।।**

भवत्कल्याणकामी

(राम-नारायण-मीणा)
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### समासः स्त्रीप्रत्ययाः च

१. केवलसमासः अव्ययीभावसमासः च

२. तत्पुरुषसमासः - द्वितीयादितत्पुरुषसमासः

३. तत्पुरुषसमासः- तद्धितार्थादितत्पुरुषसमासः

४. तत्पुरुषसमासः- कुगतिप्रादिसमासः उपपदसमासश्च

५. बहुव्रीहिसमासः-व्यधिकरणबहुव्रीहिः समान्तप्रत्ययश्च

६. बहुव्रीहिसमासः- समासान्तप्रत्ययः निपातव्यवस्थादिकम्

७. द्वन्द्वसमासः- पूर्वपरनिपातः विशेषकार्याणि एकशेषः च

८. प्रकीर्णं समासप्रकरणम्

### स्त्रीप्रत्ययः

९. स्त्रीप्रत्ययः- चाप् टाप् डाप् प्रत्ययाः

१०. स्त्रीप्रत्ययः- ङीप् ङीप् प्रत्ययौ

११. स्त्रीप्रत्ययः- ङीष्-प्रत्ययः

## पुस्तकम्- २

### तिङन्तप्रकरणम्

१२. भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -१

१३. भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -२

१४. भ्वादिप्रकरणे - भूधातोः लिटि लुटि च रूपसाधनम्

१५. भ्वादिप्रकरणे- भूधातोः लृटि लोटि च रूपसाधनम्

१६. भ्वादिप्रकरणे- भूधातोः लिङि लुङि लृङि च रूपसाधनम्

१७. भ्वादिप्रकरणे - लट् लिट् एतयोः सूत्रशेषः

१८. भ्वादिप्रकरणे - लिट्-लकारस्य सूत्रशेष

१९. भ्वादिप्रकरणे - लिङ् लुङ् एतयोः सूत्रशेषः

२०. भ्वादिप्रकरणे आत्मनेपदप्रकरणम्

२१. अदादितः दिवादिपर्यन्तम् - अद् हु दिव् धातवः

२२. स्वादितः रुधादिपर्यन्तम्- सु तुद् रुध् धातवः

२३. तनादितः चुरादिपर्यन्तम्- तन् कृ क्री चुर् धातवः

## पुस्तकम्- ३

### णिजन्तादिकं तद्धितप्रत्ययाः च

२४. तिङन्ते णिजन्तप्रकरणम्

२५. तिङन्ते सन्नन्तप्रकरणम्

२६. तिङन्ते परस्मैपदात्मनेपदविधानम्

२७. तिङन्ते भावकर्मप्रकरणम्

### तद्धिताः

२८. तद्धितेषु अपत्याधिकारः

२९. तद्धितेषु मत्वर्थीयप्रत्ययाः

३०. तद्धितेषु रक्ताद्यर्थकप्रत्ययाः

३१. तद्धितेषु ठञधिकारः

# संस्कृतव्याकरणम्

# उच्चतरमाध्यमिककक्षा

## द्वितीयं स्वाध्यायसोपानम्

| क्रमः | विषयसूची | पृष्ठसंख्या |
|---|---|---|
| | तिङन्तप्रकरणम् - | |
| १२. | भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -१ | १ |
| १३. | भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -२ | २० |
| १४. | भ्वादिप्रकरणे - भूधातोः लिटि लुटि च रूपसाधनम् | ३६ |
| १५. | भ्वादिप्रकरणे- भूधातोः लृटि लोटि च रूपसाधनम् | ५७ |
| १६. | भ्वादिप्रकरणे- भूधातोः लिङि लुङि लृङि च रूपसाधनम् | ७९ |
| १७. | भ्वादिप्रकरणे - लट् लिट् एतयोः सूत्रशेषः | १०२ |
| १८. | भ्वादिप्रकरणे - लिट्-लकारस्य सूत्रशेषः | १२४ |
| १९. | भ्वादिप्रकरणे - लिङ् लुङ् एतयोः सूत्रशेषः | १३९ |
| २०. | भ्वादिप्रकरणे आत्मनेपदप्रकरणम् | १५३ |
| २१. | अदादितः दिवादिपर्यन्तम् - अद् हु दिव् धातवः | १७८ |
| २२. | स्वादितः रुधादिपर्यन्तम्- सु तुद् रुध् धातवः | २०० |
| २३. | तनादितः चुरादिपर्यन्तम्- तन् कृ क्री चुर् धातवः | २२५ |
| | सूत्रसूची | २५२ |

# अध्यायः - तिङन्तप्रकरणम्

## भूमिका

व्याकरणस्य लक्ष्यं हि साधुशब्दज्ञानम्। साधुशब्दः प्रक्रियया निष्पाद्यते व्याकरणेन। व्यवहारयोग्यः साधुशब्दः निष्पन्नः चेत् पदम् इति कथ्यते। सुबन्तं तिङन्तं चेति पदं द्वेधा। प्रातिपदिकात् स्त्रीप्रत्ययान्ताद् वा सुप्-प्रत्यययोगेन सुबन्तं पदं निष्पद्यते। धातुतः तिङ्-प्रत्यययोगेन तिङन्तं पदं निष्पद्यते। धातुपाठे पठितः, सनादिः चेति धातुः द्विविधः। धातुतः तिङ् कृत् चेति द्विविधप्रत्यययोगः भवति। धातोः तिङ्-प्रत्यययोगेन तिङन्तं पदम् लभ्यते। धातोः कृत्-प्रत्यययोगेन कृदन्तं प्रातिपदिकम् लभ्यते। अस्मात् प्रातिपदिकात् सुप्-प्रत्यययोगेन सुबन्तं पदं निष्पद्यते। एवं धातुतः तिङ्-प्रत्यययोगेन तिङन्तं, कृत्-प्रत्यययोगेन ततः सुप्-प्रत्यययोगेन सुबन्तं पदं लभ्यते। इतः परं पाठेषु तिङन्तं पदम् आलोचयिष्यते। तिङन्तप्रकरणम् व्याकरणसम्प्रदाये दशगणी इति नाम्ना प्रसिद्धम् अस्ति।

धातुरेव प्रायः समेषां सुबन्ततिङन्तपदानाम् मूलम्। अतः धातुरूपप्रक्रिया नूनं बोध्या छात्रेण। एवञ्च प्रक्रियादृष्ट्या तिङन्तं प्रकरणं सर्वप्रकरणेभ्यः कठिनमस्ति। तथापि प्रणिधानेन अध्ययनं करोति चेत् सर्वं सुगमं भवेत्। आवृत्तिः सर्वशास्त्राणां बोधादपि गरीयसी इति अभियुक्तानाम् उक्तिः सदा स्मरणीया।

इक्-श्तिपौ धातुनिर्देशे इत्यस्य उपयोगः धातोः प्रकटनाय क्रियते। बहुत्र हलन्तधातुतः अकारयोगेन धातुः लिख्यते। तत्र अयम् अकारः केवलम् मुखसुखार्थः भवति। अर्थात् अनायासम् उच्चारणाय योज्यते। यथा वद् इति हलन्तः धातुः। व्रज् इति हलन्तः धातुः। परन्तु वदव्रजहलन्तस्याचः इति सूत्रे तयोः परम् अकारः योजितः अस्ति। स च मुखसुखार्थः। एवमन्यत्रापि ऊह्यम्।

**सूत्रोपन्यासक्रमः -**

अत्र प्रकरणे सूत्राणि येन क्रमेण उपन्यस्यन्ते तथा क्रमे किं मानम्। अर्थात् तेनैव क्रमेण तानि सूत्राणि आगतानि इत्यत्र कारणं किमिति। तिङन्तेषु सूत्रोपन्यासस्य द्विधा गतिः। धातुक्रमः, लकारक्रमश्च।

**धातुक्रमः -**

धातुक्रमे एकः धातुः गृह्यते, तस्य रूपाणि साधयितुम् यानि सूत्राणि आवश्यकानि तानि सूत्राणि लट् लिट् लुट् इति लकारेषु क्रमेण उपस्थाप्यन्ते। तस्य धातोः सर्वेषु लकारेषु रूपाणि समाप्तानि चेत् नूतनः धातुः गृह्यते, तस्य रूपाणि साधयितुं यानि अनतिक्रान्तानि सूत्राणि तानि उपन्यस्यन्ते।

अत्र तिङन्तप्रकरणे धातुचयनकाले भूधातुः प्रथमः। अतः आदौ चितः। तथापि अग्रे प्रक्रियासौकर्याय एकविषयसम्बद्धानाम् सूत्राणाम् एकत्र उपस्थापनाय च धातवः चिताः।

**लकारक्रमः**

एक एव लकारः गृह्यते। तस्मिन् अभीष्टानां धातूनां रूपाणि कथं भवन्ति इति प्रदर्श्यते। ततः अपरः लकारः गृह्यते। तस्मिन् अभीष्टानां धातूनां रूपाणि प्रदर्श्यन्ते। एवं क्रमः प्रवर्तते। तत्रापि गणशः लकारक्रमः, सकलधातुलकारक्रमः चेति प्रकारद्वयं भवति - **गणशः लकारक्रमः** - एक एव लकारः गृह्यते। तस्मिन् केवलं भ्वादिगणीयधातूनामेव रूपाणि प्रदर्श्यन्ते इति एकः प्रकारः। **सकलधातुलकारक्रमः** इति द्वितीयप्रकारे तु एक लकारः गृह्यते। तस्मिन् सकलगणानां धातूनां रूपाणि प्रदर्श्यन्ते इति।

अस्मिन् तिङन्तप्रकरणे धातुक्रमः आदृतः। तथापि सर्वाणि सूत्राणि केवलं तस्यैव धातोः उपस्थाप्यन्ते इति न। बहुत्र प्रकरणप्रकटनस्य सौकर्याय, विषयस्य ऐक्यवशात्, एकत्र अध्ययनेन विषयस्य स्फुटबोधाय वा कानिचन तत्र अप्रयुक्तानि अग्रे अपरेषु धातुषु प्रकरणेषु वा आवश्यकानि सूत्राणि अत्र आनीय उपन्यस्यन्ते। यथा - आत्मनेपदसंज्ञाविधायकसूत्रं तु आत्मनेपदप्रकरणे आवश्यकम्। परन्तु प्रकरणस्य ऐक्यवशात् परस्मैपदप्रकरणे उपन्यस्तम्। आत्मनेपदस्य निमित्तप्रदर्शकानि सूत्राणि यथा अनुदात्तङित आत्मनेपदम् इत्यादिसूत्राणि तु आत्मनेपदप्रकरणे आवश्यकानि। तथापि विषयस्य स्फुटावगमाय विषयस्य च प्रकटने सौकर्यवशात् तानि अत्र उपन्यस्यन्ते। एवम् यद्यपि किमपि सूत्रं तत्र प्रसङ्गे न प्रयुज्यते, तथापि एतानि कारणानि मनसि कृत्वा अत्र आनीय उपन्यस्यन्ते इति।

एतेषां प्रकरणानाम् अध्ययनकाले छात्रः इतः पूर्वम् अस्य पुस्तकस्य एवञ्च दशमकक्षायाः व्याकरणपुस्तकस्य अध्ययनं समाप्य आगच्छतु। अत्र बहूनि सूत्राणि पूर्वप्रकरणानाम् आवश्यकानि।

**व्याकरणाध्ययनकाले अत्र अवधानं देयम् -**

बहुत्र शास्त्रेषु मूलस्य कण्ठपाठः नापि आवश्यकः स्यात्। परन्तु व्याकरणस्य रूपाणि साधनीयानि चेत् सूत्रोल्लेखपुरःसरं रूपाणि साध्यन्ते। सूत्रं हि लक्षणम् उच्यते। तत् लक्षणं यस्य शब्दस्वरूपस्य संस्कारं करोति तत् शब्दस्वरूपं तस्य लक्ष्यम् उच्यते। अतः व्याकरणस्य छात्रेण लक्षणं तल्लक्ष्यं च सुष्ठु बोध्यम्। लक्षणस्य अर्थं जानाति चेदेव लक्ष्यस्य संस्कारं कर्तुं प्रभवति। अतः लक्षणम् अर्थः लक्ष्यम् एतत् त्रितयम् निष्ठया ज्ञेयमेव। अयमेव व्याकरणाध्ययनस्य पन्थाः। स एव खलु वैद्यः यो रोगं जानाति, औषधं च जानाति, औषधस्य प्रयोगं च जानाति। एषु एकमपि न जानाति चेत् कीदृशः स वैद्यः। एवमेव स एव खलु वैयाकरणः यः लक्षणं जानाति, अर्थं जानाति, लक्ष्यं च जानाति, लक्षणेन लक्ष्यस्य संस्कारं च करोतीति। अतः लक्षणानाम् अर्थात् सूत्राणां कण्ठपाठः अनिवार्यः एव।

१२

# भ्वादिप्रकरणे-
# भूधातोः लटि रूपसाधनम् -१

## प्रस्तावना

पाणिनिमुनिना अष्टाध्यायीनामकः ग्रन्थः लिखितः। तत्र लाघवसम्पादनाय धातुपाठः गणपाठः नामलिङ्गानुशासनम् इत्यादिकम् अपि विरचितम्। धातुपाठे पठिताः शब्दाः धातवः कथ्यन्ते। तथाहि सूत्रं - भूवादयो धातव इति। धातोः अर्थः फलम् व्यापारश्च। तदग्रे विस्तरशः वर्णयिष्यते। धातोः परं तिङ् कृत् चेति द्वेधा प्रत्ययौ विधीयेते। तत्र धातोः तिङ्-प्रत्ययविधानेन तिङन्तं पदं निष्पद्यते। तदेवेदं तिङन्तप्रकरणमत्र प्रकृतम्।

धातुतिङोः मध्ये विधीयमानः प्रत्ययः विकरणं कथ्यते। धातूनां दश विकरणानि सन्ति। यथा शप् शब्लुक् शप्श्लुः श्यन् शः श्नम् उ श्ना शप् इति। अन्यानि अपि विकरणानि स्य तास् च्लि इत्यादीनि। तथापि गणशः विभाजनस्य कारणं हि शबादीनि दश विकरणानि एव। यस्मात् धातोः शप् विकरणं विधीयते स धातुः प्रथमगणे पाणिनिना स्थापितः। तत्प्रथमगणस्य प्रथमो धातुस्तावत् भू इति। अतः भूः आदिः यस्य गणस्य दलस्य स गणः भ्वादिगणः। एवम् शब्लुक् विकरणं येषां धातूनां ते धातवः द्वितीयगणे स्थापिताः। तस्य गणस्य प्रथमो धातुः अद् धातुः। अतः अद् आदिः यस्य गणस्य स अदादिगणः भवति। एवं धातूनां विकरणवशाद् दश गणाः। अत एव बहुत्र धातोरुल्लेखः क्रियते तदा स कस्य गणस्य इति लिख्यते। यथा भू (भ्वादि, प.प.) - अर्थात् भू धातुः भ्वादिगणीयः, परस्मैपदी च। विकरणज्ञानं विना धातोः लट् लोट् लङ् विधिलिङ् एषु लकारेषु रूपाणि न कर्तुं शक्यानि। अन्येषु लकारेषु विकरणस्य प्रभावो नास्ति। अतः गणज्ञानं विनैव तेषु रूपाणि कर्तुं शक्यन्ते।

अस्मिन् पाठे, इतः परं च नवसु पाठेषु भ्वादिगणीयधातूनामेव रूपाणि आलोच्यन्ते। भ्वादिगणस्य प्रायः सर्वाणि सूत्राणि अन्येषु गणेषु धातूनां रूपाणि साधयितुम् अपेक्षितानि। अतः भ्वादिगणस्य सम्यग् ज्ञानम् नूनम् अर्जनीयम्।

भूधातोः लटि लकारे सर्वाणि रूपाणि इति अति विस्तृतं कार्यम्। अतः पाठद्वयम् एकत्रीकृत्य अत्र भूधातोः लटि रूपाणि उपन्यस्यन्ते। ततश्च त्रिषु पाठेषु भूधातोरेव अन्येषु लकारेषु रूपाणि उपन्यस्तानि सन्ति। एवञ्च एतत्प्रकरणोपयोगीनि कानिचन सूत्राणि अस्य पाठद्वयस्य अन्ते दत्तानि सन्ति।

इत्थम् पञ्चमपाठात् परं भ्वादिप्रकरणस्य अवशिष्टानि मुख्यानि सूत्राणि प्रदत्तानि सन्ति।



भूधातोः भवति इति रूपसाधनाय बहूनि सूत्राणि आवश्यकानि सन्ति। अतः भवति इति रूपम् एकत्र नोपलभ्यते। तत् बहूषु सूत्रेषु व्यापृतमस्ति। अतः छात्रेण तद् एकत्र कर्तव्यम्।



## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- तिङन्तप्रकरणस्य सूत्राणि बुध्यात्।
- धातुरूपाणि साधयितुं प्रभवेत्।
- सूत्राणि व्याख्यातुम् जानीयात्।
- सर्वेषां लकाराणाम् अर्थान् रूपाणि च जानीयात्।
- संस्कृतव्याकरणे कालभेदान् जानीयात्।
- परस्मैपदम् आत्मनेपदम् च किमिति ज्ञास्यति।
- प्रथममध्यमोत्तमान् जानीयात्।
- सार्वधातुकम् आर्धधातुकं च किमिति ज्ञास्यति।
- णोपदेशः षोपदेशः धातुश्च क इति ज्ञास्यति।

## भूधातोः लटि रूपाणि

### [१२.१] लः कर्मणि च भावे चाकर्मकेभ्यः॥ (३.४.६९)

**सूत्रार्थः** - लकाराः सकर्मकेभ्यः धातुभ्यः कर्मणि कर्तरि च स्युः। अकर्मकेभ्यः धातुभ्यः भावे कर्तरि च स्युः।

**सूत्रावतरणम्** - सकर्मकेभ्यः धातुभ्यः कर्मणि कर्तरि च लकारविधानाय अकर्मकेभ्यः धातुभ्यः च भावे कर्तरि च लकारविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। सूत्रेऽस्मिन् षट् पदानि सन्ति। लः कर्मणि च भावे च अकर्मकेभ्यः इति सूत्रगतपदच्छेदः। लः इति प्रथमाबहुवचनान्तम् पदम्। कर्मणि इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। भावे इति सप्तम्यन्तं पदम्। च इति अव्यय पदम्। अकर्मकेभ्यः इति पञ्चम्यन्तं पदम्। अत्र धातोः इति पञ्चम्यन्तम् पदम् अधिकृतम्। सूत्रेऽस्मिन् वाक्यद्वयम् अस्ति। वाक्यद्वयेऽपि चकारेण कर्तरि कृत् इति सूत्रात् कर्तरि इति सप्तम्यन्तं पदम् अनुकृष्यते।

प्रथमं वाक्यम् - धातोः लः कर्मणि कर्तरि च इति। अकर्मकधातोः कर्मणि लकारविधानं न सम्भवति। अत इदं सकर्मकधातुविषयकम्। तेन लः अर्थात् लकाराः सकर्मकधातुभ्यः कर्मणि कर्तरि च भवन्तीति प्रथमवाक्यार्थः।



द्वितीयं वाक्यम् - धातोः भावे कर्तरि च अकर्मकेभ्यः इति। धातोः इत्यस्य विशेषणानुरोधेन बहुवचनान्ततया विपरिणामः क्रियते। तेन अर्थः भवति - अकर्मकेभ्यः धातुभ्यः भावे कर्तरि च लकाराः भवन्ति इति। अत्र भावशब्दस्यार्थः क्रिया एव।

यस्य सकर्मकधातोः कर्म वाक्ये नास्ति स धातुः अविवक्षितकर्मकः कथ्यते। अतः तस्मात् धातोः अपि लकाराः भावे कर्तरि च भवन्ति।

लकारस्य विधानं कर्तरि कर्मणि, कर्तरि भावे च सम्भवति। धातोः परं कदा कर्तरि लकारः विधेयः कदा वा कर्मणि इत्यादिविवेकः तु वक्त्रा कर्तव्यः। वाक्यरचनाकर्ता स्वविवक्षया एव कस्मिन्नर्थे लकारप्रयोगः इति चिन्तयति। अतः विवक्षा एव अत्र विनिगमना।

कर्तरि लकारः विधीयते इति वाक्यस्यार्थो भवति कर्त्रर्थे लकारः विधीयते इति। अत्र कर्तरि कर्मणि भावे इति सप्तम्यन्तानि पदानि। तेषाम् अर्थाः तु कर्त्रर्थे कर्मार्थे भावार्थे इति भवति। एवमेव अग्रे वर्तमाने लट् इत्यत्र वर्तमानार्थे लट् इत्यादिकम् बोध्यम्।

**सकर्मकः अकर्मकः च धातुः -**

यस्य धातोः कर्म सम्भवति स धातुः सकर्मकः कथ्यते। यस्य कर्म न सम्भवति स धातुः अकर्मकः कथ्यते। धातोः फलं व्यापारः चेति अर्थद्वयम्। तत्र व्यापारः हि क्रिया। अयं व्यापारः फलजनकः भवति। अतः फलानुकूलः व्यापारः कथ्यते। व्यापारस्य आश्रयः एकम् कारकम् भवति। फलस्य आश्रयः अपि एकम् कारकं भवति। यस्य धातोः फलम् एकस्मिन् कारके वर्तते, व्यापारः अपरस्मिन् कारके वर्तते, स धातुः सकर्मकः कथ्यते। यस्य धातोः फलम् यस्मिन् कारके वर्तते, व्यापारः अपि तस्मिन्नेव कारके वर्तते स धातुः अकर्मकः कथ्यते।

यथा तक्षा कुठारेण काष्ठं छिनत्ति। अस्मिन् उदाहरणे कुठारस्य उद्यमन-निपातनरूपं व्यापारं तक्षा करोति। तक्षाणं विना अयं व्यापारः विरतः भवति। अतः व्यापारः तक्षणि वर्तते। व्यापारेण जायमानं छेदनरूपं फलम् तु काष्ठे वर्तते। अतः व्यापारः तक्षणि, फलं काष्ठे इति फलव्यापारयोः आश्रयौ भिन्नौ। अतः छिद्-धातुः सकर्मकः।

रामः तिष्ठति। अत्र स्थाधातोः गतिनिवृत्तिः अर्थः। गतिविरामः फलम्। तदनुकूलः च व्यापारः स्थितिरूपः। उभयमपि रामे एव वर्तते। अतः फलव्यापारयोः आश्रयौ न भिन्नौ अपि तु राम एक एव। अतः स्थाधातुः अकर्मकः।

अकर्मक-सकर्मकधातुविषये केचित् प्रसिद्धाः श्लोकाः -

**कर्तृ-कर्म-क्रिया-युक्तः प्रयोगः स्यात् सकर्मकः।**
**अकर्मकः कर्मशून्यः कर्मद्वन्द्वो द्विकर्मकः।।**

**क्रियापदं कर्तृपदेन युक्तं व्यपेक्षन्ते यत्र किमित्यपेक्षाम्।**
**सकर्मकं तं सुधियो वदन्ति शेषस्ततो धातुरकर्मकः।।**

अकर्मकधातुगणः -

टिप्पणी





**लज्जा-सत्ता-स्थिति-जागरणं वृद्धि-क्षय-भय-जीवनमरणम्।**
**शयन-क्रीडा-रुचि-दीप्त्यर्थं धातुगणं तमकर्मकमाहुः।।**

कारिकोक्तार्थानाम् वाचकाः धातवः अकर्मकाः भवन्ति।

**लकाराः -**

ल् इति वर्णानन्तरम् माहेश्वरसूत्रक्रमेण अ इ उ ऋ ए ओ इति षड् वर्णाः योजनीयाः। ततः ट् इति वर्णः योजनीयः। तदा लट् लिट् लुट् लृट् लेट् लोट् इति षट् शब्दाः लभ्यन्ते। एते लकाराः कथ्यन्ते। एषु अन्तिमः टकारः हलन्त्यम् इति सूत्रेण इत्संज्ञकः भवति। अत एते टित्-लकाराः अपि कथ्यन्ते।

ल् इति वर्णानन्तरम् माहेश्वरसूत्रक्रमेण अ इ उ ऋ इति चत्वारः वर्णाः योजनीयाः। ततः ङ् इति वर्णः योजनीयः। तदा लङ् लिङ् लुङ् लृङ् इति चत्वारः शब्दाः लभ्यन्ते। एते लकाराः कथ्यन्ते। एषु अन्तिमः ङकारः हलन्त्यम् इति सूत्रेण इत्संज्ञकः भवति। अत एते ङित्-लकाराः अपि कथ्यन्ते।

टित् षट् , ङित् चत्वारः इति दश लकाराः भवन्ति। तेषु लेट् लकारः वेदे एव प्रयुज्यते। अस्मिन् पाठ्यक्रमे वैदिकप्रकरणं नास्ति। अतः लेट्-लकारस्य रूपाणि न प्रदर्श्यन्ते। अतः नव लकाराः अवशिष्यन्ते। तत्रापि पुनः लिङ्-लकारस्य विधिलिङ् आशीर्लिङ् इति भेदद्वयम् भवति। एवम् आहत्य दश लकाराः भवन्ति।

तदेवात्र तालिकायां प्रदर्श्यते।

| लकारः | | | | अर्थः | विधायकं सूत्रम् |
|---|---|---|---|---|---|
| ल् | + | अ | + ट् = | लट् | वर्तमाने | वर्तमाने लट् |
| ल् | + | इ | + ट् = | लिट् | अनद्यतनपरोक्षभूते | परोक्षे लिट् |
| ल् | + | उ | + ट् = | लुट् | अनद्यतनभविष्यति | अनद्यतने लुट् |
| ल् | + | ऋ | + ट् = | लृट् | भविष्यति | लृट् शेषे च |
| ल् | + | ए | + ट् = | लेट् | वेदे एव प्रयुक्तः | लिङर्थे लेट् |
| ल् | + | ओ | + ट् = | लोट् | विध्याद्यर्थेषु | लोट् च। आशिषि लिङ्लोटौ। |
| | | | | | | |
| ल् | + | अ | + ङ् = | लङ् | अनद्यतनभूते | अनद्यतने लङ् |
| ल् | + | इ | + ङ् = | लिङ् | विध्याद्यर्थेषु | विधिनिमन्त्रणामत्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् |
| ल् | + | इ | + ङ् = | लिङ् | आशीर्वादार्थे | आशिषि लिङ्लोटौ |
| ल् | + | उ | + ङ् = | लुङ् | सामान्यभूते | लुङ् |
| ल् | + | ऋ | + ङ् = | लृङ् | क्रियातिपत्तौ | लुङ्निमित्ते लृङ् क्रियातिपत्तौ। भूते च। |



**लकारबोधिका कारिका -**

**लट् वर्तमाने लेट् वेदे भूते लुङ्-लङ्-लिटस्तथा।**
**विध्याशिषास्तु लिङ्लोटौ लुट्-लृट्-लृङ् च भविष्यति।।**

**उदाहरणम् -**

पठ्-धातुः **सकर्मकः** - रामः वेदं पठति इत्यत्र पठ्-धातुतः लकारः कर्तरि विहितः अस्ति।

रामेण वेदः पठ्यते इति वाक्ये पठ्-धातुतः लकारः कर्मणि विहितः अस्ति।

रामः तिष्ठति इति वाक्ये स्थाधातुः **अकर्मकः**। तस्मात् धातोः लकारः कर्तरि विहितः अस्ति।

रामेण स्थीयते इति वाक्ये स्था-धातुतः लकारः भावे विहितः अस्ति।

रामः खादति इति अस्मिन् वाक्ये कर्म उल्लिखितं नास्ति। अतः खाद्-धातुः अत्र **अविवक्षितकर्मकः** अस्ति। अत्र खाद्-धातोः लकारः कर्तरि विहितः अस्ति।

रामेण खाद्यते इति अस्मिन् वाक्ये कर्मणः उल्लेखो नास्ति। अतः खाद्-धातुः अविक्षितकर्मकः। अतः अत्र खाद्-धातोः लकारः भावे विहितः अस्ति।

## [१२.२] वर्तमाने लट्॥ (३.२.१२३)

**सूत्रार्थः -** वर्तमानक्रियावृत्तेः धातोः लट् स्यात्।

**सूत्रव्याख्या -** इदम् विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयमस्ति। वर्तमाने इति सप्तम्यन्तं पदम्। लट् इति प्रथमान्तं पदम्।

धातोः इति अधिकृतमस्ति। प्रत्ययः (३.१.१), परश्च (३.१.२) सूत्रद्वयम् अत्र अधिकृतम्। सूत्रमिदं प्रत्ययाधिकारे पठितम्। तस्मात् लट् इति प्रत्ययः। धातोः इति पञ्चम्यन्तं पदम्। तस्मादित्युत्तरस्य इति परिभाषाप्रभावेण परश्च इति सूत्रबलेन च लट् धातोः अव्यवहितः परः विधीयते। एवञ्च सूत्रार्थो भवति - वर्तमाने अर्थे विद्यमानाद् धातोः अव्यवहितः परः लट् प्रत्ययः भवति।

अत्र इदम् अवधेयम् - यो भूतकालो नास्ति, यो भविष्यत्कालो नास्ति स वर्तमानकालः। कापि क्रिया बहूनां लघुव्यापाराणां समुदायः भवति। अर्थात् एकस्याः क्रियायाः नैके अवयवाः सम्भवन्ति। यस्याः क्रियायाः प्रथमः अवयवः कृतः अस्ति, परन्तु अन्तिमः अवयवः अवशिष्टः अस्ति सा क्रिया वर्तमानकालिकी क्रिया इनिर्गुण ब्रह्मति कथ्यते। यथा पाकक्रियायाः नैके अवयवाः। तण्डुलशोधनं पात्रस्थापनम् अग्निप्रज्वालनम् इत्यादयः। तेषु यः प्रथमावयवः कल्पितः स यदि कृतः अस्ति किञ्च अन्तिमः अवयवः यथा अग्निनिर्वापः अथवा पात्रस्य अवनामः इति यदि एतावता न कृतः तर्हि पाकक्रिया वर्तमानकालिकी क्रिया।

धातोः अर्थः व्यापारः फलं चेति उक्तमेव। यस्य धातोः अर्थः व्यापारः अर्थात् क्रिया वर्तमानकाले वर्तते स धातुः वर्तमानक्रियावृत्तिः कथ्यते। वर्तमाने (काले) क्रियायाः वृत्तिः यस्य स





वर्तमानक्रियावृत्तिः धातुः। यदि वर्तमाने काले क्रिया वर्तते इति प्रकटनस्य विवक्षा अस्ति तर्हि धातोः लट् विधीयते।

एवं सूत्रस्य निष्कृष्टार्थः भवति - वर्तमानक्रियावृत्तित्वविवक्षायां धातोः लट् भवति।

लट् इत्यस्य टकारस्य हलन्त्यम् (१.३.३) इति सूत्रेण एवञ्च अकारस्य उपदेशेऽजनुनासिक इत् (१.३.२) इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इत्यनेन तयोः लोपः भवति। लशक्वतद्धिते (१.३.८) इति सूत्रेण लस्य इत्-संज्ञा प्राप्ता। किन्तु लस्यापि यदि इत्-संज्ञा स्यात् तर्हि तस्य लोपः इति सूत्रेण लकारस्य लोपः प्रसज्येत। तदा तु लट् इति समग्रस्य उच्चारणम् व्यर्थताम् आपद्येत। परन्तु पाणिनिमुनेः किमपि उच्चारणं न व्यर्थम्। अतः उच्चारणसामर्थ्यात् लस्य इत्संज्ञा न भवति।

**उदाहरणम् -** पाणिनिमुनिप्रणीते धातुपाठे भू इति आद्यः धातुः। तस्य अर्थः सत्ता उत्पत्तिः च। सत्ता हि आत्मधारणम् तदनुकूलः व्यापारश्च। वर्षा भवति इति उदाहरणम्। यदा वर्षायाः अर्थात् वृष्टेः वर्षणरूपः व्यापारः वर्तमाने काले वर्तते, प्रवर्तते इति विवक्षा अस्ति तर्हि भूधातुतः लट् लकारः विधीयते वर्तमाने लट् इति सूत्रेण। भूधातुः अकर्मकः। अतः तस्मात् परं लकारः कर्तरि भावे च भवितुम् अर्हति। तदा कस्मिन्नर्थे लकारः विधेयः इत्यत्र विवक्षा एव नियामिका। अत्र दशगणी इति प्रकरणे सदा कर्तरि एव लकारः विधीयते प्रदर्श्यते च। कर्मणि भावे च विधानार्थम् अग्रे भावकर्मप्रकरणम् अस्ति। अतः अत्र भूधातुतः लट् लकारः कर्तरि विधीयते।

लट् इति लकारे अकारटकारौ इत्संज्ञकौ इति उक्तमेव। पाणिनिमुनिः लट् इति सूत्रे उच्चारितवान्। अतः लट् उपदेशः। धातोः उत्तरम् लटः योजनकाले एव अकारटकारयोः लोपः कर्तव्यः। तेन भू ल् इति स्थितिः जायते। कदापि भू लट् इति स्थितिः न प्रकटनीया।

### कालादिविचारः -

कालस्य वर्तमानकालः भविष्यत्कालः भूतकालः चेति विभागत्रयं भवति। भविष्यत्कालस्य अद्यतनभविष्यत्कालः अनद्यतनभविष्यत्कालः इति प्रकारद्वयम्। भूतकालस्यापि अद्यतनभूतकालः अनद्यभूतकालः इति प्रकारद्वयम्। सर्वा अपि भविष्यत्कालिकाः क्रियाः भूते वर्तमाने वा इन्द्रियगोचराः न भवन्ति। अतः भविष्यत्कालिकाः क्रियाः परोक्षाः एव भवन्ति वर्तमानक्षणे। भूतकालिकाः काश्चन क्रिया वक्तुः इन्द्रियगोचराः भवन्ति। काश्चन च न भवन्ति। यासाम् क्रियाणाम् वक्ता इन्द्रियार्थसन्निकर्षवशात् स्वयम् अनुभवं करोति ताः क्रियाः प्रत्यक्षाः। यासां न करोति ताः क्रियाः परोक्षाः। अनद्यतनभूतकालिका परोक्षा क्रिया प्रकटनीया चेत् तद्वाचकाद् धातोः लिट् लकारः विधीयते। अनद्यतनभूतकालिका क्रिया प्रकटनीया चेत् तद्वाचकाद् धातोः लङ् लकारः प्रयुज्यते। अतीतकालिका कापि क्रिया प्रकटनीया चेत् तद्वाचकाद् धातोः लुङ् लकारः विधीयते। यदि अद्यतनभविष्यत्काकिला क्रिया प्रकटनीया तर्हि लृट् लकारः प्रयोक्तव्यः। यदि अनद्यतनभविष्यत्कालिका क्रिया प्रकटनीया तर्हि तद्वाचकाद् धातोः लुट् लकारः प्रयुज्यते।

समेषामपि लकाराणां कालवाचकाः प्रेरणादिवाचकाः इति भागद्वयं भवति। लट् लिट् लुट् लृट् लङ् लुङ् लृङ् चेति लकाराः कालवाचकाः। लोट् लिङ् चेति लकारद्वयं प्रेरणादिवाचकम्। तत्र लट्

वर्तमानकालस्य वाचकः। लिट् लङ् लुङ् चेति भूतकालस्य वाचकाः। लुट् लृट् चेति भविष्यत्कालस्य वाचकौ। लृङ् क्रियायाः अनिष्पत्तौ प्रयुज्यते भूते भाविनि च काले।

एते एव विभागाः संक्षेपेण अधः तालिकायां प्रदर्शिताः सन्ति।

| **भूतकालः** | | | **वर्तमान-कालः** | **भविष्यत्-कालः** | | |
|---|---|---|---|---|---|---|
| अनद्यतन- | गतरात्रौ १२ वादनम् | अद्यतन- | | अद्यतन- | आगामिरात्रौ १२ वादनम् | अनद्यतन- |
| परोक्ष – लिट् | | लुङ् | लट् | लृट् | | लुट् |
| लङ् | | सर्वभूते | | | | |

लकाराणां कदा कस्मिन्नर्थे प्रयोगः इति प्रकाशिके कारिके -

**वर्तमाने परोक्षे श्वोभाविन्यर्थे भविष्यति।**
**विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः।।**

**ह्योभूते प्रेरणादौ च भूतमात्रे लङादयः।**
**सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः।।**

इत्थम् भूधातोः कर्तृविवक्षायाम् वर्तमाने लट् इति सूत्रेण लटि अनुबन्धलोपे भू-ल् इति स्थितिः जायते। तदा - (अग्रिमे सूत्रे द्रष्टव्यम्।)



## पाठगतप्रश्नाः-१

१. लः कर्मणि चेति सूत्रे वाक्यद्वयं किम्।

२. सकर्मकधातोः लक्षणं किम्।

३. अकर्मकधातोः लक्षणं किम्।

४. कति लकाराः।

५. कति टिल्लकाराः।

६. कति ङिल्लकाराः।

७. कः लकारः वेदे एव प्रयुज्यते।

८. कः धातुः वर्तमानक्रियावृत्तिः कथ्यते।

९. धातुपाठे प्रथमः धातुः कः।



१०. यद्धात्वर्थः व्यापारः वर्तमानकाले वर्तते इति प्रकटनाय तद्धातोः परं कः लकारः विधीयते। केन च सूत्रेण।

## [१२.३] तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातञ्झ-थासाथांध्वम्-इड्वहिमहिङ्॥ (३.४.७८)

**सूत्रार्थः** - तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-त-आताम्-झ-थास्-आथाम्-ध्वम्-इट्-वहि-महिङ् इति एते अष्टादश लस्य स्थाने आदेशाः स्युः।

**सूत्रव्याख्या** - सूत्रमिदम् विधिसूत्रम्। अस्मिन् सूत्रे एकमेव पदमस्ति। तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-त-आताम्-झ-थास्-आथाम्-ध्वम्-इट्-वहि-महिङ् इति प्रथमान्तं पदम्। अस्मिन् पदे १८ शब्दस्वरूपाणि सन्ति। अत्र समाहारद्वन्द्वसमासः। अतः एकवचनम् अस्ति। लस्य इति षष्ठ्यन्तम् पदम् अधिकृतमस्ति। स्थानषष्ठी इयम्। अतः लकारस्य स्थाने इति अर्थो लभ्यते। ततश्च सूत्रार्थः भवति - तिप् तस् झि सिप् थस् थ मिप् वस् मस् त आताम् झ थास् आथाम् ध्वम् इट् वहि महिङ् इति एते अष्टादश लस्य स्थाने आदेशाः स्युः इति। सूत्रमिदम् प्रत्ययाधिकारे पठितम्। तस्मात् एतानि शब्दस्वरूपाणि प्रत्ययसंज्ञकानि भवन्ति। स्थाने यो विधीयमानः स आदेशः कथ्यते। अतः एते १८ आदेशाः इति सन्ति। एवञ्च एते लकारस्य स्थाने विधीयन्ते। अतः एते लादेशाः कथ्यन्ते। महिङ् इति अन्तिमप्रत्ययस्य ङ् इत्यनेन सह तिप् इति प्रथमप्रत्ययस्य ति इति उच्चार्यमाणः तिङ् इति प्रत्याहारः भवति। स सर्वेषाम् १८ प्रत्ययानाम् बोधको भवति। अयमेव तिङ् अन्ते यस्य तत् तिङन्तं पदं भवति।

**उदाहरणम्** - भू ल् इति स्थितिः पूर्वम् वर्णिता। अत्र लस्य स्थाने १८ आदेशाः प्रकृतसूत्रेण विधीयन्ते। ते च धातोः अव्यवहितपरम् एव निवेशनीयाः। भूधातोः परम् लस्य स्थाने एकदा एक एव आदेशः निवेशयितुं शक्यः। एककालं १८ प्रत्ययाः किञ्च अव्यवहितपराः इति नैव सम्भवति। अतः युगपत् १८ प्रत्ययाः प्रयोक्तुं न शक्यन्ते, परन्तु एकैकः पर्यायेण प्रयोक्तुं शक्यते। तदा कः प्रत्ययः कस्मै प्रयोजनाय प्रयोक्तव्यः इति विवेकाय अग्रिमाणि सूत्राणि आयान्ति।

## [१२.४] लः परस्मैपदम्॥ (१.४.९८)

**सूत्रार्थः** - लादेशाः परस्मैपदसंज्ञाः स्युः।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् द्वे पदे स्तः। लः (६/१), परस्मैपदम् (१/१)। लः इति सम्बन्धस्य अनुयोगिविरहात् स्थानषष्ठी। तेन लस्य स्थाने इति लभ्यते। स्थाने आदेशाः भवन्ति। अतः आदेशाः इति पदस्य अध्याहारः क्रियते। सूत्रार्थो भवति - लादेशाः परस्मैपदसंज्ञाः भवन्ति इति। अर्थात् लस्य स्थाने तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातञ्झ-थासाथांध्वम्-इड्वहिमहिङ्। (३.४.७८) इति सूत्रेण प्राप्ताः १८ आदेशाः परस्मैपदसंज्ञां लभन्ते।



## [१२.५] तङानावात्मनेपदम्॥ (१.४.९९)

**सूत्रार्थः** - तङ्-प्रत्याहारः शानच्-कानचौ च आत्मनेपदसंज्ञाः स्युः।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। तङानौ (१/२), आत्मनेपदम् (१/१)। लः परस्मैपदम् इति सूत्रात् लः इति षष्ठ्येकवचनान्तं पदम् अनुवर्तते। लः इति स्थानषष्ठी। अतः लस्य स्थाने इति अर्थः लभ्यते।

तङ् च आनः च तङानौ इति इतरेतरयोगद्वन्द्वसमासः। तङ् इति प्रत्याहारः। तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातञ्झ-थासाथांध्वम्-इड्वहिमहिङ्। (३.४.७८) इति सूत्रे ताताञ्झ इति अत्र त आताम् झ इति छेदः। अत्र त इति प्रत्ययः अस्ति। स महिङ् इति अन्तिमप्रत्ययस्य अन्त्येन इता ङकारेण सह उच्चारितः चेत् तङ् इति प्रत्याहारः निष्पद्यते। तस्य अर्थः - त आताम् झ थास् आथाम् ध्वम् इट् वहि महिङ् इति नव प्रत्ययाः।

आनः इति पदे आन इत्यंशः वर्तते। तदात्मकः यः प्रत्ययः सः आन इति शब्देन बोध्यः। व्याकरणे शानच् कानच् चानश् इति त्रयः प्रत्ययाः सन्ति। एषु आन इत्यंशः अस्ति। तत्र शानच् कानच् इति एतौ एव धातोः विधीयेते। चानश् तद्धितप्रत्ययः, अतः धातोः न विधीयते। स लस्य स्थाने न विधीयते। शानच् कानच् एतौ एव लस्य स्थाने विधीयेते। अतः आन इत्यनेन शानच् कानच् इति एतौ अत्र गृह्येते। परन्तु सूत्रे आन इति उक्तम्। अत्र प्रत्ययः तु शानच् कानच् चेति। कथम् आन इत्यनेन अनयोः ग्रहणम्। तत्रोच्यते यद् आन इति अनुबन्धरहितम् उच्चारणम्। यदा अनुबन्धरहितस्य उच्चारणं क्रियते तदा तेन अनुबन्धसहितस्य ग्रहणं कर्तव्यमिति। तथाहि परिभाषा - निरनुबन्धकग्रहणे सानुबन्धकस्य इति।

सूत्रार्थो भवति - लस्य स्थाने जायमानः तङ् प्रत्याहारः शानच्-कानचौ च आत्मनेपदसंज्ञाः स्युः। तिङ्-प्रत्याहारे तङ् अन्तर्भवति। तिङाम् परस्मैपदसंज्ञा विहिता एव। तेषु नवानाम् तङाम् अनेन प्रकृतसूत्रेण आत्मनेपदसंज्ञा प्राप्ता। आकडारादेका संज्ञा इति अधिकारे एतानि सूत्राणि। अतः पूर्वसंज्ञां बाधित्वा प्रकृतसूत्रेण तङः आत्मनेपदसंज्ञा विधीयते। एवञ्च पारिशेष्यात् तिप् तस् झि सिप् थस् थ मिप् वस् मस् इति एतेषां नवानां परस्मैपदसंज्ञा। त आताम् झ थास् आथाम् ध्वम् इट् वहि महिङ् इति नवानाम् एवञ्च शानच् कानच् इति एतयोः च आत्मनेपदसंज्ञा फलति।

या या संज्ञा सा सा फलवती। अतः कृतानाम् आत्मनेपदादिसंज्ञानां किम् फलमिति निर्णयाय अग्रिमाणि त्रीणि सूत्राणि आयान्ति।



## पाठगतप्रश्नाः-२

११. लादेशाः कति के च।

१२. केषां परस्मैपदसंज्ञा।

१३. केषाम् आत्मनेपदसंज्ञा।



१४. परस्मैपदसंज्ञाविधायकं सूत्रं किम्।

१५. आत्मनेपदसंज्ञाविधायकं सूत्रं किम्।

१६. निरनुबन्धकग्रहणे सानुबन्धकस्य इति परिभाषार्थः कः।

## [१२.६] अनुदात्तङित आत्मनेपदम्॥ (१.३.१२)

**सूत्रार्थः** - अनुदात्तेतो ङितश्च धातोः आत्मनेपदं स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। इदं सूत्रम् आत्मनेपदसंज्ञकानाम् प्रत्ययानाम् धातोः विधानं करोति। अस्मिन् सूत्रे द्वे पदे स्तः। अनुदात्तङितः आत्मनेपदम् इति सूत्रगतपदच्छेदः। अनुदात्तङितः (५/१), आत्मनेपदम् (१/१)। भूवादयो धातवः इति सूत्रात् धातवः इति पदम् अनुवर्तते। तस्य पञ्चम्यन्ततया विपरिणामो भवति। तेन धातोः इति लभ्यते। अनुदात्तश्च ङ् च इति अनुदात्तङौ इति इतरेतरयोगद्वन्द्वसमासः। अनदात्तङौ इतौ यस्य सः अनुदात्तङित्। तस्य अनुदात्तङितः इति। **द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते** इति नियमः। अर्थात् द्वन्द्वसमासस्य आदौ मध्ये अन्ते वा विद्यमानम् द्वन्द्वसमासस्य अनङ्गभूतम् पदम् द्वन्द्वसमासे विद्यमानैः पदैः प्रत्येकम् अभिसम्बध्यते, अन्वेति इति। इत् इति पदं द्वन्द्वसमासस्य अवयवः नास्ति, किन्तु द्वन्द्वसमासस्य अन्ते अस्ति। अतः तस्य अनुदात्त इति ङ् इति द्वाभ्याम् शब्दाभ्याम् अभिसम्बन्धः अर्थात् अन्वयः भवति। एवञ्च अनुदात्तेत् इति ङित् इति च निष्पद्यते। लस्य स्थाने तिङ् विधीयते। आत्मनेपदम् तिङ् एव। अतः लस्य इति षष्ठ्येकवचनान्तं पदम् आक्षिप्यते। तदा पदयोजना - अनुदात्तेतः ङितः च धातोः लस्य आत्मनेपदम् इति। सूत्रार्थो भवति - अनुदात्तेतो ङितश्च धातोः लस्य स्थाने आत्मनेपदं विधेयम्। अर्थात् यस्य धातोः अनुदात्तः अच् इत् अस्ति सः अनुदात्तेत्, यस्य धातोः ङकारः इत् अस्ति स ङित्। एवम् अनुदात्तेत् ङित् यदि धातुः स्यात् तर्हि तस्मात् परस्य लस्य स्थाने आत्मनेपदनामकाः प्रत्ययाः आदेशत्वेन विधेयाः इति।

**उदाहरणम्** - एधँ वृद्धौ। कमुँ कान्तौ। यतीँ प्रयत्ने इत्यादयः अनुदात्तेतः धातवः। शीङ् स्वप्ने इत्यादयः ङितः धातवः। अनुदात्तेत्त्वम् ङित्त्वम् इति ईदृशानि आत्मनेपदविधानस्य धातौ विद्यमानानि निमित्तानि। ईदृशधातोः आत्मनेपदनामकाः प्रत्ययाः विधेयाः।

## [१२.७] स्वरितञितः कर्त्रभिप्राये क्रियाफले॥ (१.३.७२)

**सूत्रार्थः** - स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण आत्मनेपदं विधीयते। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। स्वरितञितः (५/१), कर्त्रभिप्राये क्रियाफले चेति पदद्वयं सप्तम्यन्तम्।

अनुदात्तङित आत्मनेपदम् इति सूत्रात् आत्मनेपदम् इति पदमनुवर्तते। भूवादयो धातवः इति सूत्रात् धातवः इति पदम् अनुवर्तते। तस्य पञ्चम्यन्ततया विपरिणामो भवति। तेन धातोः इति लभ्यते।



स्वरितः च ञ् च इति स्वरितञौ इति इतरेतरयोगद्वन्द्वसमासः। स्वरितञौ इतौ यस्य स स्वरितञित् इति बहुव्रीहिसमासः। तस्य स्वरितञितः इति। **द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते** इति नियमः। अर्थात् द्वन्द्वसमासस्य आदौ मध्ये अन्ते वा विद्यमानम् द्वन्द्वसमासस्य अनवयवभूतम् पदम् द्वन्द्वसमासे विद्यमानैः पदैः प्रत्येकम् अभिसम्बध्यते, अन्वेति इति। इत् इति पदं द्वन्द्वसमासस्य अवयवः नास्ति, किन्तु द्वन्द्वसमासस्य अन्ते अस्ति। अतः तस्य स्वरित इति ञ् इति द्वाभ्याम् शब्दाभ्याम् अभिसम्बन्धः अर्थात् अन्वयः भवति। एवञ्च स्वरितेत् इति ञित् इति च निष्पद्यते।

कर्तारम् अभिप्रैति (गच्छति) इति कर्त्रभिप्रायम्(फलम्)। तस्मिन् कर्त्रभिप्राये। क्रियायाः फलं क्रियाफलम्। तस्मिन् क्रियाफले इति षष्ठीतत्पुरुषः समासः। पदयोजना भवति - स्वरितेतः ञितः धातोः आत्मनेपदं भवति कर्त्रभिप्राये क्रियाफले। क्रियायाः फलं कर्ता प्राप्नोति चेत् ईदृशधातोः आत्मनेपदं विधेयम्। अत्र क्रियायाः व्यापारः फलं चेति अर्थद्वयमिति उक्तमेव। परन्तु इदं फलं नात्र अभिप्रेतम्। यतः अस्य फलस्याश्रयः कर्म इति उच्यते। यदि इदं फलं कर्तारं गच्छेत् तर्हि कर्तुः कर्मसंज्ञापत्तिः। अतः यत् प्रयोजनम् उद्दिश्य क्रिया आरभ्यते तत् फलमेवात्र फलपदेन ग्राह्यम्। यथा स्वर्गादिलाभाय यागः आरभ्यते। परन्तु पुरोहितः तु दक्षिणालाभाय यागं करोति। यजमानस्य स्वर्गः फलम्। पुरोहितस्य दक्षिणा फलम्। अत्र स्वर्गः एव फलम् अत्र फलपदेन ग्राह्यम्। अत्र स्वर्गः एव फलम् यदि यज्ञकर्तारं प्रति गच्छति तर्हि इदं कर्त्रभिप्रायं क्रियाफलम्। एवं सति यज्-धातोः आत्मनेपदस्य विधानं भवति।

लस्य स्थाने तिङ् विधीयते। आत्मनेपदम् तिङ् एव। अतः लस्य इति षष्ठ्येकवचनान्तं पदम् आक्षिप्यते। सूत्रार्थो भवति - स्वरितेतः ञितः च धातोः लस्य स्थाने आत्मनेपदं विधेयम् कर्तृगामिनि क्रियाफले। अर्थात् यस्य धातोः स्वरितः अच् इत् अस्ति सः स्वरितेत्, यस्य धातोः ञकारः इत् अस्ति स ञित्। एवम् स्वरितेत् ञित् वा यदि धातुः स्यात् तर्हि तस्मात् परस्य लस्य स्थाने आत्मनेपदनामकाः प्रत्ययाः आदेशत्वेन विधेयाः इति यदि क्रियायाः फलं कर्ता प्राप्नोति।

**उदाहरणम् -** डुपचँस् पाके, यजँ देवपूजासंगतिकरणदानेषु इत्यादयः स्वरितेतः धातवः। डुकृञ् करणे णीञ् प्रापणे इत्यादयः ञितः धातवः। यजँ इत्यत्र अँकारः अनुनासिकः। अतः उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञकः भवति। स च अँकारः स्वरितः अपि अस्ति। अतः यजधातुः स्वरितेत्। एवमन्यत्रापि। ईदृशानि आत्मनेपदविधानस्य धातौ विद्यमानानि निमित्तानि। ईदृशधातोः आत्मनेपदनामकाः प्रत्ययाः विधेयाः।

## [१२.८] शेषात् कर्तरि परस्मैपदम्॥ (१.३.७८)

**सूत्रार्थः** - आत्मनेपदनिमित्तहीनाद् धातोः कर्तरि परस्मैपदं स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण परस्मैपदस्य विधिः क्रियते। अस्मिन् त्रीणि पदानि सन्ति। शेषात् कर्तरि परस्मैपदम् इति सूत्रगतपदच्छेदः। शेषात् (५/१), कर्तरि (७/१), परस्मैपदम् (१/१)। उक्ताद् अन्यः शेषः। किं किम् उक्तम्। आत्मनेपदप्रत्ययस्य विधानस्य निमित्तानि उक्तानि। अनुदात्तङित आत्मनेपदम् (१.३.१२) इति सूत्रम् आरभ्य विभाषोपपदेन प्रतीयमाने (१.३.७७) इति सूत्रं यावत् आत्मनेपदप्रत्ययविधानस्य बहूनि निमित्तानि उक्तानि। तानि निमित्तानि यस्य धातोः न सन्ति स



धातुः आत्मनेपदनिमित्तेन हीनः। स एव शेषः। एवञ्च आत्मनेपदनिमित्तहीनाद् धातोः परस्मैपदसंज्ञकः तिङ् विधीयते। परस्मैपदम् तिङ् एव। अतः लस्य इति षष्ठ्येकवचनान्तं पदम् आक्षिप्यते। एवञ्च ईदृशात् आत्मनेपदनिमित्तहीनाद् धातोः लस्य स्थाने कर्त्रर्थे परस्मैपदस्य विधानं प्रकृतं सूत्रं करोति। तथाहि सूत्रार्थः - आत्मनेपदनिमित्तहीनाद् धातोः परस्य लस्य स्थाने कर्तरि परस्मैपदं स्यात्।

**उदाहरणम्** - भू इति धातौ आत्मनेपदस्य किमपि निमित्तं नास्ति। अतः भूधातुः आत्मनेपदनिमित्तहीनः। अतः शेषः। अत एव भूधातोः परस्य लस्य स्थाने परस्मैपदं कर्त्रर्थे विधीयते।

अत्र धातोः परं लस्य स्थाने ९ परस्मैपदसंज्ञकाः आदेशाः प्रकृतसूत्रेण विधीयन्ते। ते च अव्यवहितपरम् एव निवेशनीयाः। धातोः परम् लस्य स्थाने एकदा एक एव आदेशः निवेशयितुं शक्यः। एककालं ९ प्रत्ययाः किञ्च अव्यवहितपराः इति नैव सम्भवति। अतः युगपत् ९ प्रत्ययाः प्रयोक्तुं न शक्यन्ते। परन्तु एकैकः पर्यायेण प्रयोक्तुं शक्यते। तदा कः प्रत्ययः कस्मै प्रयोजनाय प्रयोक्तव्यः इति विवेकाय अग्रिमाणि सूत्राणि आयान्ति।

## [१२.९] तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः॥ (१.४.१००)

**सूत्रार्थः** - तिङः आत्मनेपद-परस्मैपदयोः त्रयः त्रिकाः क्रमाद् प्रथममध्यमोत्तमसंज्ञाः स्युः।

**सूत्रव्याख्या** - संज्ञासूत्रम्। अनेन सूत्रेण प्रथमः मध्यमः उत्तमः इति संज्ञात्रयं विधीयते। अत्र सूत्रे चत्वारि पदानि सन्ति। तिङः त्रीणि त्रीणि प्रथममध्यमोत्तमाः इति सूत्रगतपदच्छेदः। तिङः (६/१), त्रीणि (१/३), त्रीणि (१/३), प्रथममध्यमोत्तमाः (१/३)। लः परस्मैपदम् इति सूत्रात् परस्मैपदम् इति प्रथमान्तं पदमनुवर्तते। षष्ठ्यन्ततया च विपरिणमते। तङानावात्मनेपदम् इति सूत्रात् आत्मनेपदमिति पदमनुवर्तते। षष्ठ्यन्ततया च विपरिणमते। प्रथमः च मध्यमः च उत्तमः चेति प्रथममध्यमोत्तमाः इति इतरेतरयोगद्वन्द्वसमासः। तदा पदयोजना भवति - तिङः परस्मैपदस्य आत्मनेपदस्य त्रीणि त्रीणि प्रथममध्यमोत्तमाः इति।

परस्मैपदस्य त्रयाणां प्रत्ययानाम् एकम् दलम् इति क्रमेण त्रीणि दलानि भवन्ति। प्रथमः मध्यमः उत्तमः इति संज्ञाः तिस्रः सन्ति। अतः येषां संज्ञा कर्तव्या ते त्रयः सन्ति, संज्ञाः च तिस्रः सन्ति। अतः यथासंख्यमनुदेशः समानाम् इति परिभाषया प्रथमदलस्य प्रथमः इति संज्ञा। द्वितीयदलस्य मध्यमः इति संज्ञा। तृतीयदलस्य उत्तमः इति संज्ञा। तथा च – तिप् तस् झि इत्यस्य प्रथम इति संज्ञा। सिप् थस् थ इत्यस्य मध्यमः इति संज्ञा। मिप् वस् मस् इति दलस्य उत्तमः इति संज्ञा।

आत्मनेपदस्यापि त्रयाणां प्रत्ययानाम् एकमिति दलम् इति क्रमेण त्रीणि दलानि भवन्ति। प्रथमः मध्यमः उत्तमः इति संज्ञाः तिस्रः सन्ति। अतः येषां संज्ञा कर्तव्या ते त्रयः सन्ति, संज्ञाः च तिस्रः सन्ति। अतः यथासंख्यमनुदेशः समानाम् इति परिभाषया प्रथमदलस्य प्रथमः इति संज्ञा। द्वितीयदलस्य मध्यमः इति संज्ञा। तृतीयदलस्य उत्तमः इति संज्ञा। तथा च – त आताम् झ इति दलस्य प्रथम इति संज्ञा। थास् आथाम् ध्वम् इति दलस्य मध्यमः इति संज्ञा। इट् वहि महिङ् इति दलस्य उत्तमः इति संज्ञा।



अधः चतुरश्रे संज्ञाविभागः प्रदर्शितः।

| दलम् | परस्मैपदम् | | | आत्मनेपदम् | | | संज्ञा |
|---|---|---|---|---|---|---|---|
| प्रथमदलम् | तिप् | तस् | झि | त | आताम् | झ | प्रथमः |
| द्वितीयदलम् | सिप् | थस् | थ | थास् | आथाम् | ध्वम् | मध्यमः |
| तृतीयदलम् | मिप् | वस् | मस् | इट् | वहि | महिङ् | उत्तमः |

## [१२.१०] तान्येकवचनद्विवचनबहुवचनान्येकशः॥ (१.४.१०१)

**सूत्रार्थः** - प्रथममध्यमोत्तमसंज्ञानि तिङः त्रीणि त्रीणि वचनानि प्रत्येकम् एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु संज्ञासूत्रमिदम्। अनेन सूत्रेण प्रथममध्यमोत्तमानाम् प्रत्ययानाम् प्रत्येकम् एकवचनद्विवचनबहुवचनसंज्ञाः विधीयन्ते। सूत्रेऽस्मिन् पदत्रयं विद्यते। तानि (१/३), एकवचनद्विवचनबहुवचनानि (१/३) एकवचनम्, द्विवचनम्, बहुवचनञ्चेति एकवचनद्विवचनबहुवचनानि इति इतरेतरयोगद्वन्द्वसमासः। एकशः इति च अव्ययम्। एकशः इत्यस्य प्रत्येकमित्यर्थः। तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः इति सूत्रात् तिङः इति षष्ठ्येकवचनान्तं पदम्, त्रीणि त्रीणि इति प्रथमाबहुवचनान्ते द्वे पदे अनुवर्तन्ते। सूत्रस्थेन तानि इति शब्देन तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः इति पूर्वसूत्रस्थानि त्रीणि त्रीणि परामृश्यन्ते। तानि त्रीणि त्रीणि दलानि इति आहत्य षट् दलानि सन्ति। प्रति दलम् विद्यमानेषु त्रिषु घटकेषु एकैकस्य क्रमशः एकवचनम् द्विवचनं बहुवचनं चेति संज्ञाः भवन्ति।

**तथा चायं सारः -**

परस्मैपदस्य प्रथमं दलम् तिप् तस् झि। एषु तिप् इत्यस्य एकवचनम्, तस् इत्यस्य द्विवचनम्, झि इत्यस्य बहुवचनम् च संज्ञा भवति।

तिङः त्रीणि त्रीणि इत्यत्र त्रीणि इति पदस्य वारद्वयं ग्रहणेन परस्मैपदस्य तथा आत्मनेपदस्य तिङः उभयोः पदयोः ग्रहणं भवति। एवमग्रेऽपि।

कस्य का संज्ञा फलति इति अधः चतुरश्रे प्रदर्शितमस्ति।

| | परस्मैपदम् | | | आत्मनेपदम् | | | |
|---|---|---|---|---|---|---|---|
| | एकवचन | द्विवचन | बहुवचन | एकवचन | द्विवचन | बहुवचन | संज्ञा |
| प्रथमदलम् | तिप् | तस् | झि | त | आताम् | झ | प्रथमः |
| द्वितीयदलम् | सिप् | थस् | थ | थास् | आथाम् | ध्वम् | मध्यमः |
| तृतीयदलम् | मिप् | वस् | मस् | इट् | वहि | महिङ् | उत्तमः |





## पाठगतप्रश्नाः-३

१७. अनुदात्तेतो धातोः कः तिङ् विधीयते।

१८. ङितो धातोः कः तिङ् विधीयते।

१९. आत्मनेपदविधानस्य निमित्तानि किन्निष्ठानि भ्वादिप्रकरणे।

२०. द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते इत्यस्यार्थं लिखत।

२१. आत्मनेपदं कस्य स्थाने विधीयते।

२२. आत्मनेपदविधानस्य निमित्तानि कानि भ्वादिप्रकरणे।

२३. ञितो धातोः आत्मनेपदं कदा विधीयते।

२४. अनुदात्तेतो धातोः उदाहरणम् किम्।

२५. शेषात् कर्तरि परस्मैपदमित्यत्र कः शेषपदार्थः।

२६. प्रथमसंज्ञाविधायकं सूत्रं किम्।

२७. तिङाम् एकवचनादिसंज्ञा केन सूत्रेण।

---

## [१२.११] युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः॥ (१.४.१०४)

**सूत्रार्थः** - लकारवाच्यकारकवाचिनि युष्मदि उपपदे प्रयुज्यमाने अप्रयुज्यमाने च मध्यमः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण मध्यमः विधीयते। अस्मिन् सूत्रे षट् पदानि सन्ति। युष्मदि (७/१), उपपदे (७/१), समानाधिकरणे (७/१) स्थानिनि (७/१), अपि (अव्ययम्), मध्यमः (१/१)। उप समीपे उच्चारितं पदम् उपपदम्। तस्मिन् उपपदे, समीपोच्चारिते इति तदर्थः। समानम् अधिकरणम् (वाच्यम्) यस्य तत् समानाधिकरणम्। तस्मिन् समानाधिकरणे। समानार्थके इति तदर्थः। स्थानं प्रसङ्गः। सोऽस्ति अस्य इति स्थानी, तस्मिन् स्थानिनि। अस्य च अप्रयुज्यमाने इत्यर्थः। सूत्रे विद्यमानेन अपिपदेन प्रयुज्यमाने इति अर्थो लभ्यते। लः परस्मैपदम् इति सूत्रात् लः इति षष्ठ्यन्तम् पदमनुवर्तते। ततः सूत्रार्थो भवति - लकारसामानार्थके समीपोच्चारिते प्रयुज्यमाने अप्रयुज्यमाने वा युष्मदि लस्य स्थाने मध्यमः भवति।

**इदमत्र स्पष्टीकरणम् -**

लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण धातोः लकारः विहितः। एवञ्च क्रमशः वर्तमाने लट् इति सूत्रेण लट् विहितः। तदा भू ल् इति स्थितिः उत्पन्ना। अत्र लकारः विवक्षातः कर्तरि विहितः इत्यपि शेषात् कर्तरि परस्मैपदम् इत्यनेनापि स्पष्टम्। लकारस्य स्थाने यः तिङ् विधेयः अस्ति सोऽपि लकारवत् कर्तरि एव भविष्यति। अतः इदं स्पष्टं यत् तिङ् कर्तरि विधास्यते। अतः लस्य (तिङः) वाच्यम् कारकम् कर्तृकारकमिति स्पष्टम्। भूधातोः प्रयोगः यस्मिन् वाक्ये भविष्यति तस्मिन् यदि युष्मद् इति सर्वनाम्नः प्रयोगः कर्तृकारके अर्थात् युष्मदः वाच्यः कर्ता स्यात्। तदा भूधातुतः मध्यमसंज्ञकः तिङ् विधेयः इत्यर्थः।

एवं वाक्ये प्रयुक्तस्य युष्मदः वाच्यं कारकम्, एवञ्च धातोः परं विहितस्य लकारस्य वाच्यं कारकं यदि समानं स्यात् तर्हि धातोः परं मध्यमसंज्ञकः प्रत्ययः विधेयः इति सूत्रार्थः। युष्मदः वाच्यम् एव लस्य वाच्यम् इत्यस्य अर्थः युष्मदः यदधिकरणम् (अर्थः, वाच्यम्) तदेव अधिकरणं लस्यापि अस्ति। अर्थात् युष्मद् लस्य समानाधिकरणः अस्ति। तयोः सामानाधिकरण्यम् अस्ति। तयोः वाच्यं कारकं समानम् अस्ति। द्वयोः अर्थः समानः। अतः युष्मद् लकारसमानार्थकः अस्ति। तदा मध्यमसंज्ञकाः सिप् थस् थ इति परस्मैपदिनः, थास् आथाम् ध्वम् इति आत्मेनपदिनः विधेयाः इत्यर्थः। एवञ्च यदि युष्मदः साक्षात् उल्लेखः वाक्ये अस्तु अथवा साक्षाद् उल्लेखः मास्तु, परन्तु तदर्थः प्रतीयते तदापि मध्यमः विधीयते।

**उदाहरणम् -** त्वं खादसि।

**सूत्रार्थसमन्वयः -** यथा - त्वम् खाद् ल् इति वाक्यं कर्तव्यम् अस्ति। अत्र लकारः कर्तरि विवक्षितः अस्ति। युष्मदः रूपम् त्वम् इत्यस्य अर्थः अपि कर्ता एव विवक्षितः। युष्मदः लस्य च सामानाधिकरण्यम् अस्ति। अतः लस्य स्थाने मध्यमसंज्ञकः प्रत्ययः विधेयः। तदा त्वं खादसि इति वाक्यं स्यात्।

एवञ्च – (युष्मद्) खाद् ल् इति वाक्यं कर्तव्यम् अस्ति। अत्र लकारः कर्मणि विवक्षितः अस्ति। युष्मदः रूपम् प्रयोक्तव्यम् अस्ति। तस्य अर्थः अपि कर्ता एव विवक्षितः। द्वयोः अर्थः भिन्नः। इत्थं युष्मदः लस्य च सामानाधिकरण्यम् नास्ति। अतः लस्य स्थाने मध्यमसंज्ञकः प्रत्ययः विधातुं न शक्यते।

## [१२.१२] अस्मद्युत्तमः॥ (१.४.१०६)

**सूत्रार्थः -** अस्मद् लकारसमानाधिकरणः चेत् अस्मदि प्रयुज्यमानेऽप्रयुज्यमाने च उत्तमः स्यात्।

**सूत्रव्याख्या -** विधिसूत्रमिदम्। अनेन सूत्रेण उत्तमः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अस्मदि (७/१), उत्तमः (१/१)। युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः इति सूत्रात् उपपदे (७/१), समानाधिकरणे (७/१) स्थानिनि (७/१), अपि (अव्ययम्) इति एतानि पदानि अनुवर्तन्ते। उप समीपे उच्चारितं पदम् उपपदम्। तस्मिन् उपपदे, समीपोच्चारिते इति तदर्थः। समानम् अधिकरणम् (वाच्यम्) यस्य तत् समानाधिकरणम्। तस्मिन् समानाधिकरणे। समानार्थके इति तदर्थः। स्थानं प्रसङ्गः।



सोऽस्ति अस्य इति स्थानी, तस्मिन् स्थानिनि। अस्य च अप्रयुज्यमाने इत्यर्थः। सूत्रे विद्यमानेन अपिपदेन प्रयुज्यमाने इति अर्थो लभ्यते। लः परस्मैपदम् इति सूत्रात् लः इति षष्ठ्यन्तम् पदमनुवर्तते। ततः सूत्रार्थो भवति - लकारसामानार्थके समीपोच्चारिते प्रयुज्यमाने अप्रयुज्यमाने वा अस्मदि लस्य स्थाने उत्तमः भवति।

**सूत्रार्थस्पष्टीकरणम् -**

लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण धातोः लकारः विधीयते। एवञ्च क्रमशः वर्तमाने लट् इति सूत्रेण लट् विधीयते। तदा भू ल् इति एवं स्थितिः उत्पन्ना। अत्र लकारः विवक्षातः कर्तरि विहितः इत्यपि शेषात् कर्तरि परस्मैपदम् इत्यनेनापि स्पष्टम्। अतः लस्य (तिङः) वाच्यम् कारकम् कर्तृकारकमिति स्पष्टम्। भूधातोः प्रयोगः यस्मिन् वाक्ये भविष्यति तस्मिन् यदि अस्मद् इति सर्वनाम्नः प्रयोगः कर्तृकारके अर्थात् अस्मदः वाच्यः कर्ता स्यात्। तदा भूधातुतः उत्तमसंज्ञकः तिङ् विधेयः इत्यर्थः।

एवं वाक्ये प्रयुक्तस्य अस्मदः वाच्यं कारकम्, धातोः परं विहितस्य लकारस्य च वाच्यं कारकं यदि समानं स्यात् तर्हि धातोः परम् उत्तमसंज्ञकः प्रत्ययः विधेयः इति सूत्रार्थः। अस्मदः वाच्यम् एव लस्य वाच्यम् इत्यस्य अर्थः अस्मदः यदधिकरणम् (अर्थः, वाच्यम्) तदेव अधिकरणं लस्यापि अस्ति चेत् अस्मद् लस्य समानाधिकरणः अस्ति। तयोः सामानाधिकरण्यम् अस्ति। तयोः वाच्यं कारकं समानम् अस्ति। तदा उत्तमसंज्ञकाः मिप् वस् मस् इति परस्मैपदिनः, इट् वहि महिङ् इति आत्मनेपदिनः विधेयाः इत्यर्थः। एवञ्च यदि अस्मदः साक्षात् उल्लेखः वाक्ये अस्तु अथवा साक्षाद् उल्लेखः मास्तु, परन्तु तदर्थः प्रतीयते तदापि उत्तमः विधीयते।

**उदाहरणम् -** अहं खादामि।

**सूत्रार्थसमन्वयः -** यथा - अहम् खाद् ल् इति वाक्यं कर्तव्यम् अस्ति। अत्र लकारः कर्तरि विवक्षितः अस्ति। अस्मदः रूपम् अहम् इत्यस्य अर्थः अपि कर्ता एव विवक्षितः। अस्मदः लस्य च सामानाधिकरण्यम् अस्ति। अतः लस्य स्थाने उत्तमसंज्ञकः प्रत्ययः विधेयः। तदा अहं खादामि इति वाक्यं स्यात्।

## [१२.१३] शेषे प्रथमः॥ (१.४.१०७)

**सूत्रार्थः -** मध्यमोत्तमयोः अविषये धातोः प्रथमः स्यात्।

**सूत्रव्याख्या -** षड्विधेषु पाणिनीसुत्रेषु विधिसूत्रमिदम्। सूत्रेऽस्मिन् पदद्वयं वर्तते। तत्र शेषे इति सप्तम्येकवचनान्तं पदम्। प्रथमः इति च प्रथमैकवचनान्तं पदम्। उक्तादन्यः शेषः। मध्यमस्य उत्तमस्य च विषयः उक्तः। तेन च उक्ताद् मध्यमोत्तयोः विषयाद् अन्यः शेषः इति लभ्यते।

वस्तुतः किमुक्तम्। कश्च शेषः। युष्मद्-लकारयोः सामानाधिकरण्यं चेत् धातोः मध्यमो विधेयः। अस्मद्-लकारयोः सामानाधिकरण्यं चेत् धातोः उत्तमो विधेयः इति एतद्द्वयम् उक्तम्। ततः अन्यः



इत्यस्य अर्थः यत् इत्थम् उक्तं सामानाधिकरण्यद्वयं नास्ति चेत् धातोः प्रथमसंज्ञकः विधेयः। सूत्रार्थो भवति - मध्यमोत्तमयोः अविषये धातोः प्रथमः स्यात्।

यत्र एकस्मिन् वाक्ये युष्मद्-लकारयोः सामानाधिकरण्यम् एवञ्च अस्मद्-लकारयोः सामानाधिकरण्यम् इति एतद्वयमपि अस्ति। तदा विप्रतिषेधे परं कार्यमिति परिभाषया अस्मद्युत्तमः इत्यनेन सूत्रेण उत्तमः एव विधेयः। उदाहरणम् - अहं च त्वं च गच्छावः।

यत्र एकस्मिन् वाक्ये युष्मद्-लकारयोः सामानाधिकरण्यम् एवञ्च तस्मिन्नेव कारके अपरमपि पदं प्रयुक्तं चेदपि युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः इत्यनेन सूत्रेण मध्यमः एव विधेयः। कुत इति चेदुच्यते - प्रथमः शेषे सति विधीयते। अस्मिन् वाक्ये तु युष्मदः विषयः अस्ति। अतः यद्यपि शेषे प्रथमः इति सूत्रं परसूत्रम्। तथापि शेषत्वाभावान्न प्रवर्तते। उदाहरणम् - त्वं च स च गच्छथः।

यत्र एकस्मिन् वाक्ये अस्मद्-लकारयोः सामानाधिकरण्यम् एवञ्च तस्मिन्नेव कारके अपरमपि पदं प्रयुक्तं चेदपि अस्मद्युत्तमः इत्यनेन सूत्रेण उत्तम एव विधेयः। कुत इति चेदुच्यते - प्रथमः शेषे सति विधीयते। अस्मिन् वाक्ये तु अस्मदः विषयः अस्ति। अतः यद्यपि शेषे प्रथमः इति सूत्रं परसूत्रम्। तथापि शेषत्वाभावान्न प्रवर्तते। उदाहरणम् - अहं च स च गच्छावः।

### अयमत्र संग्रहः

लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण धातोः परं त्रिषु अर्थेषु लकारः भवति। तत्र विवक्षा एव नियामिका। तदा विवक्षातः कर्तरि लकारः विहितः। ततः च धातोः अर्थः व्यापारः वर्तमाने काले वर्तते इति विवक्षितम्। अतः वर्तमाने लट् इति सूत्रेण धातोः लट् विहितः। तदा भू ल् इति स्थितिः लब्धा। लस्य स्थाने तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-त-आताम्-झ-थास्-आथाम्-ध्वम्-इट्-वहि-महिङ् इति एते अष्टादश आदेशाः प्राप्ताः। ते च अव्यवहितपरम् एव निवेशनीयाः। भूधातोः परम् लस्य स्थाने एकदा एक एव आदेशः निवेशयितुं शक्यः। एककालं १८ प्रत्ययाः किञ्च अव्यवहितपराः इति नैव सम्भवति। अतः युगपत् १८ प्रत्ययाः प्रयोक्तुं न शक्यन्ते, परन्तु एकैकः पर्यायेण प्रयोक्तुं शक्यते। तदा कः प्रत्ययः कस्मै प्रयोजनाय प्रयोक्तव्यः इति विवेकाय लः परस्मैपदम् इति सूत्रेण अष्टादशानां परस्मैपदसंज्ञा कृता। ततश्च तङानावात्मनेपदम् इति सूत्रेण तङ्-प्रत्याहारस्य शानच्-कानचोः च आत्मनेपदसंज्ञा कृता। इत्थम् १८ प्रत्ययेषु आद्यानां नवानां परस्मैपदसंज्ञा अन्त्यानां नवानां तङाम् आत्मनेपदसंज्ञा विहिता।

तत्रापि परस्मैपदसंज्ञायाः आत्मनेपदसंज्ञायाश्च किम् फलमिति निर्णयाय अनुदात्तङित आत्मनेपदम् इति स्वरितञितः कर्त्रभिप्राये क्रियाफले इति च सूत्रद्वयम् उपन्यस्तम्। तेन यस्य धातोः आत्मनेपदनिमित्तम् अस्ति तस्माद्धातोः आत्मनेपदसंज्ञकाः नव प्रत्ययाः युगपत् पर्यायेण वा प्रसक्ताः। एवञ्च यस्य धातोः आत्मनेपदनिमित्तं नास्ति तादृशाद् धातोः शेषात् कर्तरि परस्मैपदम् इति सूत्रेण परस्मैपदसंज्ञकाः ९ प्रत्ययाः युगपत् पर्यायेण वा प्राप्ताः।





इत्थम् अत्र धातोः परं लस्य स्थाने ९ परस्मैसंज्ञकाः आदेशाः प्रसक्ताः। ते च अव्यवहितपरम् एव निवेशनीयाः। धातोः परम् लस्य स्थाने एकदा एक एव आदेशः निवेशयितुं शक्यः। एककालं ९ प्रत्ययाः किञ्च अव्यवहितपराः इति नैव सम्भवति। अतः युगपत् ९ प्रत्ययाः प्रयोक्तुं न शक्यन्ते, परन्तु एकैकः पर्यायेण प्रयोक्तुं शक्यते। तदा कः प्रत्ययः कस्मै प्रयोजनाय प्रयोक्तव्यः इति विवेकाय इतोऽपि संज्ञाः कृताः।

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः इति सूत्रेण तिङः आत्मनेपद-परस्मैपदयोः त्रयाणां त्रिकाणां क्रमाद् प्रथमः मध्यमः उत्तमः इति संज्ञाः विहिताः। इत्थं येषां प्रथमादिसंज्ञाः जाताः तेषु प्रत्येकम् एकैकशः तान्येकवचनद्विवचनबहुवचनान्येकशः इति सूत्रेण एकवचनं द्विवचनं बहुवचनम् इति संज्ञाः विहिताः।

एतावता प्रति प्रत्ययं काचित् संज्ञा लब्धा। यथा तिप् इत्यस्य परस्मैपदम् प्रथमः एकवचनम् इति तिस्रः संज्ञाः जाताः। इत्थम् अन्येषामपि प्रत्ययानाम्।

तथापि कस्मै प्रयोजनाय एताः संज्ञाः। कथं वा तासाम् उपयोगः इति विवेकाय सूत्राणि प्रणीतानि।

तत्र यदि एकस्मिन् वाक्ये युष्मद्-लकारयोः सामानाधिकरण्यम् अस्ति तर्हि धातोः मध्यमः विधेयः इति युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः इति सूत्रेण व्यवस्था कृता।

यदि एकस्मिन् वाक्ये अस्मद्-लकारयोः सामानाधिकरण्यम् अस्ति तर्हि धातोः उत्तमो विधेयः इति अस्मद्युत्तम इति सूत्रेण व्यवस्था कृता।

यदि मध्यमोत्तमयोः अविषयः भवति तर्हि धातोः शेषे प्रथम इति सूत्रेण प्रथमः विहितः।

तथापि मध्यमसंज्ञकाः सिप् थस् थ इति त्रयः सन्ति। अधुना इदं स्पष्टं यत् कदा मध्यमस्य प्रयोगः कर्तव्यः। परन्तु इदं न स्पष्टं यत् सिप्-थस्-थ इति त्रिषु कतमः प्रयोक्तव्यः इति। तदा द्व्येकयोर्द्विवचनैकवचने इति बहुषु बहुवचनम् इति द्वाभ्याम् सूत्राभ्याम् इदम् आयाति यत् लस्यार्थः यत् कारकम् तद् यदि एकम् तर्हि एकवचनसंज्ञकः सिप् प्रयोक्तव्यः। यदि लस्यार्थः यत् कारकम् तस्य यदि द्वित्वं स्यात् अर्थात् कारकद्वयम् स्यात् तर्हि द्विवचनसंज्ञकः थस् इति प्रत्ययः प्रयोक्तव्यः। यदि लस्यार्थः यत् कारकम् तस्य यदि बहुत्वं स्यात् अर्थात् द्व्यधिकं कारकम् स्यात् तर्हि बहुवचनसंज्ञकः थ इति प्रत्ययः प्रयोक्तव्यः इति। एवमन्यत्रापि।

एवम् कर्तरि लकारे विवक्षिते भू ल् इति स्थिते लस्य स्थाने तिबादिषु अष्टादशसु प्रत्ययेषु प्राप्तेषु लस्य वाच्यः कर्ता एकः किञ्च स युष्मदः अस्मदः वाच्यः नास्ति इति विवक्षिते लस्य स्थाने एकवचनसंज्ञकः प्रथमः विधेयः। तिपि पस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति लोपे च कृते भू ति इति स्थितिः जायते। तदा -



धातोः विहितानां प्रत्ययानां सार्वधातुकम् आर्धधातुकं चेति संज्ञाद्वयम् अस्ति। अष्टाध्याय्याम् सार्वधातुकसंज्ञाविधायकानि आर्धधातुकसंज्ञाविधायकानि च सूत्राणि एकत्र एव उपन्यस्तानि। तेषां ज्ञानम् एककालं भवतु इति धिया तानि सूत्राणि अपि अत्रैव दीयन्ते।



## पाठगतप्रश्नाः-४

२८. कदा मध्यमः विधीयते।

२९. कदा उत्तमः विधीयते।

३०. कदा प्रथमः विधीयते।

३१. युष्मद्युपपदे इत्यादिसूत्रे समानाधिकरणपदार्थः कः।

३२. शेषे प्रथमः इत्यत्र कः शेषः।

## अवधेयम्

भूधातोः लटि भवति इति रूपं भवति। तस्य समग्रस्य साधनाय बहूनि सूत्राणि आवश्यकानि। केलवं भवति इति रूपसाधनमेव पाठद्वयात्मकम् अस्ति। अतः अत्र पाठः विभक्तः। परन्तु विषयः क्रमशः अग्रे प्रचलति। अतः अत्र पाठसारः नास्ति, पाठान्तप्रश्नाः न सन्ति, उत्तराणि च न सन्ति। तत्सर्वमपि अग्रिमपाठस्यान्ते द्रष्टव्यम्।

१३

# भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -२

**उपक्रमः -**

भूधातोः भवति इति रूपसाधनमेवानुवर्तते। अतः पृथक् प्रस्तावना उद्देश्यानि वा न दत्तम्।

## [१३.१] तिङ् शित् सार्वधातुकम्॥ (३.४.११३)

**सूत्रार्थः -** धात्वधिकारोक्तः तिङ् शित् च सार्वधातुकसंज्ञः स्यात्।

**सूत्रव्याख्या -** संज्ञासूत्रमिदम्। अनेन सार्वधातुकसंज्ञा विधीयते। अस्मिन् त्रीणि पदानि सन्ति। तिङ् (१/१), शकारः इत् यस्य स शित् (१/१), सार्वधातुकम् (१/१) इति संज्ञापरपदम्। तिङ् इति प्रत्याहारः। तस्मिन् तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-त-आताम्-झ-थास्-आथाम्-ध्वम्-इट्-वहि-महिङ् इति एते अष्टादश प्रत्ययाः सन्ति। धातोः इति पञ्चम्यन्तम् पदम् अधिकृतम्। पदयोजना - धातोः तिङ् शित् सार्वधातुकम्। सूत्रार्थो भवति - धातोः इति अधिकारे विहितः तिङ् शित् च सार्वधातुकसंज्ञः भवति। अर्थात् धात्वधिकरोक्तः तिङ् शिच्च सार्वधातुकसंज्ञकः भवति।

**उदाहरणम् -** तिप् तस् झि इत्यादयः तिङः। शप् श्यन् इत्यादयः शितः।

## [१३.२] आर्धधातुकं शेषः॥ (३.४.११४)

**सूत्रार्थः -** धातोरिति विहितः तिङ्शिद्भ्योऽन्यः प्रत्ययः आर्धधातुकसंज्ञः स्यात्।

**सूत्रव्याख्या -** सूत्रमिदं संज्ञासूत्रम्। अनेन आर्धधातुकसंज्ञा विधीयते। अस्मिन् द्वे पदे स्तः। आर्धधातुकम् शेषः इति सूत्रगतपदच्छेदः। धातोः इति पञ्चम्येकवचनान्तं पदम् अधिकृतम् अस्ति। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इति सूत्रादपि धातोः इति पञ्चम्यन्तं पदमनुवर्तते। पदयोजना - धातोः धातोः शेषः आर्धधातुकम्। शेषः इत्यस्य तिङ्-शिद्भ्यः अन्यः इत्यर्थः। तेन सूत्रार्थश्च भवति - धातोरिति धातोर्विहितः तिङ्शिद्भ्यः अन्यः प्रत्ययः आर्धधातुकसंज्ञः स्यात् इति। अर्थात् धातोः इति अधिकृत्य धातुतः विहितः यः तिङ्भिन्नः शिद्भिन्नः च प्रत्ययः तस्य आर्धधातुकसंज्ञा अनेन सूत्रेण भवति।

गुप्तिज्किद्भ्यः सन् इति सूत्रेण धातुतः सन् प्रत्ययः विहितः। किन्तु धातोः इति उक्त्वा अर्थात् धात्वधिकारे न विहितः। अतः अस्य आर्धधातुकसंज्ञा न भवति।

**उदाहरणम् -** च्लि सिच् स्य तास् क्त क्तवतु इत्यादयः।



## [१३.३] लिट् च॥ (३.४.११५)

**सूत्रार्थः** -. लिडादेशः तिङ् आर्धधातुकसंज्ञः स्यात्।

**सूत्रव्याख्या** - शक्तिग्राहकत्वात् सूत्रमिदं संज्ञाकोटौ अन्तर्याति। द्विपदात्मकेऽस्मिन् सूत्रे लिट् इति लुप्तषष्ठीकं पदम्। अतः लिटः इति लभ्यते। च इति अव्ययपदम्। तिङ् शित् सार्वधातुकम् इति सूत्रात् तिङ् इति प्रथमैकवचनान्तं संज्ञिबोधकं पदमनुवर्तते। तथा आर्धधातुकं शेषः इति सूत्रात् संज्ञासमर्पकं प्रथमान्तं पदमनुवर्तते। लङः शाकटायनस्यैव इति सूत्रात् एव इत्यव्ययपदम् अनुवर्तते। एवं लिटः तिङ् आर्धधातुकम् एव इति सूत्रगतपदान्वयः। तेन सूत्रार्थः भवति - लिटः स्थाने विहितः तिङ् आर्धधातुकसंज्ञः एव स्यात्। अत्र एवकारेण सार्वधातुकसंज्ञा व्यावृत्यते। अतः लिटः स्थाने विहितस्य तिङः सार्वधातुकसंज्ञा न भवति।

## [१३.४] लिङाशिषि॥ (३.४.११६)

**सूत्रार्थः** - आशिषि लिङादेशः तिङ् आर्धधातुकसंज्ञः स्यात्।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अनेन आर्धधातुकसंज्ञा विधीयते। अस्मिन् द्वे पदे स्तः। लिङ् इति लुप्तषष्ठीकं पदम्। तेन लिङः इति लभ्यते। आशिषि (७/१)। तिङ् शित् सार्वधातुकम् इति सूत्रात् तिङ् इति प्रथमान्तं संज्ञिपरं पदमनुवर्तते। आर्धधातुकं शेषः इति सूत्रात् संज्ञासमर्पकम् आर्धधातुकमिति प्रथमान्तं पदमनुवर्तते। लङः शाकटायनस्यैव इति सूत्रात् एव इत्यव्ययपदम् अनुवर्तते। पदयोजना - आशिषि लिङः तिङ् आर्धधातुकम् एव। सूत्रार्थो भवति - आशीर्वादार्थे विहितस्य लिङः स्थाने यः तिङ् तस्य आर्धधातुकसंज्ञा एव भवति। अत्र एवकारेण सार्वधातुकसंज्ञा व्यावृत्यते। अतः लिटः स्थाने विहितस्य तिङः सार्वधातुकसंज्ञा न भवति।

### अयमत्र सारः

धातुतः लकाराः विधीयन्ते। कोऽपि लकारः तिङ् नास्ति शित् वा नास्ति। अतः सर्वे लकाराः आर्धधातुकसंज्ञकाः। लकाराणां स्थाने तिङ् विधीयते। अयं तिङ् सार्वधातुकसंज्ञकः भवति। परन्तु लिटः स्थाने विहितः तिङ् एवञ्च आशीर्वादार्थे विहितस्य लिङः स्थाने विहितः तिङ् आर्धधातुकसंज्ञकः भवति। यस्य लकारस्य आदेशः तिङ् सार्वधातुकसंज्ञकः स लकारः सार्वधातुकलकारः इति केचित् वदन्ति। परन्तु लकारः न कदापि सार्वधातुकसंज्ञकः।

लुटि लृटि लुङि लृङि च धातु-लकारयोः मध्ये तास् स्य च्लि स्य एते विधीयन्ते। ते धातोः विहिताः तिङ्भिन्नाः, शिद्भिन्नाः च सन्ति। अतः आर्धधातुकसंज्ञकाः सन्ति। परन्तु तेषां लकराणां स्थाने विहितः तिङ् सार्वधातुकसंज्ञक एव अस्ति। तथापि लुट् लृट् लुङ् लृङ् चेति आर्धधातुकलकाराः इति प्रचारः।



भू ति इति स्थिते तिप् तिङ् अस्ति, धातोः विहितः अस्ति। अतः तिङ्शित् सार्वधातुकम् इति सूत्रेण तिपः सार्वधातुकसंज्ञा भवति। मूलतः वर्तमाने लट् इत्यत्र स्पष्टीकृतं यत् लट् कर्तरि अर्थात् कर्त्रर्थे विहितः अस्ति। तदा - (अग्रिमसूत्रे द्रष्टव्यम्)



## पाठगतप्रश्नाः-५

३३. सार्वधातुकसंज्ञा कस्य।

३४. आर्धधातुकसंज्ञा केषाम्।

३५. आर्धधातुकं शेषः इत्यत्र कः शेषः।

३६. के लकाराः सार्वधातुकसंज्ञकाः। उत्तरं समर्थयत।

३७. केषां लकाराणाम् आदेशः तिङ् आर्धधातुकसंज्ञकः।

३८. लिडादेशः तिङ् सार्वधातुकमार्धधातुकं वा।

३९. केषां लकाराणां विकरणानि आर्धधातुकानि। कानि च तानि।

## [१३.५] कर्तरि शप्॥ (३.१.६८)

**सूत्रार्थः** - कर्त्रर्थे सार्वधातुके परे धातोः शप् भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु 'कर्तरि शप्' इति विधिसूत्रम्। अनेन शप् विधीयते। सूत्रेऽस्मिन् पदद्वयं वर्तते। तत्र कर्तरि इति सप्तम्येकवचनान्तं पदम्, शप् इति च प्रथमैकवचनान्तं पदम्। 'सार्वधातुके यक्' इति सूत्रात् सार्वधातुके इति पदमनुवृत्तम्। 'धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ्' इति सूत्रात् धातोरिति पदम् अनुवर्तते। 'प्रत्ययः' इति 'परश्च' इति सूत्रद्वयमपि अत्र अधिकृतम्। पदयोजना - कर्तरि सार्वधातुके धातोः शप् प्रत्ययः परः इति। सूत्रार्थो भवति - कर्त्रर्थे सार्वधातुके प्रत्यये परे धातोः परः शप् प्रत्ययः स्यादिति। तिङ्प्रत्यये परे सति धातोः ये शबादयः प्रत्यया विधीयन्ते तेषां विकरणसंज्ञा भवतीति प्राचीनाचार्याणां मतम्। अतः शप् इति विकरणम्।

**उदाहरणम्** - भवति।

**सूत्रार्थसमन्वयः** - भूधातोः विवक्षातः कर्त्रर्थे लट् अस्ति। लटः स्थाने तिप् विहितः। तदा भू ति इति स्थितिः जाता। अत्र भूधातोः परं तिप् तिङ्शित्सार्वधातुकम्' इत्यनेन सार्वधातुकसंज्ञकः। भूधातोः परं कर्त्रर्थे सार्वधातुकम् अस्ति। अतः कर्तरि शप् इति सूत्रेण धातोः शप्प्रत्यये शप्प्रत्ययस्थितस्य शकारस्य 'लशक्वतद्धिते' इति सूत्रेण तथा पकारस्य 'हलन्त्यम्' इति सूत्रेण इत्संज्ञा भवति। इत्संज्ञायां सत्यां 'तस्य लोपः' इति सूत्रेण उभयोः शकारपकारयोः लोपो भवति। तदा भू अ ति इति स्थितिः जायते। तदा -

## [१३.६] सार्वधातुकार्धधातुकयोः॥ (७.३.८४)

**सूत्रार्थः** - सार्वधातुकार्धधातुकयोः परयोरिगन्ताङ्गस्य गुणः स्यात्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण गुणः विधीयते। अस्मिन् सूत्रे सार्वधातुकार्धधातुकयोः इति सप्तमीद्विवचनान्तम् पदम्। मिदेर्गुणः इत्यस्मात् सूत्रात् गुणः इति प्रथमान्तं पदमनुवर्तते। अङ्गस्य इति अधिकृतमस्ति। अस्मिन् सूत्रे कस्य स्थाने गुणः भविष्यति इति स्थानी साक्षात् नोक्तः। किञ्च गुणः इति विधेयपरं गुणपदम् उच्चार्य गुणः विधीयते। अतः इको गुणवृद्धी इति परिभाषया इकः इति षष्ठ्यन्तं पदमत्रोपस्थाप्यते। इदं सूत्रम् अङ्गाधिकारे पठितम्। अङ्गसंज्ञा प्रत्यये परे सति एव फलति। अतः प्रत्यये इति पदमाक्षिप्यते। तत्रापि सार्वधातुकार्धधातुकयोः इति सप्तमीद्विवचनम्। एतौ अपि प्रत्ययौ एव। अतः प्रत्यये इत्यस्य प्रत्यययोः इति सप्तमीद्विवचनं गृह्यते। तदा पदयोजना भवति - इकः अङ्गस्य गुणः सार्वधातुकार्धधातुकयोः प्रत्यययोः इति।

अत्र इकः अङ्गस्य चेति समानविभक्तिकं पदद्वयम् अस्ति। अङ्गस्य इति पदं विशेष्यम् अस्ति, इकः इति पदम् तस्य विशेषणम् अस्ति। अतः येन विधिस्तदन्तस्य इत्यनेन तदन्तविधिना इगन्ताङ्गस्य इत्यर्थः लभ्यते। इगन्ताङ्गस्य इत्यत्र अल्समुदायबोधकात् स्थानषष्ठी श्रूयते। एवञ्च आदेशः गुणः एकाल् अस्ति। अतः अलोऽन्त्यस्य इति परिभाषया इगन्ताङ्गस्य अन्त्यस्य इकः गुणः भवति। ततश्च सूत्रार्थो भवति –सार्वधातुके आर्धधातुके च प्रत्यये परे इगन्ताङ्गस्य अन्त्यस्य अलः स्थाने गुणः स्यात् इति। इगन्ताङ्गस्य अन्त्यः अल् इक् एव। अतः इकः स्थाने एव गुणो भवति।

**उदाहरणम्** - भू-धातोः लटि तिपि शपि भू अ ति इति स्थितिः निरूपिता पूर्वसूत्रेषु। शप् धातोः इति विहितः शित् प्रत्ययः। अतः तिङ् शित् सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञां लभते। अस्मिन् परे भू इत्यस्य अङ्गसंज्ञा भवति। भू इति इगन्तम् अङ्गमस्ति। अतः सार्वधातुकार्धधातुकयोः इति प्रकृतसूत्रेण इगन्ताङ्गस्य भू इत्यस्य अन्त्यस्य इकः ऊकारस्य गुणः प्रसक्तः। ऊकारस्य स्थाने स्थानेऽन्तरतमः इति परिभाषाबलेन स्थानकृदान्तर्याद् ओकारे भो अ ति इति स्थितिः भवति। अत्र ओकाराद् अचि परतः एचोऽयवायावः इत्यनेन ओकारस्य अवादेशे भ् अव् अ ति इति स्थिते सर्ववर्णमेलनेन '**भवति**' इति रूपं सिद्धं भवति।

**भवतः** - भूधातोः वर्तमानक्रियावृत्तित्वविवक्षायां वर्तमाने लट् इति सूत्रेण कर्तरि लट् विधीयते। लटः अनुबन्धलोपे भू ल् इति जाते लस्य स्थाने प्रथमपुरुषद्विवचनविवक्षायां तस्प्रत्यये भू तस् इति भवति। ततः तिङ्शित्सार्वधातुकम् इति सूत्रेण तसः सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ तस् इति जायते। शप्प्रत्ययः शित् एवञ्च धात्वधिकारोक्तः। अतः तिङ्शित् सार्वधातुकमिति तस्य सार्वधातुकसंज्ञा भवति। अतः सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ तस् इति जायते। यथासंख्यमनुदेशः समानाम् इति परिभाषया परिष्कृतेन एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव् अ तस् इति जायते। ततः भवतस् इति समुदायस्य सुप्तिङन्तं पदम् इति सूत्रेण तिङन्तत्वेन पदसंज्ञायाम्, अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन ससजुषो रुः इत्यनेन पदान्तसकारस्य रुत्वेऽनुबन्धलोपे भवतर्



इति जायते। अत्र रेफोच्चारणात् परं वर्णान्तरोच्चारणाभावेन तदभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञायाम्, अवसाने परे अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन खरवसानयोर्विसर्जनीयः इत्यनेन पदान्तस्य रेफस्य विसर्गे वर्णसम्मेलने भवतः इति रूपं सिद्ध्यति।

**भवन्ति** - भूधातोः वर्तमाने लट् इति सूत्रेण कर्तरि लटि अनुबन्धलोपे भू ल् इति जाते लस्य स्थाने प्रथमपुरुषबहुवचन-विवक्षायां झिप्रत्यये भू झि इति स्थितिः भवति। तदा -

## [१३.७] झोऽन्तः॥ (७.१.३)

**सूत्रार्थः** - प्रत्ययावयवस्य झकारस्य स्थाने अन्त् इत्यादेशः स्यात्।

**सूत्रव्याख्या** - साक्षाल्लक्ष्यसंस्कारानुरोधादिदं विधिसूत्रम्। सूत्रे द्वे पदे स्तः। झः अन्तः इति सूत्रगतपदच्छेदः। झः इति षष्ठ्येकवचनान्तम् उद्देश्यबोधकं पदम्। इयं च स्थानषष्ठी। अन्तः इति प्रथमैकवचनान्तं विधेयबोधकं पदम्। आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् (७.१.२) इति पूर्वसूत्रात् प्रत्ययादिपदस्य एकदेशः प्रत्ययः इति अनुवर्तते, षष्ठ्यन्ततया च विपरिणमते। तेन प्रत्ययस्य इति भवति। अत्र च अवयवावयविभावसम्बन्धे षष्ठी। तेन प्रत्ययावयवस्य झकारस्य स्थाने इति अर्थ आयाति। प्रत्ययस्य झस्य अन्तः इति सूत्रगतपदान्वयः। तेन प्रत्ययावयवस्य झकारस्य स्थाने अन्तादेशो भवतीति सूत्रस्यार्थः भवति। अत्र अन्त् इत्यादेशः तकारान्तः, न तु अकारान्तः। अकारोऽत्र उच्चारणार्थः।

**उदाहरणम्** - भवन्ति।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण भू झि इत्यवस्थायां प्रकृतसूत्रेण प्रत्ययावयवस्य झि इत्यस्य झकारस्य स्थाने अन्त् इत्यादेशः भवति।

अतः प्रकृतसूत्रेण अन्त् इति आदेशे भू अन्त् इ इति जायते। तत्र तिङ्शित्सार्वधातुकम् इति सूत्रेण अन्ति इति समुदायस्य सार्वधातुकसंज्ञा भवति। झिप्रत्ययः कर्तरि विहितः अस्ति। अतः कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ अन्ति इति जायते। शपोऽपि तिङ्शित् सार्वधातुकमिति सूत्रेण सार्वधातुकसंज्ञा भवति। ततः सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ अन्ति इति जाते एचोऽयवायावः इति सूत्रेण ओकारस्य अवादेशे भव् अ अन्ति इति स्थितिर्भवति। तत्र च अकारात् परम् गुणः अकारः अस्ति। अतः अतो गुणे इति सूत्रेण अकाराकारयोः पररूपैकादेशे भव् अन्ति इति जाते वर्णसम्मेलने **भवन्ति** इति रूपं सिद्ध्यति।

**भवसि** - भूधातोः वर्तमाने लट् इति सूत्रेण कर्तरि लटि लस्य मध्यमपुरुषैक-वचनविवक्षायां सिपि अनुबन्धलोपे भू सि इति स्थितिर्भवति। ततश्च तिङ्शित्सार्वधातुकम् इति सूत्रेण सिपः सार्वधातुकसंज्ञायां कर्तरि विहितत्वाच्च कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ सि इति जायते। शपोऽपि तिङ्शित् सार्वधातुकमिति सार्वधातुकत्वेन सार्वधातुकार्धधातुकयोः इति सूत्रेण भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ सि इति जाते एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव् अ सि इति जाते वर्णसम्मेलने **भवसि** इति रूपं सिद्ध्यति।



**भवथः** - भूधातोः वर्तमाने लट् इति सूत्रेण कर्तरि लटि लस्य स्थाने मध्यमपुरुषद्विवचनविवक्षायां थस्-प्रत्यये भू थस् इति स्थितिर्भवति। तिङ्शित्सार्वधातुकम् इति सूत्रेण थसः सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ थस् इति जाते, शपोऽपि सार्वधातुकत्वेन सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ थस् इति जाते एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव् अ थस् इति जाते रुत्वे विसर्गे च कृते भव् अ थः इति स्थिते वर्णसम्मेलने **भवथः** इति रूपं सिद्ध्यति।

**भवथ** - भूधातोः वर्तमाने लट् इति सूत्रेण कर्तरि लटि लस्य स्थाने मध्यमपुरुषबहुवचनविवक्षायां थ-प्रत्यये भू थ इति स्थितिर्भवति। तिङ्शित्सार्वधातुकम् इति सूत्रेण थस्य सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ थ इति जाते, शपोऽपि सार्वधातुकत्वेन सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ थ इति जाते एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव् अ थ इति जाते वर्णसम्मेलने **भवथ** इति रूपं सिद्ध्यति।

**भवामि** - भूधातोः वर्तमाने लट् इति सूत्रेण कर्तरि लटि अनुबन्धलोपे भू ल् इति जाते लस्य स्थाने उत्तमपुरुषैकवचनविवक्षायां मिपि अनुबन्धलोपे भू मि इति स्थितिर्भवति। तिङ्शित्सार्वधातुकम् इति सूत्रेण मिपः सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ मि इति जाते, शपोऽपि शित्त्वात् सार्वधातुकत्वेन सार्वधातुकार्धधातुकयोः इति सूत्रेण भुवः ऊकारस्य गुणे ओकारे भो अ मि इति जाते एचोऽयवायावः इति सूत्रेण अवादेशे भव् अ मि इति जायते। तदा -

## [१३.८] अतो दीर्घो यञि॥ (७.३.१०१)

**सूत्रार्थः** - अदन्तस्य अङ्गस्य स्थाने दीर्घः स्यात् यञादौ सार्वधातुके परे।

**सूत्रव्याख्या** - षड्विधपाणिनीयसूत्रेषु साक्षाल्लक्ष्यसंस्कारत्वाद् विधिकोटौ इदं सूत्रम् अन्तर्याति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। अतः दीर्घः यञि इति सूत्रस्थपदच्छेदः। तेषु अतः इति षष्ठ्येकवचनान्तं पदम्। दीर्घः इति प्रथमान्तं विधेयबोधकं पदम्। यञि इति सप्तम्यन्तं पदम्। सूत्रमिदम् अङ्गस्य इत्यधिकारे वर्तते। 'अतः' इति पदम् अङ्गस्य इति षष्ठ्यन्तपदस्य विशेषणम्। अतः येन विधिस्तदन्तस्य इति तदन्तविधिना अदन्तस्य अङ्गस्य इत्यर्थो भवति। तुरुस्तुशम्यमः सार्वधातुके इति सूत्रात् सार्वधातुके इति सप्तम्यन्तं पदमनुवर्तते। इदं च विशेष्यबोधकं पदम्। यञि इति सप्तम्यन्तम् अल्बोधकं विशेषणम्। ततश्च यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधिना यञादौ सार्वधातुके इत्यर्थो भवति। एवमाहत्य अदन्ताङ्गस्य दीर्घः यञि सार्वधातुके इति सूत्रस्थपदानामन्वयः। अदन्ताङ्गस्य इत्यत्र अल्समुदायबोधकात् स्थानषष्ठी श्रूयते। अतः अलोऽन्त्यस्य इति परिभाषया अदन्ताङ्गस्य अन्त्यस्य अलः एव आदेशः स्यात्। तेन सूत्रार्थः भवति - अदन्ताङ्गस्य अन्त्यस्य अलः स्थाने दीर्घो भवति यञादौ सार्वधातुके परे इति।

**उदाहरणम्** - भवामि।





**सूत्रार्थसमन्वयः** - भव् अ मि इत्यवस्थायां मिप्प्रत्ययपरतः पूर्वस्य भव् अ इति समुदायस्य अङ्गसंज्ञा अस्ति। मिप्प्रत्ययः सार्वधातुकसंज्ञकः यञादिः च अस्ति। किञ्च इदम् अङ्गम् अदन्तम् अस्ति। अतोऽत्र प्रकृतसूत्रेण अन्त्याकारस्य स्थाने दीर्घो भवति। तदा भवा मि इति जाते वर्णसम्मेलने **भवामि** इति रूपं सिद्ध्यति।

**भवावः** - भूधातोः वर्तमाने लट् इति सूत्रेण कर्तरि लटि अनुबन्धलोपे भू ल् इति स्थिते लस्य स्थाने उत्तमपुरुषद्विवचनविवक्षायां वसि भू वस् इति स्थितिर्जायते। ततः तिङ्शित्सार्वधातुकम् इति सूत्रेण वसः सार्वधातुकसंज्ञायां तस्मिन् परतः कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ वस् इति जाते, शपोऽपि सार्वधातुकत्वेन सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे, एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव् अ वस् इति स्थितिः उद्भवति। तत्र वसि परे विकरणविशिष्टस्य भव इत्यस्य अङ्गसंज्ञा भवति। वस् यञादिः सार्वधातुकः च। अतः अतो दीर्घो यञि इति सूत्रेण अदन्ताङ्गस्य भव इत्यस्य वकारोत्तरस्य अकारस्य दीर्घो भवति। तदा भवा वस् इति जायते। भवावस् इति समुदायः तिङन्तः। अतः तस्य सुप्तिङन्तं पदम् इति सूत्रेण पदसंज्ञा भवति। तेन ससजुषो रुः इत्यनेन पदान्तसकारस्य रुत्वेऽनुबन्धलोपे खरवसानयोर्विसर्जनीयः इत्यनेन रेफस्य विसर्गे वर्णसम्मेलने भवावः इति रूपं सिद्ध्यति।

**भवामः** - भूधातोः वर्तमाने लट् इति सूत्रेण कर्तरि लटि, लस्य स्थाने उत्तमपुरुषद्विवचनविवक्षायां मसि, तिङ्शित्सार्वधातुकम् इति सूत्रेण मसः सार्वधातुकसंज्ञायां तस्मिन्परतः कर्तरि शप् इति सूत्रेण धातोः शपि, शपोऽपि सार्वधातुकत्वेन तस्मिन्परे सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे ओकारे, एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव् अ मस् इति जाते मसः यञादित्वेन सार्वधातुकत्वेन च तस्मिन् परे विकरणविशिष्टस्य भव इत्यस्य अङ्गत्वविज्ञानात् अतो दीर्घो यञि इति सूत्रेण अदन्ताङ्गस्य भव इत्यस्य मकारोत्तरस्य अकारस्य दीर्घे भवा मस् इति जाते समुदायस्य तिङन्तत्वेन पदसंज्ञायाम्, ससजुषो रुः इत्यनेन पदान्तसकारस्य रुत्वेऽनुबन्धलोपे खरवसानयोर्विसर्जनीयः इत्यनेन रेफस्य विसर्गे वर्णसम्मेलने भवावः इति रूपं सिद्ध्यति।

भूधातोः लटि रूपाणि --

| लट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| **प्रथमपुरुषः** | भवति | भवतः | भवन्ति |
| **मध्यमपुरुषः** | भवसि | भवथः | भवथ |
| **उत्तमपुरुषः** | भवामि | भवावः | भवामः |





## पाठगतप्रश्नाः-६

४०. शप् कदा विधीयते।

४१. भू अ ति इति स्थिते भुवः ऊकारस्य गुणः केन सूत्रेण।

४२. झोऽन्तः इति सूत्रस्यार्थं लिखत।

४३. भूधातोः लटि सिपि किं रूपम्।

## [१३.९] धात्वादेः षः सः॥ (६.१.६२)

**सूत्रार्थः** - धात्वादेः षस्य सः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण सकारः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। धात्वादेः (६/१), षः (६/१), सः (१/१)। धातोः आदिः धात्वादिः तस्य धात्वादेः इति षष्ठीतत्पुरुषः समासः। सूत्रार्थो भवति - धातोः आदेः षकारस्य स्थाने सकारादेशः भवति। धातुपाठे येषां धातूनां आदिवर्णः षकारः अस्ति ते षोपदेशाः धातवः कथ्यन्ते।

**उदाहरणम्** - षिध गत्याम्।

**सूत्रार्थसमन्वयः** - षिध इति धातुपाठे पठितः धातुः। अतः उपदेशावस्थायां स तस्यादिः षकारः अस्ति। अतः स षोपदेशः। धात्वादेः षः सः इति प्रकृतसूत्रेण तस्य आदेः षकारस्य स्थाने सकारादेशः भवति। तेन सिध इति जायते।

## [१३.१०] णो नः॥ (६.१.६३)

**सूत्रार्थः** - धात्वादेः णस्य नः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण नकारः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। णः (६/१), नः (१/१)। धात्वादेः षः सः इति सूत्रात् धात्वादेः (६/१) इति पदमनुवर्तते। धातोः आदिः धात्वादिः तस्य धात्वादेः इति षष्ठीतत्पुरुषः समासः। सूत्रार्थो भवति - धातोः आदेः णकारस्य स्थाने नकारादेशः भवति। धातुपाठे येषां धातूनां आदिवर्णः णकारः अस्ति ते णोपदेशाः धातवः कथ्यन्ते।

**उदाहरणम्** - णम् - नम्, णीञ् - नी, णद – नद।

**सूत्रार्थसमन्वयः** - णम् इति धातुपाठे पठितः धातुः। अतः उपदेशावस्थायां तस्य आदिः णकारः अस्ति। अतः स णोपदेशः। णो नः इति प्रकृतसूत्रेण तस्य आदेः णकारस्य स्थाने नकारादेशः भवति। तेन नम् इति जायते। ततश्च लटि तिपि शपि नमति इत्यादिरूपाणि सिध्यन्ति।

णद अव्यक्ते शब्दे इति भ्वादिगणीयः धातुः। स च णोपदेशः। तस्य लटि रूपाणि सुसाध्यानि सन्ति। तानि रूपाणि तावत् - **नदति नदतः नदन्ति। नदसि नदथः नदथ। नदामि नदावः नदामः।**



सिध्-धातोः वर्तमाने लट् इति लटि तिपि शपि सिध् अ ति इति स्थितिः जायते। तदा - (पुगन्तलघूपधस्य च इति सूत्रे द्रष्टव्यम्।)

## [१३.११] इदितो नुम् धातोः॥ (७.१.५८)

**सूत्रार्थः** - इदितो धातोः नुमागमः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण नुम् विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। इदितः नुम् धातोः इति सूत्रगतपदच्छेदः। इदितः (६/१), नुम् (१/१), धातोः (१/१)। 'इत्' इत् यस्य सः इदित्, तस्य इदितः इति बहुव्रीहिसमासः। अर्थात् यस्य धातोः ह्रस्वः इकारः इत्संज्ञकः अस्ति स धातुः इदित्। सूत्रार्थो भवति - इदितो धातोः नुमागमः भवति। नुम् मित् अस्ति। अतः मिदचोऽन्त्यात् परः इति परिभाषया अन्त्यात् अचः परः भवति।

**उदाहरणम्** - टु नदिँ समृद्धौ।

**सूत्रार्थसमन्वयः** - टु नदिँ इति धातुः धातुपाठे पठितः। तस्य टु इत्यस्य आदिर्ञिटुडवः इति सूत्रेण इत्संज्ञा भवति। इकारः अनुनासिकः। अतः उपदेशेऽजनुनासिक इत् इति सूत्रेण इत् इत्संज्ञकः भवति। अतः अयं धातुः इदित्। इदितो नुम् धातोः इति सूत्रेण तस्य नुम् भवति। मित्त्वात् मिदचोऽन्त्यात् परः इति परिभाषया मित् नकारः परः यः अकारः तस्मात् परः भवति। तेन नन् द् इति स्थितिः भवति। नश्चापदान्तस्य झलि इति सूत्रेण अस्य नकारस्य अनुस्वारः भवति। ततश्च अनुस्वारस्य ययि परसवर्णः इति सूत्रेण परसवर्णे कृते नन्द् इति लभ्यते। ततश्च वर्तमाने लट् इति लटि तिपि शपि नन्द् अ ति इति स्थिते वर्णमेलने **नन्दति** इति रूपं सिध्यति।

णद धातोः अन्येषु रूपेषु कोऽपि विशेषो नास्ति। तानि रूपाणि हि - **नन्दति नन्दतः नन्दन्ति। नन्दसि नन्दथः नन्दथ। नन्दामि नन्दावः नन्दामः।**

## [१३.१२] पुगन्तलघूपधस्य च॥ (७.३.८६)

**सूत्रार्थः** - पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः प्रत्यययोः परयोः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण गुणो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। पुगन्तलघूपधस्य (६/१), च इत्यव्ययम्। मिदेर्गुणः इत्यस्मात् सूत्रात् गुणः इति प्रथान्तं पदमनुवर्तते। अङ्गस्य (६/१) इति अधिकृतमस्ति। सार्वधातुकार्धधातुकयोः (७/२) इति सूत्रमायाति। अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुग्णौ इति सूत्रेण पुगागमो विधीयते। अयं पुक् अन्ते यस्य तत् पुगन्तम् अङ्गम् इति बहुव्रीहिसमासः। लघुः उपधा यस्य तद् लघूपधम् अङ्गम् इति बहुव्रीहिसमासः। पुगन्तं च लघूपधं चेति पुगन्तलघूपधम्, तस्य पुगन्तलघूपधस्य इति समाहारद्वन्द्वसमासः।

अस्मिन् सूत्रे कस्य स्थाने गुणः भविष्यति इति स्थानी साक्षात् नोक्तः। किञ्च गुणः इति विधेयपरं गुणपदम् उच्चार्य गुणः विधीयते। अतः इको गुणवृद्धी इति परिभाषया इकः इति षष्ठ्यन्तं पदमत्रोपस्थाप्यते। इदं सूत्रम् अङ्गाधिकारे पठितम्। अङ्गसंज्ञा प्रत्यये परे सति एव फलति। अतः प्रत्यये



इति पदमाक्षिप्यते। तत्रापि सार्वधातुकार्धधातुकयोः इति सप्तमीद्विवचनम्। एतौ अपि प्रत्ययौ एव। अतः प्रत्यये इत्यस्य प्रत्यययोः इति सप्तमीद्विवचनं गृह्यते। तदा पदयोजना भवति - पुगन्तलघूपधस्य च अङ्गस्य इकः गुणः सार्वधातुकार्धधातुकयोः प्रत्यययोः इति।

ततश्च सूत्रार्थो भवति – सार्वधातुके आर्धधातुके च प्रत्यये परे पुगन्तस्य लघूपधस्य अङ्गस्य इकः स्थाने गुणः स्यात् इति।

**उदाहरणम् -** सेधति।

**सूत्रार्थसमन्वयः -** धात्वादेः षः सः इति पूर्वसूत्रोक्तप्रकारेण सिध्-धातोः वर्तमाने लट् इति लटि तिपि शपि सिध् अ ति इति स्थितिः जायते। शप् सार्वधातुकम् परे अस्ति तदा सिध् इति अङ्गम् अस्ति। तस्य इकारः लघुसंज्ञकः उपधासंज्ञकः च। अतः पुगन्तलघूपधस्य च इति प्रकृतसूत्रेण इकः इकारस्य स्थाने गुणे स्थानत आन्तर्याद् एकारे **सेधति** इति रूपं सिध्यति।

षिध गत्याम् इति भ्वादिगणीयः धातुः। अस्य रूपाणि एतावता उपात्तैः सूत्रैरेव भवन्ति। अतः तानि रूपाणि छात्रेण साधनीयानि। सिद्धानि रूपाणि अधः अग्रे दत्तानि सन्ति। - **सेधति सेधतः सेधन्ति। सेधसि सेधथः सेधथ। सेधामि सेधावः सेधामः।**

अधः केचिद् धातवः दीयन्ते। एतावता अतिक्रान्तानि कानिचन सूत्राणि प्रयुज्य तेषां रूपाणि कर्तुं शक्यानि। तानि रूपाणि अभ्यासाय छात्रेण साधनीयानि।

१) **पठ** व्यक्तायां वाचि - **पठति पठतः पठन्ति। पठसि पठथः पठथ। पठामि पठावः पठामः।**

२) **गद** व्यक्तायां वाचि - **गदति गदतः गदन्ति। गदसि गदथः गदथ। गदामि गदावः गदामः।**

३) **अर्च** पूजायाम्- **अर्चति अर्चतः अर्चन्ति। अर्चसि अर्चथः अर्चथ। अर्चामि अर्चावः अर्चामः।**

४) **व्रज** गतौ - **व्रजति व्रजतः व्रजन्ति। व्रजसि व्रजथः व्रजथ। व्रजामि व्रजावः व्रजामः।**

५) **कटँ** वर्षावरणयोः- **कटति कटतः कटन्ति। कटसि कटथः कटथ। कटामि कटावः कटामः।**

६) **क्षि** क्षये - **क्षयति क्षयतः क्षयन्ति। क्षयसि क्षयथः क्षयथ। क्षयामि क्षयावः क्षयामः।**

७) **चितीँ** संज्ञाने - **चेतति चेततः चेतन्ति। चेतसि चेतथः चेतथ। चेतामि चेतावः चेतामः।**

८) **तप** सन्तापे - **तपति तपतः तपन्ति। तपसि तपथः तपथ। तपामि तपावः तपामः।**

९) **शुच** शोके - **शोचति शोचतः शोचन्ति। शोचसि शोचथः शोचथ। शोचामि शोचावः शोचामः।**





## पाठगतप्रश्नाः-७

उपरितनपाठम् अवलम्ब्य अत्र केचित् लघूत्तरीयाः प्रश्नाः दीयन्ते। एतेषाम् उत्तराणि लिखित्वा अन्ते दत्तैः उत्तरैः मेलयत।

४४. षोपदेशधातुः कः। उदारहणं देयम्।

४५. णोपदेशधातुः कः। उदारहणं देयम्।

४६. उपदेशे धात्वादेः षस्य किं भवति, केन च सूत्रेण।

४७. उपदेशे धात्वादेः णस्य किं भवति, केन च सूत्रेण।

४८. उपदेशे यदि धातुः इदित् अस्ति तर्हि किं भवति, केन च सूत्रेण।

४९. सेधति इति रूपे सिध्-धातोः इकारस्य एकारः केन सूत्रेण।

५०. सार्वधातुके परे लघूपधस्य अङ्गस्य इकः गुणः केन सूत्रेण।

५१. नन्दति इत्यत्र नद् धातुः उपदशे कीदृशः।

५२. कस्मिन् परे लघूपधस्य अङ्गस्य इकः गुणः भवति।

१) सार्वधातुके २) आर्धधातुके ३) सार्वधातुके आर्धधातुके च ४) इडागमे

५३. पुगन्तलघूपधस्य च इत्यस्य उदाहरणम् किम्।

१) भवति २) सेधति ३) क्षयति ४) अक्षैषीत्

५४. नन्दति इत्यत्र नद् धातोः अर्थः कः।

१) वृद्धिः २) समृद्धिः ३) सत्ता ४) अव्यक्तः शब्दः

---



## पाठसारः

भूवादयो धातव इति सूत्रेण धातुपाठे पठितानां शब्दस्वरूपाणां धातुसंज्ञा भवति। धातवः क्रियावाचकाः भवन्ति। धातोः अर्थः फलं व्यापारश्च। धातोः व्यापारः विभिन्नेषु कालेषु वर्तते इति द्योतनाय धातोः परं विभिन्नाः लकाराः प्रयुज्यन्ते। एते लकाराः प्राधान्येन लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण विधीयन्ते। तेषां लकाराणां यथा वर्तमानादिकालाः अर्थाः तथा कर्ता कर्म भावः एते अपि अर्थाः सन्ति। अत्र भावशब्दस्यार्थः क्रिया एव। सकर्मकधातोः परं कर्तरि कर्मणि च लकारः भवति। अकर्मकधातोः परं कर्तरि भावे च लकारः भवति। कस्माद् धातोः लकारः कदा कर्तरि कदा कर्मणि इत्यादि विवक्षाधीनम्।



धात्वर्थः व्यापारः वर्तमाने काले वर्तेते इति द्योतनाय वर्तमाने लट् इति सूत्रेण लट् विधीयते। लस्य स्थाने तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातञ्झ-थासाथांध्वम्-इड्वहिमहिङ् इति सूत्रेण अष्टादश आदेशाः विधीयन्ते। एते लादेशाः इति कथ्यते। ततश्च लः परस्मैपदम् इति तङानावात्मनेपदम् इति सूत्रद्वयस्य पर्यालोचनया इदं लभ्यते यत् तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस् परस्मैपदसंज्ञकाः सन्ति। तङ् प्रत्याहारः शानच्-कानचौ च आत्मनेपदसंज्ञाः भवन्ति।

उपदेशे यस्य धातोः अनुदात्ताच् इत् अस्ति, यस्य धातोः ङकारः इत् तादृशात् धातोः अनुदात्तङित आत्मनेपदम् इति सूत्रेण आत्मनेपदसंज्ञकाः प्रत्ययाः विधीयन्ते। उपदेशे यस्य धातोः स्वरिताच् इत् अस्ति, यस्य धातोः ञकारः इत् अस्ति, अपि च तद्धातोः क्रियाफलं कर्तारम् गच्छति इति ईदृशाद् धातोः आत्मनेपदविधानम् स्वरितञितः कर्त्रभिप्राये क्रियाफले इति सूत्रेण क्रियते।

वाक्ये प्रयुक्तस्याप्रयुक्तस्य वा युष्मदः वाच्यं कारकम्, एवञ्च धातोः परं विहितस्य लकारस्य वाच्यं कारकं यदि समानं स्यात् तर्हि धातोः परं मध्यमसंज्ञकः प्रत्ययः भवति "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इति सूत्रेण। अस्मद् लस्य समानाधिकरणः अस्ति चेत् धातोः परम् उत्तमसंज्ञकः प्रत्ययः अस्मद्युत्तम इति सूत्रेण विधीयते। यत्र एकस्मिन् वाक्ये युष्मद्-लकारयोः सामानाधिकरण्यम् एवञ्च अस्मद्-लकारयोः सामानाधिकरण्यम् इति एतद्वयमपि नास्ति चेत् धातोः परम् प्रथमसंज्ञकः प्रत्ययः शेषे प्रथमः इति सूत्रेण विधीयते।

धात्वधिकारोक्तः तिङ् शिच्च सार्वधातुकसंज्ञकः तिङ् शित् सार्वधातुकम् इति सूत्रेण भवति। तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्ययः आर्धधातुकं शेषः इति सूत्रेण आर्धधातुकसंज्ञां लभते। किञ्च लिटः स्थाने विहितः तिङ् लिट् च इति सूत्रेण आर्धधातुकसंज्ञकः भवति। एवञ्च आशीर्वादार्थे विहितस्य लिङः स्थाने विहितः तिङ् लिङाशिषि इति सूत्रेण आर्धधातुकसंज्ञकः भवति।

धातुतः कर्त्रर्थं सार्वधातुकं परम् अस्ति चेत् कर्तरि शप् इति सूत्रेण धातोः परं शप् विधीयते। यदि सार्वधातुके आर्धधातुके वा परे इगन्तम् अङ्गं यदि स्यात् तर्हि "सार्वधातुकार्धधातुकयोः" इति सूत्रेण इकः गुणः विधीयते। इत्थं भू अ ति इति स्थिते भू इत्यस्य ऊकारस्य ओकारः भवति। ओकारस्यापि अवादेशे भवति इति रूपं सिध्यति।

झि इति प्रथमबहुचनस्य प्रत्ययः। तस्य झकारस्य स्थाने अन्त् इत्यादेशः झोऽन्तः इति सूत्रेण भवति। ततश्च भवन्ति इति रूपं सिध्यति। यञादौ सार्वधातुके परे अदन्तस्य अङ्गस्य स्थाने दीर्घः अतो दीर्घो यञि इति सूत्रेण विधीयते।

पाणिनिना धातुपाठे केचिद् धातवः णादित्वेन षादित्वेन च उपदिष्टाः। तेषां णस्य नत्वं षस्य सत्वं च धात्वादेः षः सः, णो नः इति सूत्राभ्यां भवति।

यथा सार्वधातुके आर्धधातुके वा परे इगन्ताङ्गस्य गुणो भवति, तद्वत् यस्य अङ्गस्य उपधा लघ्वी अस्ति, तत्र इग्लक्षणगुणविधानाय पुगन्तलघूपदस्य चेति सूत्रे कृतं पाणिनिना।

एतावान् विषयोऽत्र उपन्यस्तोऽस्ति।





## पाठान्तप्रश्नाः

१. लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रं व्याख्यात।

२. धातोः सकर्मकत्वम् अकर्मकत्वं च सोदाहरणं प्रतिपादयत।

३. लकारान् परिचाययत।

४. वर्तमाने लट् इति सूत्रं व्याख्यात।

५. कालम् आश्रित्य लघुनिबन्धं रचयत।

६. लः परस्मैपदम् इति सूत्रं व्याख्यात।

७. तङानावात्मनेपदम् इति सूत्रं व्याख्यात।

८. तङानावात्मनेपदम् इति सूत्रस्थेन आन इत्यनेन चानशः ग्रहणं कुतो न।

९. अनुदात्तङित आत्मनेपदम् इति सूत्रं व्याख्यात।

१०. स्वरितञितः कर्त्रभिप्राये क्रियाफले इति सूत्रं व्याख्यात।

११. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः इति सूत्रं व्याख्यात।

१२. अस्मद्युत्तमः इति सूत्रं व्याख्यात।

१३. शेषे प्रथमः इति सूत्रं व्याख्यात।

१४. प्रथममध्यमोत्तमानाम् प्रयोगम् अवलम्ब्य प्रबन्धं लिखत।

१५. धातोः लस्य स्थाने तिपः विधानं यावत् कथं सूत्राणि व्यस्थापयन्ति इति विशदीकुरुत।

१६. तिङ् शित् सार्वधातुकम् इति सूत्रं व्याख्यात।

१७. आर्धधातुकं शेषः इति सूत्रं व्याख्यात।

१८. कस्य सार्वधातुकसंज्ञा कस्य वा आर्धधातुकसंज्ञा इति सारं संगृह्णीत।

१९. सार्वधातुकार्धधातुकयोः इति सूत्रं व्याख्यात।

२०. अतो दीर्घो यञि इति सूत्रं व्याख्यात।

२१. पुगन्तलघूपधस्य च इति सूत्रं व्याख्यात।

२२. एतानि रूपाणि ससूत्रं साधयत। - भवति, भवन्ति, भवामि, भवामः।

२३. ससूत्रं रूपाणि साधयत – नन्दति, सेधति, नन्दन्ति, सेधामि।





## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि- १**

१. लादेशाः सकर्मकधातुभ्यः कर्मणि कर्तरि च भवन्तीति प्रथमवाक्यम्। लादेशाः अकर्मकेभ्यः धातुभ्यः भावे कर्तरि च विधीयन्ते द्वितीयं वाक्यम्।

२. यस्य धातोः अर्थः फलम् एकस्मिन् कारके वर्तते, व्यापारः अपरस्मिन् कारके वर्तते स धातुः सकर्मकः कथ्यते।

३. यस्य धातोः फलम् यस्मिन् कारके वर्तते, व्यापारः अपि तस्मिन्नेव कारके वर्तते स धातुः अकर्मकः कथ्यते।

४. दश।

५. षट्।

६. चत्वारः।

७. लेट्।

८. यस्य धातोः अर्थः व्यापारः अर्थात् क्रिया वर्तमानकाले वर्तते स धातुः वर्तमानक्रियावृत्तिः कथ्यते। वर्तमाने (काले) क्रियायाः वृत्तिः यस्य स वर्तमानक्रियावृत्तिः धातुः।

९. भू।

१०. लट्। वर्तमाने लट्।

**उत्तराणि- २**

११. तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-त-आताम्-झ-थास्-आथाम्-ध्वम्-इट्-वहि-महिङ् इति एते अष्टादश लादेशाः।

१२. तिप् तस् झि सिप् थस् थ मिप् वस् मस् इति एतेषां परस्मैपदसंज्ञा।

१३. त आताम् झ थास् आथाम् ध्वम् इट् वहि महिङ् इति एवञ्च शानच् कानच् इति एतेषाम् आत्मनेपदसंज्ञा।

१४. लः परस्मैपदम्।

१५. तङानावात्मनेपदम्।

१६. यदा अनुबन्धरहितस्य उच्चारणं क्रियते तदा तेन अनुबन्धसहितस्य ग्रहणं कर्तव्यमिति निरनुबन्धकग्रहणे सानुबन्धकस्य इति परिभाषार्थः।

**उत्तराणि- ३**





१७. आत्मनेपदसंज्ञकः।

१८. आत्मनेपदसंज्ञकः।

१९. धातुनिष्ठानि।

२०. द्वन्द्वसमासस्य आदौ मध्ये अन्ते वा विद्यमानम् द्वन्द्वसमासस्य अनङ्गभूतम् पदम् द्वन्द्वसमासे विद्यमानैः पदैः प्रत्येकम् अभिसम्बध्यते, अन्वेति इति।

२१. लस्य।

२२. भ्वादिप्रकरणे आलोचितानि आत्मनेपदविधानस्य कानिचन निमित्तानि - उपदेशे यस्य धातोः अनुदात्ताच् इत् अस्ति, यस्य धातोः ङकारः इत् अस्ति द्वे निमित्ते। एवञ्च उपदेशे यस्य धातोः स्वरिताच् इत् अस्ति, यस्य धातोः ञकारः इत् अस्ति, अपि च तद्धातोः क्रियाफलं कर्तारम् गच्छति इत्यपि द्वे निमित्ते आत्मनेपदविधानस्य।

२३. ञितो धातोः कर्तृगामिनि क्रियाफले आत्मनेपदं विधीयते।

२४. एधँ वृद्धौ। कमुँ कान्तौ।

२५. आत्मनेपदनिमित्तहीनः धातुः हि शेषपदार्थः।

२६. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः।

२७. तान्येकवचनद्विवचनबहुवचनान्येकशः।

**उत्तराणि- ४**

२८. वाक्ये युष्मद् लस्य समानाधिकरणः अस्ति चेत् मध्यमः विधीयते।

२९. वाक्ये अस्मद् लस्य समानाधिकरणः अस्ति चेत् उत्तमः विधीयते।

३०. वाक्ये मध्यमोत्तमयोः अविषये प्रथमः विधीयते।

३१. वाच्यम्, अर्थः, अभिधेयः।

३२. युष्मद्-लकारयोः सामानाधिकरण्यं चेत् धातोः मध्यमो विधेयः। अस्मद्-लकारयोः सामानाधिकरण्यं चेत् धातोः उत्तमो विधेयः इति उक्ताद् एतद्द्वयाद् अन्यः शेषः। सामानाधिकरण्यद्वयं वाक्ये नास्ति चेत् शेषः अस्ति। एवञ्च तदा धातोः प्रथमसंज्ञकः विधेयः।

**उत्तराणि- ५**

३३. धात्वधिकारोक्तः तिङ् शित् च सार्वधातुकसंज्ञः।

३४. तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्ययः, लिडादेशः तिङ्, आशिषि लिङादेशः तिङ् च आर्धधातुकसंज्ञकाः भवन्ति।

३५. तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्ययः शेषः।



३६. कोऽपि लकारः सार्वधातुकसंज्ञकः नास्ति, तिङ्भिन्नत्वात् शिद्भिन्नत्वाच्च।

३७. लिडादेशः तिङ्, आशिषि लिङादेशः तिङ् च आर्धधातुकसंज्ञकः भवतः।

३८. आर्धधातुकम्।

३९. लुटि लृटि लुङि लृङि च धातु-लकारयोः मध्ये तास् स्य च्लि स्य एते विधीयन्ते। ते धातोः विहिताः तिङ्भिन्नाः, शिद्भिन्नाः च सन्ति। अतः आर्धधातुकसंज्ञकाः सन्ति।

**उत्तराणि- ५**

४०. कर्त्रर्थे सार्वधातुके परे धातोः शप् भवति।

४१. सार्वधातुकार्धधातुकयोः इति सूत्रेण।

४२. प्रत्ययावयवस्य झकारस्य स्थाने अन्त् इत्यादेशः स्यादिति झोऽन्तः इति सूत्रस्यार्थः।

४३. भवसि।

४४. उपदेशे यस्य धातोः आदिः षकारः भवति स षोपदेशधातुः। यथा षिध।

४५. उपदेशे यस्य धातोः आदिः णकारः भवति स णोपदेशधातुः। यथा णीञ्।

४६. उपदेशे धात्वादेः षस्य सकारः भवति, धात्वादेः षः सः इति सूत्रेण।

४७. उपदेशे धात्वादेः णस्य नकारः भवति, णो नः इति सूत्रेण।

४८. उपदेशे यदि धातुः इदित् अस्ति तर्हि इदितो नुम् धातोः इति सूत्रेण तस्य नुमागमः भवति।

४९. पुगन्तलघूपधस्य च।

५०. पुगन्तलघूपधस्य च।

५१. नन्दति इत्यत्र नद् धातुः उपदशे टुनदि इतीदृशः।

५२. ३

५३. २

५४. २

॥इति त्रयोदशः पाठः ॥



# १४

# भ्वादिप्रकरणे - भूधातोः लिटि लुटि च रूपसाधनम्

## प्रस्तावना

व्याकरणाध्ययनं सोपनक्रमेण भवति। अर्थात् दशमकक्षायाः व्याकरणस्य पुस्तकं यो जानाति स एव अत्र पठितुं बोद्धुम् रूपाणि च साधयितुम् प्रभवेत्। भूवादयो धातव इति सूत्रेण धातुपाठपठितानां धातूनां धातुसंज्ञा भवतीति दशमकक्षायाः पाठ्यपुस्तके विषयः आसीत्। सम्प्रति अपि तिङन्तप्रकरणे लट्-लकारे बहूनि सूत्राणि गतानि यानि अत्र लिल्लकारे प्रयुज्यन्ते। अतः लल्लकारस्य सम्यग् ज्ञानमुपार्ज्य अत्र प्रवर्तितव्यम्। एवञ्च रूपसाधने यद्यपि पूर्वसूत्राणि परिभाषाः बाहुल्येन आवश्यकानि तथापि तानि सर्वाणि सर्वेषु रूपेषु नोच्यन्ते। कानिचन रूपाणि नायकत्वेन प्रदर्श्यन्ते। अन्येषु रूपेषु छात्रेण स्वयं तानि स्थलानि ऊह्यानि इति अपेक्षा।

साधुधातुरूपसाधनं प्रधानं लक्ष्यमत्र। प्रथमं धातुसंज्ञा। ततः लकारविधानम्। ततः लादेशविधानम्। ततः सति प्रसङ्गे शबादिविकरणविधानम्। लिट्-लकारे अभ्यासकार्यम्। ततः धातु-प्रत्यययोः सन्धिकार्याणि। एवं क्रमेण सामान्यतः रूपं सिद्धं भवति। एतावता धातुसंज्ञा, लकारविधानम्, लस्य स्थाने तिङो विधानम्, क्वचित् धातु-प्रत्यययोः सन्धिः इति एतानि कार्याणि अतिक्रान्तानि पूर्वस्मिन् पाठे। इतः परं लिट्-लकारे एतेषाम् उपयोगः, अभ्यासादिकार्याणि च नूत्नः विषयः समायाति।

लिट्-लकारोत्तरं लुट् लकारः प्रस्तूयते अस्मिन् पाठे एव। यतो हि लकाराणां क्रमः माहेश्वरसूत्रक्रमेणास्ति। यद्यपि पाणिनिः स्वयम् अष्टाध्याय्यां भिन्नेनैव क्रमेण सूत्राणि उपन्यस्तवान् तथापि सर्वादृतः क्रमः अत्रापि आद्रियते।



## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- लिट्-लकारस्य सूत्राणि बुध्यात्।
- लिटि धातुरूपाणि साधयितुं प्रभवेत्।
- लिट्-लकारं प्रयोक्तुं समर्थो भवेत्।
- संस्कृतव्याकरणे परोक्षकालं जानीयात्।



- अभ्यासकार्यं कर्तुं प्रभवेत्।
- भूधातोः लुट्-लकारे रूपाणि कथं भवन्ति इति ज्ञास्यति।
- लुट्-लकारस्य सूत्राणि व्याख्यातुं प्रभवेत्।
- अनद्यतनभविष्यत्कालीनायाः क्रियायाः प्रकटनाय लुट् प्रयोक्तुं समर्थो भविष्यति।
- अनुवृत्तिः अधिकारः आक्षेपः तदादिविधिः तदन्तविधिः एषाम् इतोऽपि अधिकान् प्रयोगस्थलान् ज्ञास्यति।

## भूधातोः लिट्-लकारः रूपाणि

### [१४.१] परोक्षे लिट्॥ (३.२.११५)

**सूत्रार्थः** - भूताऽनद्यतनपरोक्षार्थवृत्तेर्धातोः लिट् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सूत्रेणानेन लिट्लकारो विधीयते। द्विपदात्मकमिदं सूत्रम्। परोक्षे इति सप्तम्येकवचनान्तं समस्तपदम्। अक्ष्णोः परम् परोक्षम् इति अव्ययीभावसमासः। अक्षिशब्दोऽत्र इन्द्रियसामान्यवाची। इन्द्रियागोचरत्वं परोक्षत्वम्। लिट् इति प्रथमैकवचनान्तं पदम्। अनद्यतने लङ् इति सूत्राद् अनद्यतने इति सप्तम्यन्तं पदमनुवर्तते। अद्य भवः अद्यतनः, अविद्यमानः अद्यतनः यस्मिन् सः अनद्यतनः कालः इति बहुव्रीहिसमासः। अतीतरात्रेः अन्त्ययामेन आगामिरात्रेः आद्ययामेन सहितः कालः अद्यतनः। तद्भिन्नः अनद्यतनः। भूते इत्यधिकारपठितमिदं सूत्रम्। भूतत्वं नाम अतीतकालः। धातोः इति अधिकृतमस्ति। प्रत्ययः (३.१.१), परश्च (३.१.२) सूत्रद्वयम् अत्र अधिकृतम्। सूत्रमिदं प्रत्ययाधिकारे पठितम्। तस्मात् लिट् इति प्रत्ययः। धातोः इति पञ्चम्यन्तं पदम्। तस्मादित्युत्तरस्य इति परिभाषाप्रभावेन परश्च इति सूत्रबलेन च लिट् धातोः अव्यवहितः परः विधीयते। एतेन भूते अनद्यतने परोक्षे धातोः परः लिट् प्रत्ययः इति सूत्रगतपदान्वयः। लिडिति प्रथमान्तं विधेयबोधकं पदम्। भूते अनद्यतने परोक्षे इति त्रिष्वेव सप्तम्यन्तपदेषु विषयसप्तमी। एवं क्रियायाः भूताऽनद्यतनपरोक्षत्वविवक्षायां धातोः लिट् स्यात् इति सूत्रार्थो भवति।

धातोः अर्थः व्यापारः फलं चेति उक्तमेव। यस्य धातोः अर्थः व्यापारः अर्थात् क्रिया अनद्यतने भूते परोक्षे च वर्तते स धातुः भूताऽनद्यतनपरोक्षार्थवृत्तिः कथ्यते। तस्मिन् काले क्रियायाः वृत्तिः यस्य स भूताऽनद्यतनपरोक्षक्रियावृत्तिः धातुः। यदि तस्मिन् काले क्रिया इति प्रकटनस्य विवक्षा अस्ति तर्हि धातोः लिट् विधीयते।

**उदाहरणम्** - रामः अयोध्याया राजा बभूव।

**सूत्रार्थसमन्वयः** - अयोध्यायां राजा रामः आसीत्। परन्तु तदवस्थं भूतं रामम् वक्ता न प्रत्यक्षीकृतवान्। अतः अत्र लिट् प्रयुक्तः।



**बभूव** - भूधातोः भूतानद्यतनपरोक्षार्थवृत्तित्वविवक्षायां परोक्षे लिट् इति सूत्रेण कर्तरि लिट्लकारो विधीयते। लिटः इकारटकारयोः इत्संज्ञायां लोपे च कृते भू ल् इति स्थिते लस्य स्थाने प्रथमपुरुषैकवचनविवक्षायां तिपि भू ति इति भवति। तदा -

## [१४.२] परस्मैपदानां णलतुसुस्थलथुसणल्वमाः॥(३.४.८२)

**सूत्रार्थः** - लिटः स्थाने विधीयमानानां परस्मैपदसंज्ञकानां तिबादीनां नवानां स्थाने णलादयः नव प्रत्ययाः स्युः।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं साक्षाल्लक्ष्यसंस्कारत्वाद् विधिसूत्रम्। द्विपदात्मकमिदं सूत्रम्। परस्मैपदानाम् इति षष्ठीबहुवचनान्तं पदम्। इयं च स्थानषष्ठी। तेन परस्मैपदसंदज्ञकानां प्रत्ययानां स्थाने इत्यर्थ आयाति। तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस् इति नव परस्मैपदसंज्ञकाः प्रत्ययाः। णल्-अतुस्-उस्-थल्-अथुस्-अ-णल्-व-माः इति प्रथमाबहुवचनान्तं समस्तपदम्। णल् च अतुस् च उस् च थल् च अथुस् च अः च णल् च वः च मः च णलतुसुस्थलथुसणल्वमाः, इति इतरेतरद्वन्दसमासः। लिटस्तझयोरेशिरेच् इति सूत्रात् लिटः इति षष्ठ्यन्तं पदमनुवर्तते। धातोः (३.१.९१) इत्यधिक्रियते। धातोः लिटः परस्मैपदानां णलतुसुस्थलथुसणल्वमाः इति सूत्रगतपदान्वयः। तेन लिट्स्थानिकानां परस्मैदसंज्ञकानां नवानां प्रत्ययानां स्थाने णलादयः नव प्रत्ययाः क्रमेण स्युरित्यर्थः।

णलादयो नव प्रत्ययाः। परस्मैदसंज्ञका अपि नव एव। अत स्थान्यादेशयोः समसंख्यकत्वात् यथासंख्यमनुदेशः समानाम् इति परिभाषया तिबादीनां स्थाने णलादयः क्रमेण भवन्ति। तद्यथा-

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| | **स्थानी - आदेशः** | **स्थानी - आदेशः** | **स्थानी - आदेशः** |
| **प्रथमपुरुषः** | तिप् - णल् (अ) | तस् - अतुस् | झि - उस् |
| **मध्यमपुरुषः** | सिप् - थल् (थ) | थस् - अथुस् | थ - अ |
| **उत्तमपुरुषः** | मिप् - णल् (अ) | वस् - व | मस् - म |

तिबादीनां स्थाने णलादयः विधीयन्ते। यावत् णलादयः तिबादीनां स्थानग्रहणं कुर्वन्ति तावत् तिबादीनां धर्माः णलादिषु न आरोप्यन्ते। अतः एव णलादीनां प्रत्ययसंज्ञा अपि णलादिप्रयोगात् उत्तरमेव। अतः यावत् णल् तिपः निवृत्तिं न करोति तावत् णल् प्रत्ययः नास्ति। प्रत्ययः नास्ति चेत् चुटू इति सूत्रेण तस्य आद्यस्य णकारस्य इत्संज्ञा न भवति। अतः प्रयोगात् पूर्वं णलः अनेकाल्त्वम् अस्ति। तेन अनेकाल्शित् सर्वस्य इति सूत्रे सर्वस्य तिपः स्थाने एव आदेशः भवति न तु अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य। एवं तेषु तेषु प्रत्ययेषु बोध्यम्। एवञ्च अ इत्यादेशो यद्यपि एकाल् तथापि अयम्



(अ+अ) द्वयोः अकारयोः प्रश्लेषात् संहितया सिद्ध आदेशः। अतो गुणे इति पररूपमत्र भवति, तेनात्र सवर्णदीर्घो न भवति। तेनात्र सर्वादिशत्वं निर्बाधं सम्भवति।

**उदाहरणम् -**

| स्थानी | आदेशः | उदाहरणम् |
|---|---|---|
| तिप् | णल् (अ) | बभूव |
| तस् | अतुस् | बभूवतुः |
| झि | उस् | बभूवुः |
| सिप् | थल् (थ) | बभूविथ |
| थस् | अथुस् | बभूवथुः |
| थ | अ | बभूव |
| मिप् | णल् | बभूव |
| वस् | व | बभूविव |
| मस् | म | बभूविम |

**सूत्रार्थसमन्वयः** - भू ति इत्यवस्थायां परस्मैपदसंज्ञकस्य तिपः स्थाने प्रकृतसूत्रेण णलादेशे लस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण लस्य लोपे च ण इत्यस्य अनेकाल्त्वात् अनेकाल्शित् सर्वस्य इति सूत्रेण तिपः सर्वस्य स्थाने णादेशे भू ण इति जायते। अत्र ण इत्यस्य स्थानिवद्भावेन प्रत्ययसंज्ञा भवति। चुटू इति सूत्रेण प्रत्ययाद्यस्य णकारस्य इत्संज्ञा भवति, तस्य लोपः इति सूत्रेण णस्य लोपः च भवति। तदा भू अ इति स्थितिः जायते। तदा -

## [१४.३] भुवो वुग् लुङ्-लिटोः॥ (६.४.८८)

**सूत्रार्थः** - लुङ्लिट्लकारसम्बन्धिनि अज्वर्णे परतः भूधातोः वुगागमो भवति।

**सूत्रव्याख्या** - सूत्रमिदं साक्षाल्लक्ष्यसंस्कारतया विधिकोटौ अन्तर्याति। त्रिपदात्मकेऽस्मिन् सूत्रे भुवः वुक् लुङ्लिटोः इति पदच्छेदः। अत्र भुवः इति भूशब्दस्य षष्ठ्यन्तं रूपम्। लुङ्लिटोः इति सप्तमीद्विवचनान्तं समस्तपदम्। पदद्वयमेव उद्देश्यबोधकं पदम्। लुङ् च लिट् च लुङ्लिटौ इतीतरेतरयोगद्वन्दसमासः, तयोः लुङ्लिटोरिति। वुक् इति प्रथमान्तं विधेयसमर्पकं पदम्। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इति सूत्रात् अचि इति सप्तम्यन्तपदमत्रानुवर्तते। लुङ्लिटोः अचि इत्युभयं पदं समविभक्तिकत्वात् अभेदेनार्थबोधं जनयति। किञ्च अचीति पदं लुङि, लिटि चोभयस्मिन् पृथक्तया



अन्वेति। तेन लुङ्सम्बन्धिनि अचि परे तथा लिट्सम्बन्धिनि अचि परे इत्यर्थ आयाति। अङ्गस्य इत्यधिकृतम्। पदयोजना - लुङ्लिटोः अचि अङ्गस्य भुवः वुक्। अङ्गस्य भुवः इति पदद्वयं षष्ठ्यन्तं समानविभक्तिकम्। परन्तु अत्र तदन्तविधिर्नास्ति। अभेदान्वयः भवति। अङ्गं यो भूः तस्य इत्यर्थो भवति। सूत्रार्थो भवति - लुङ्लिट्सम्बन्धिनि अचि परतः अङ्गसंज्ञकस्य भुवः वुगागमो भवति इति।

वुकः उकारः उच्चारणार्थः। किञ्च ककारः औपदेशिकत्वात् हलन्त्यम् इत्यनेन इत्संज्ञकः। तेन वुक् इत्ययमागमः आद्यन्तौ टकितौ इति परिभाषया कित्त्वात् भूशब्दस्य अन्तावयवो भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - भू अ इति स्थिते लिट्सम्बन्धिनि अकाररूपे अज्वर्णे परतः प्रकृतसूत्रेण भू इत्यस्य वुक् इत्ययमागमो भवति। स च आगमः कित्त्वात् भूशब्दस्य अन्त्याद् ऊकारात् परं भवति, तस्यैव अन्त्यावयवश्च भवति। तेन भूव् अ इति जायते। तदा -



## पाठगतप्रश्नाः-१

१. किं परोक्षत्वम् लिटि।

२. लिट् कदा प्रयोक्तव्यः।

३. तिपः णल् कथं सर्वादिशः।

४. भुवः वुक् केषु लकारेषु।

५. भुवो वुग् लुङ्-लिटोः इति सूत्रेण विहितः वुक् कः।

१) आगमः २) आदेशः ३) प्रत्ययः ४) स्थानी

---

## [१४.४] लिटि धातोरनभ्यासस्य॥ (६.१.८)

**सूत्रार्थः** - लिटि परे अनभ्यासधात्ववयवस्य एकाचः प्रथमस्य द्वे स्तः, आदिभूतादचः परस्य तु द्वितीयस्य।

**सूत्रव्याख्या** - षड्विधसूत्रेषु इदं विधिसूत्रम्। त्रिपदात्मकेऽस्मिन् सूत्रे लिटि धातोः अनभ्यासस्य इति पदच्छेदः। तत्र लिटि इति सप्तम्येकवचनान्तं पदम्। औपश्लेषाधिकरणं च सप्तम्यर्थः। धातोः इति षष्ठ्येकवचनान्तं पदम्। अवयवावयविभावसम्बन्धेनात्र षष्ठी विहिता। अतः धात्ववयवस्य इति तदर्थः। अनभ्यासस्य इति षष्ठ्येकवचनान्तं समस्तपदम्। न अभ्यासः अनभ्यासः, तस्य अनभ्यासस्य इति नञ्समासः। अभ्याससंज्ञारहितस्य इति तदर्थः। एतच्च धातोः इत्यस्य विशेषणं, समविभक्तिकत्वात्। एकाचो द्वे प्रथमस्य , अजादेर्द्वितीयस्य चेति सूत्रद्वयमत्र अधिक्रियते। तत्र एकाचः इति षष्ठ्येकवचनान्तं समस्तपदम्। एकः अच् यस्य यस्मिन् वा स एकाच् , तस्य एकाचः इति बहुव्रीहिसमासः। एतच्च धातोः इत्यनेन सम्बध्यते। तेन धात्ववयवस्य एकाचः इति तदर्थः। प्रथमस्य इत्यपि षष्ठ्येकवचनान्तम्, एकाचः



इत्यस्य विशेषणम्। द्वे इति प्रथमान्तं विधेयबोधकं पदम्। अजादेः इति पञ्चम्येकवचनान्तं समस्तपदम्। अच् चासौ आदिश्च अजादिः इति कर्मधारयसमासः। तस्माद् अजादेः इति। द्वितीयस्य इति षष्ठ्येकवचनान्तं पदम्। सूत्रगतपदानामन्वयः एवम् - लिटि अनभ्यासस्य धातोः प्रथमस्य एकाचः द्वे, अजादेः द्वितीयस्य इति। द्वे इत्यनेन द्विरुच्चारणं द्विः प्रयोगो वा विधीयते।

सूत्रे वाक्यद्वयं वर्तते। तद्धि - प्रथमं वाक्यम् - लिटि परे अभ्याससंज्ञारहितस्य धातोः अवयवभूतस्य प्रथमैकाज्भागस्य द्वित्वं भवति।

द्वितीयं वाक्यम् - धातुः अनेकाच् तथा अजादिः चेत् लिटि परतः तस्यैव धातोः द्वितीयस्य एकाज्भागस्य द्वित्वं भवतीति

अत्र उत्तरवाक्ये अजादेर्द्वितीयस्येत्यत्र द्वितीयस्येति वचनात् धातौ अनेकाच्त्वं विशिष्यते। अन्यथा एकाज्धातौ द्वितीयस्य अज्भागस्य अभावात् द्वितीयस्येति वचनं व्यर्थं स्यात्।

अतः सूत्रार्थ एवं भवति - लिटि परतः अभ्याससंज्ञारहितस्य धात्ववयवस्य प्रथमस्य एकाचः द्विः प्रयोगो भवति, आदिभूतादचः परस्य तु द्वितीयस्य एकाज्भागस्य द्विः प्रयोगो भवति इति।

**उदाहरणे सूत्रार्थसमन्वयः** - भूधातोः लिटि तिपि णलि वुगागमे च कृते भूव् अ इति स्थितिः जाता। धातोः अभ्याससंज्ञा नास्ति। अतः प्रकृतसूत्रेण लिटि परतः प्रथमस्य अज्भागस्य द्विः प्रयोगो भवति। तेन भूव् भूव् अ इति जायते। तदा -

[**विमर्शः** - एकाचः इत्यत्र बहुव्रीहिरेव ग्राह्यः। एकश्चासौ अच्च एकाच्, तस्य एकाचः इति कर्मधारयस्वीकारे तु इणाद्येकाज्धातूनां द्वित्वं सिध्यति, किन्तु पचादीनां धातूनां द्वित्वं न भवति। तेन पपाच इत्यादि न सिध्येत। बहुव्रीहिस्वीकारे तु इयाय इत्यादिस्थले इणादीनां द्वित्वं व्यपदेशिवद्भावेन सिध्यतीति न दोषः। किञ्च अजादेः इत्यत्र कर्मधारयसमास एव ग्राह्यः। अन्यथा अच् आदिर्यस्य अजादिः, तस्य अजादेरिति बहुव्रीहिस्वीकारे तु इन्द्रीय इति क्यजन्तात् सनि इन्द्रिद्रीयिषति इतीष्टं रूपं न सिद्ध्यति।]

## [१४.५] पूर्वोऽभ्यासः॥ (६.१.४)

**सूत्रार्थः** - षाष्ठद्वित्वप्रकरणे यत् द्वित्वं विहितं, तयोः पूर्वस्य अभ्याससंज्ञा भवति।

**सूत्रव्याख्या** - शक्तिग्राहकत्वात् षड्विधेषु पाणिनीयसूत्रेष्विदं संज्ञासूत्रम्। सूत्रेऽस्मिन् द्वे पदे स्तः। पूर्वः अभ्यासः इति सूत्रगत-पदच्छेदः। पदद्वयमपि प्रथमैकवचनान्तम्। सूत्रेणानेन अभ्याससंज्ञा विधीयते। कस्येयं संज्ञेति आकाङ्क्षायां एकाचो द्वे प्रथमस्य (६.१.१) इति सूत्रात् द्वे इति पदमनुवर्तते। तच्च द्वयोः इति षष्ठीद्विवचनतया विपरिणमते। सूत्रमिदं एकाचो द्वे प्रथमस्य इति सूत्राधिकारे पठितम्। अतः द्विरुक्तयोः पूर्वभागस्य अनेन अभ्याससंज्ञा विधीयते। द्वयोः पूर्वः अभ्यासः इत्यन्वयः। सूत्रार्थो भवति - षाष्ठद्वित्व-प्रकरणे ये द्वे विहिते, तयोः पूर्वभागः अभ्याससंज्ञको भवति इति।

अभ्याससंज्ञायाः फलम् अभ्यासे चर्च (८.४.५४) , ह्रस्वः (७.४.४९) इत्यादिसूत्रेषु स्पष्टम्।



**उदाहरणे सूत्रार्थसमन्वयः** - भूधातोः लिटि धातोरनभ्यासस्य (६.१.८) द्वित्वे कृते भूव् भूव् अ इति स्थितिरुद्भूता। अत्र द्वित्वविधायकसूत्रं षाष्ठद्वित्वप्रकरणे विद्यते। अतः प्रकृतसूत्रेण पूर्वभागस्य अभ्याससंज्ञा भवति। तदा -

## [१४.६] हलादिः शेषः। ७.४.६०॥

**सूत्रार्थः** - अभ्यासस्य आदिः हल् एव शिष्यते, अन्ये हलो लुप्यन्ते।

**सूत्रव्याख्या** - षड्विधपाणिनीयसूत्रेषु विधिसूत्रमिदम्। त्रिपदात्मकमिदं सूत्रम्। हल् आदिः शेषः इति पदच्छेदः। त्रीण्यपि पदानि प्रथमैकवचनान्तानि। शिष्यते इति शेषः। इतरनिवृत्तिपूर्वकावस्थित्यर्थे विद्यमानात् शिष्-धातोः कर्मणि घञा निष्पन्नोऽयं शब्दः। अत्र लोपोऽभ्यासस्य इति सूत्रात् अभ्यासस्य इति षष्ठ्यन्तपदमनुवर्तते। एवम् अभ्यासस्य आदिः हल् शेषः पदयोजना। तेन सूत्रार्थो भवति- अभ्यासस्य आदिः हल् एव शिष्यते, अन्ये हलो लुप्यन्ते इति। शिष्-धातोः इतरनिवृत्तिरूपव्यापारेण अन्येषां हलाम् अदर्शनं भवति इति फलितार्थकथनम्।

सूत्रे हलादिः इति न समासः। अनेन सूत्रेण अभ्यासे विद्यमानेषु हल्सु आद्यः हल् शिष्यते, अवशिष्यते, न लुप्यते। अन्ये हलः लुप्यन्ते, अदर्शनतां व्यवहाराभावं गच्छन्तीत्यर्थः। एवञ्च अनेन सूत्रेण अभ्यासे विद्यामानानाम् अचां विषये किमपि नोक्तम्। अतः आदिः अच् भवतु अनादिः वा अच् भवतु स न लुप्यते अनेन सूत्रेण। हलेव अस्य विषयः न तु अच्।

**उदाहरणे सूत्रार्थसमन्वयः** - भूव् भूव् अ इत्यवस्थायां पूर्वोऽभ्यासः (६.१.४) इति सूत्रेण भूव् इति पूर्वस्य अभ्याससंज्ञा जाता। ततश्च प्रकृतसूत्रेण अभ्याससंज्ञकस्य भूव् इत्यस्य हल्सु आदिः भकारः शिष्यते, अन्ये हलः अर्थात् वकारः लुप्यते। अभ्यासे य ऊकारः अस्ति स न लुप्यते। तेन भू भूव् अ इति जायते। तदा -

## [१४.७] ह्रस्वः॥ (७.४.५९)

**सूत्रार्थः** - अभ्यासस्याचो ह्रस्वः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्, एकपदात्मकं च। ह्रस्वः इति प्रथमान्तं विधेयबोधकं पदम्। सूत्रे उद्देश्यबोधकं पदं नास्ति। अत्र लोपोऽभ्यासस्य इति सूत्रात् उद्देश्यसमर्पकम अभ्यासस्य इति षष्ठ्यन्तं पदमनुवर्तते। अस्मिन् सूत्रे स्थानी साक्षात् नोल्लिखितः। एवञ्च ह्रस्वः इति विधेयपरं शब्दम् उच्चार्य अच् विधीयते। अतः अचश्च इति परिभाषयाऽत्र अचः इति षष्ठ्यन्तं पदमुपतिष्ठते। अभ्यासस्य अचः ह्रस्वः इति पदयोजना। सूत्रार्थो भवति - अभ्यासस्य अचः ह्रस्वः स्यादिति।

**उदाहरणे सूत्रार्थसमन्वयः** - भू भूव् अ इत्यवस्थायां प्रकृतसूत्रेण अभ्याससंज्ञकस्य भू इत्यस्य ऊकारस्य ह्रस्वे उकारे च कृते भु भूव् अ इति स्थितिर्भवति। तदा -

## [१४.८] भवतेरः॥ (७.४.७३)

**सूत्रार्थः** - भूधातोः अभ्यासस्य उकारस्य अकारः स्यात् लिटि परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। भवतेः अः इति सूत्रगतपदच्छेदः। द्विपदात्मकेऽस्मिन् सूत्रे भवतेः इति षष्ठ्यन्तं पदम्। भवति इत्यस्य षष्ठ्येकवचने रूपमिदम्। भूधातोः इति तदर्थः। इक्श्तिपौ धातुनिर्देशे इति शास्त्रेण धातुनिर्देशार्थं श्तिप्-प्रत्यययोगे भूधातोः भवतिः इति सुबन्तम् रूपं भवति। तस्यैव षष्ठ्यां रूपमिदम्। स्थानषष्ठी इयम्। अः इति प्रथमान्तं विधेयसमर्पकं पदम्। व्यथो लिटि इति सूत्रात् लिटि इति सप्तम्यन्तं पदमनुवर्तते। अत्र लोपोऽभ्यासस्य इति सूत्रात् अभ्यासस्य इति षष्ठ्यन्तं पदमनुवर्तते। एवम् लिटि भवतेः अभ्यासस्य अः इति सूत्रगतपदान्वयः। अत्र अभ्यासस्य इति अल्समुदायबोधकात् स्थानषष्ठी श्रूयते। अतः अलोऽन्त्यस्य इति परिभाषया भूधातोः अभ्यासस्य अन्त्यस्य अलः स्थाने एव अकारः भवति। अन्त्यः अलत्र उकार एव। एवमर्थो लभ्यते - लिट्-संज्ञकप्रत्ययः परम् अस्ति चेत् भू-धातोः अभ्यासस्य उवर्णस्य अकारः भवतीति सूत्रार्थः।

**उदाहरणे सूत्रार्थसमन्वयः** - भू-धातोः लिटि तिपि णलि वुगागमे आद्यावयवे द्वित्वे अभ्याससंज्ञायाम् अभ्यासकार्ये भु भूव् अ इति स्थितिः जाता। अत्र णल् इति लिट्-संज्ञकप्रत्ययः परे अस्ति। अतः प्रकृतसूत्रेण भू-धातोः अभ्यासस्य उकारस्य स्थाने अकारादेशः भवति। अतः भ भूव् अ इति स्थितिः जायते। तदा -

## [१४.९] अभ्यासे चर्च॥ (८.४.५३)

**सूत्रार्थः** - अभ्यासे झलां चरः स्युः जशश्च। झशां जशः खयां चरः इति विवेकः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। अभ्यासे चर् च इति सूत्रगतपदच्छेदः। अभ्यासे इति सप्तम्यन्तं पदम्। चर् इति प्रथमान्तं पदम्। चर् इति प्रत्याहारः। वर्गप्रथमवर्णाः श् ष् स् एते तस्य वाच्याः। च इति अव्ययपदम्। झलां जश् झशि इति सूत्रात् झलाम् इति षष्ठ्यन्तं पदं जश् इति प्रथमान्तं पदम् च अनुवर्तते। झल् इति प्रत्याहारः। अतः अभ्यासे झलां जश् चर् च इति सूत्रगतपदान्वयः। तेन सूत्रस्यार्थः भवति अभ्यासे झलां स्थाने चरः जशः च भवन्ति।

**विशेषः** - अत्र झल्-प्रत्याहारस्थवर्णानां स्थाने चर्-प्रत्याहारस्थवर्णाः जश्-प्रत्याहारस्थवर्णाः च विधीयन्ते। झल्प्रत्याहारे चतुर्विंशतिः वर्णाः सन्ति, तथा जश्प्रत्याहारे चर्-प्रत्याहारे च आहत्य दशवर्णाः सन्ति। एवं स्थानिनः चतुर्विंशतिः, आदेशाश्च दश एव। तत्र झश्-प्रत्याहारस्थवर्णानां स्थाने जश्-प्रत्याहारस्थवर्णाः भवेयुः खय्-प्रत्याहारस्थवर्णानां स्थाने च चर्-प्रत्याहारस्थवर्णाः स्युः इति। एतच्च स्थानेऽन्तरतमः इति परिभाषया यत्नतः आन्तरतम्यपरीक्षामादायैव निर्णितम्। तत्र खय्-प्रत्याहारस्थवर्णानां बाह्यप्रयत्नाः - विवारः, श्वासः, अघोषश्च। चर्-प्रत्याहारस्थवर्णा अपि तादृशप्रयत्नवन्तः। एवमेव झश्-प्रत्याहारस्थवर्णानां स्थाने जश्-प्रत्याहारस्थवर्णाः विधीयन्ते बाह्यप्रयत्नेन आन्तरतम्यवशात्।



**उदाहरणे सूत्रार्थसमन्वयः** - भूधातोः लिटि, तिपि, णलि, द्वित्वे, अभ्याससंज्ञायां, ह्रस्वादिकार्ये भ भूव् अ इति स्थिते अभ्यासस्य झलः स्थाने चर् जश् च आदेशः भवति। अत्र प्रकृतसूत्रेण झशः भकारस्य स्थाने स्थानेऽन्तरतमः इति परिभाषाबलेन स्थानत आन्तर्येण जश् बकारः आदेशः भवति। बभूव इति रूपं च सिद्ध्यति।

भू-धातुतः लिट्-विधानम् आरभ्य बभूव इति रूपनिष्पत्तिं यावत् बहूनि विधिसूत्राणि संज्ञासूत्राणि परिभाषासूत्राणि च प्रवर्तन्ते। तेषु बहूनि सूत्राणि अत्र इतः पूर्वम् उपन्यस्तानि। कानिचन पूर्वप्रकरणेषु सन्ति। कानिचन च दशमकक्षायाः पाठ्यपुस्तके सन्ति। अतः सर्वेषामपि सूत्राणां समावेशे समग्रं रूपं कथं सिद्ध्यति इति एकत्रीकृत्य प्रदर्श्यते। एवं रूपेण अन्येषु रूपेषु यानि सूत्राणि आवश्यकानि तानि स्थलं दृष्ट्वा छात्रेण स्वयं प्रयोक्तव्यानि। येन क्रमेण बभूव इति रूपसिद्ध्यर्थं सूत्राणि आवश्यकानि तेनैव क्रमेण अन्यत्रापि सूत्राणि प्रवर्तेरन् इति तु न भवति। सर्वत्र क्रमः भिन्नः भवितुम् अर्हति। अतः सकलरूपाणां सिद्धिः छात्रेण स्वयं बुद्ध्वा कर्तव्या।

अत्र बभूव इत्यस्य प्रक्रिया अधः प्रदर्श्यते -

तिङन्ते रूपसाधने केचिद् विभागाः सन्ति। यथा -

१) धातुपरिचयः, २) लकारविधानं, लकारस्य स्थाने तिबादिविधानम्, ३) तिबादेशविधानं, विकरणविधानम् , ४) सन्धिः, अभ्यासादिकार्यं, लोपादिकम् ईदृशानि कार्याणि, ५) विसर्गादिविधानम्। एवं क्रमेण अधः रूपं प्रदर्श्यते।

**बभूव -**

**१) धातुपरिचयः** - सत्तार्थे वर्तमानो भ्वादिगणे पठितत्वाद् भूवादयो धातव इत्यनेन धातुसंज्ञकः अकर्मकः सेट् भू इति धातुः।

**२) लकारविधानं, लकारस्य स्थाने तिबादिविधानम्** - भूधात्वर्थस्य सत्ताक्रियायाः भूतानद्यतनपरोक्षे वृत्तित्वविवक्षायां परोक्षे लिट् इति सूत्रेण भूधातोः विवक्षातः कर्तरि लिटि अनुबन्धलोपे भू ल् इति जाते लस्य इत्यधिकृत्य तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्वम्-इड्वहिमहिङ् इति सूत्रेण अष्टादशसु लादेशेषु प्रसक्तेषु भूधातोः आत्मनेपदनिमित्तहीनत्वात् शेषात् कर्तरि परस्मैपदम् इत्यनेन तिबादिनवसु प्रत्ययेषु प्रसक्तेषु मध्यमोत्तमयोः अविषयत्वात् कर्तुः एकत्वाच्च प्रथमपुरुषैकवचनविवक्षायां तिपि अनुबन्धलोपे भू ति इति स्थितिः जायते।

**३) तिबादेशविधानं, विकरणविधानम्** - प्रत्ययाधिकारे विहितः तिप् प्रत्ययसंज्ञकः भवति। परस्मैपदानां णलतुसुस्-थलथुस-णल्वामाः इति सूत्रेण तिपः सर्वादेशे णलि अनुबन्धलोपे भू ण इति जाते तिपः प्रत्ययत्वात् णस्यापि स्थानिवद्भावेन प्रत्ययत्वात् चुटू इत्यनेन प्रत्ययाद्यस्य णकारस्य इत्संज्ञायां तस्य लोपः इति लोपे च कृते भू अ इति स्थितिः भवति। तत्पश्चात् अजादौ लिडादेशे अप्रत्यये प्रत्यये



परे भुवो वुग् लुङ्लिटोः इति सूत्रेण वुगागमे अनुबन्धलोपे कित्त्वाद् आद्यन्तौ टकितौ इति परिभाषया अन्त्यावयवे भूव् अ इति स्थितिः जायते।

**४) सन्धिः, अभ्यासादिकार्यं, लोपादिकम् ईदृशानि कार्याणि** - लिटि धातोरनभ्यासस्य इति सूत्रेण अनभ्यासधात्ववयवस्य एकाचः सागमकस्य भूव् इति समुदायस्य द्वित्वे भूव् भूव् अ इति जाते द्विरुक्तस्य पूर्वभागस्य भूव् इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञा भवति। तदा हलादिः शेषः इति सूत्रेण अभ्यासस्य आदेः हलः शेषे भू भूव् अ इति स्थितिर्जायते। ततश्च ह्रस्वः इति सूत्रेण अभ्यासस्य अच ऊकारस्य ह्रस्वत्वे भु भूव् अ इति जाते भवतेरः इति सूत्रेण अभ्यासस्य उकारस्य अकारे भ भूव् अ इति स्थितिरुद्भवति। ततश्च अभ्यासे चर्च इति सूत्रेण अभ्यास-भकारस्य स्थानत आन्तर्याद् बकारे बभूव् अ इति जाते वर्णसम्मेलने बभूव इति रूपं सिद्ध्यति।

**बभूवतुः** - (सर्वत्र रूपसाधनेषु केचित् साधारणविषयाः भवन्ति। यथा धातुपरिचयादिकम्। अतः तत् पुनः पुनः न प्रदर्श्यते। परीक्षादौ छात्रेण तत् स्वयं बुद्ध्वा लेख्यमिति आशा।)

**(१+२+३)** - भूधातोः परोक्षे लिट् इति सूत्रेण लिटि लस्य स्थाने प्रथमपुरुषद्विवचनविवक्षायां तसि भू तस् इति स्थिते परस्मैपदानां णलतुसुस्-थलथुस-णल्वामाः इति सूत्रेण तसः सर्वादेशे अतुसि भू अतुस् इति स्थितिर्जायते। ततश्च अजादौ लिडादेशे अतुस्-प्रत्यये परे भुवो वग् लुङ्लिटोः इति सूत्रेण वुगागमे कित्त्वाद् अन्तावयवे अनुबन्धलोपे भूव् अतुस् इति स्थितिर्भवति।

**४)** ततश्च लिटि धातोरनभ्यासस्य इति सूत्रेण अनभ्यासधात्ववयवस्य एकाचः सागमकस्य भूव् इति समुदायस्य द्वित्वे भूव् भूव् अतुस् इति जाते द्विरुक्तस्य पूर्वभागस्य भूव् इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायां हलादिः शेषः इति सूत्रेण अभ्यासस्य आदेः हलः शेषे भू भूव् अतुस् इति जाते ह्रस्वः इति सूत्रेण अभ्यासस्य अच ऊकारस्य ह्रस्वत्वे भु भूव् अतुस् इति जाते भवतेरः इति सूत्रेण अभ्यासस्य उकारस्य अकारे भ भूव् अतुस् इति स्थितिर्भवति। तदा अभ्यासे चर्च इति सूत्रेण अभ्यास-भकारस्य स्थानत आन्तर्याद् बकारे बभूव् अतुस् इति स्थितिः भवति।

**५) विसर्गादिविधानम्** - बभूव् अतुस् इति समुदायस्य तिङन्तत्वेन सुप्तिङन्तं पदमिति सूत्रेण पदसंज्ञायाम् ससजुषो रुः इत्यनेन पदान्तस्य सकारस्य रुत्वेऽनुबन्धलोपे ब भूव् अतुर् इति जाते, अवसाने परे खरवसानयोर्विसर्जनीयः इत्यनेन पदान्तस्य रेफस्य विसर्गे ब, भूव्, अतुः इति जाते वर्णसम्मेलने बभूवतुः इति रूपं सिद्ध्यति।

सर्वत्र सर्वाणि सूत्राणि प्रयुज्य समेषामपि रूपाणां सिद्धिः विस्तारभयेन सविस्तरं न प्रदर्श्यते।

**बभूवुः** - भूधातोः परोक्षे लिट् इति कर्तरि लिटि प्रथमपुरुषबहुवचनविवक्षायां झिप्रत्यये भू झि इति जाते परस्मैपदानां णलतुसुस्-थलथुस-णल्वामाः इति सूत्रेण झेः सर्वादेशे उसि भू उस् इति स्थितिः जायते। तदा अजादौ लिडादेशे उस्-प्रत्यये परे भुवो वग् लुङ्लिटोः इति सूत्रेण वुगागमे कित्त्वाद् अन्तावयवे अनुबन्धलोपे भूव् उस् इति स्थितिः भवति।





ततश्च लिटि धातोरनभ्यासस्य इति सूत्रेण भूव् इति समुदायस्य द्वित्वे भूव् भूव् उस् इति जाते द्विरुक्तस्य पूर्वभागस्य भूव् इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायां हलादिः शेषः इति सूत्रेण अभ्यासस्य आदेः हलः शेषे भू भूव् उस् इति जायते। ततश्च ह्रस्वः इति सूत्रेण अभ्यासस्य अच ऊकारस्य ह्रस्वत्वे भु भूव् उस् इति जाते भवतेरः इति सूत्रेण अभ्यासस्य उकारस्य अकारे भ भूव् उस् इति स्थिते अभ्यासे चर्च इति सूत्रेण अभ्यास-भकारस्य बकारे बभूव् उस् इति जायते। पदान्तसकारस्य रुत्वेऽनुबन्धलोपे रेफस्य विसर्गे च कृते वर्णसम्मेलने बभूवुः इति रूपं सिद्ध्यति।

**बभूविथ** - भूधातोः तिपि परोक्षे लिट् इति कर्तरि लिटि भू ल् इति जाते लस्य स्थाने मध्यमपुरुषैकवचनविवक्षायां सिपि अनुबन्धलोपे भू सि इति जाते परस्मैपदानां णलतुसुस्-थलथुस-णल्वामाः इति सूत्रेण सिपः सर्वादेशे थलि अनुबन्धलोपे भू थ इति जायते। तदा -

## [१४.१०] आर्धधातुकस्येड् वलादेः॥ (७.२.३५)

**सूत्रार्थः** - वलादेरार्धधातुकस्य इडागमः स्यात्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। आर्धधातुकस्य इट् वलादेः इति सूत्रगतपदच्छेदः। आर्धधातुकस्य वलादेः चेति पदद्वयं षष्ठ्येकवचनान्तं पदम्। इट् इति प्रथमान्तं पदम्। वलादेः आर्धधातुकस्य इट् इति सूत्रगतपदान्वयः। ततश्च वलादेः आर्धधातुकस्य इडागमः भवतीति सूत्रार्थः। इटः टकारः हलन्त्यम् इति सूत्रेण इत्संज्ञां प्राप्नोति। ततः तस्य लोपः इति सूत्रेण तस्य लोपो भवति। अतः अयम् इडागमः टित् अस्ति। तस्मात् आद्यन्तौ टकितौ इति परिभाषया अयं (इट्) आगमिनः आद्यावयवः भवति।

**उदाहरणम्** - बभूविथ।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तरूपेण भूधातोः लिटि सिपि थलि अनुबन्धलोपे भू थ इति स्थितिः जाता। तत्र थल् लिडादेशस्य सिपः स्थाने विहितः। लिट् च इति सूत्रेण सिपः आर्धधातुकसंज्ञा भवति। तस्य स्थाने विहितस्य थलः अपि तिङ्भिन्नत्वात् शिद्भिन्नत्वात् च आर्धधातुकंसंज्ञा भवति। थलः आदिवर्णः वल् अस्ति। अतः थल् वलादिः अस्ति। एवं थलः आर्धधातुकत्वेन वलादित्वेन च प्रकृतसूत्रेण इडागमः भवति। स इडागमः आर्धधातुकस्य इति षष्ठ्या आर्धधातुकम् उद्दिश्य विहितः। अतः स थलः आद्यावयवः भवति। ततश्च भू इथ इति स्थितिः भवति। ततः भुवो वुग् लुङ्लिटोः इति सूत्रेण वुगागमे अन्त्यावयवे भूव् इथ इति जाते लिटि धातोरनभ्यासस्य इति सूत्रेण द्विरुक्तस्य पूर्वभागस्य भूव् इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायां हलादिः शेषः इति सूत्रेण अभ्यासस्य आदेः हलः शेषे भू भूव् इ थ इति जाते ह्रस्वः इति सूत्रेण अभ्यासस्य अचः ऊकारस्य ह्रस्वत्वे भु भूव् इ थ इति जाते भवतेरः इति सूत्रेण अभ्यासस्य उकारस्य अकारे भ भूव् इ थ इति स्थिते अभ्यासे चर्च इति सूत्रेण अभ्यास-भकारस्य बकारे बभूव् इ थ इति जाते वर्णसम्मेलने बभूविथ इति रूपं सिद्ध्यति।



बभूवथुः - भूधातोः लिटि मध्यमपुरुषद्विवचनविवक्षायां थसि तस्य अथुसादेशे अभ्यासकार्ये रुत्वे विसर्गे च बभूवथुः इति रूपं सिध्यति।

**बभूव** – भूधातोः लिटि मध्यमपुरुषबहुवचनविवक्षायां थप्रत्यये तस्य अ इत्यादेशे अभ्यासकार्ये बभूव इति रूपं सिध्यति।

**बभूव** – भूधातोः लिटि उत्तमपुरुषैकवचनविवक्षायां मिपि तस्य णलादेशे अभ्यासकार्ये बभूव इति रूपं सिध्यति।

**बभूविव** – भूधातोः लिटि उत्तमपुरुषद्विवचनविवक्षायां वसि तस्य व इत्यादेशे अभ्यासकार्ये वप्रत्ययस्य आर्धधातुकत्वात् वलादित्वाच्च इडागमे बभूविव इति रूपं सिध्यति।

**बभूविम** – भूधातोः लिटि उत्तमपुरुषद्विवचनविवक्षायां मसि तस्य म इत्यादेशे अभ्यासकार्ये मप्रत्ययस्य आर्धधातुकत्वात् वलादित्वाच्च इडागमे बभूविम इति रूपं सिध्यति।

भूधातोः लिटि रूपाणि -

| लिट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| **प्रथमपुरुषः** | बभूव | बभूवतुः | बभूवुः |
| **मध्यमपुरुषः** | बभूविथ | बभूवथुः | बभूव |
| **उत्तमपुरुषः** | बभूव | बभूविव | बभूविम |



## पाठगतप्रश्नाः-२

६. धातोर्द्वित्वविधायकं सूत्रं लिखत।

७. कस्याभ्याससंज्ञा।

८. हलादिः शेषः कस्य।

९. ह्रस्वः इति सूत्रेण कस्य ह्रस्वः।

१०. लिटि भूधातोः अभ्यासस्य ऊकारस्य ह्रस्वः केन सूत्रेण।

११. भवतेरः कस्य।

१२. भवतेरः कस्मिन् लकारे।

१३. अभ्यासे चर्च, अन्यच्च किम्। कस्य च।

१४. वलादेः आर्धधातुकस्य इट् केन सूत्रेण।



## भूधातोः लुट्-लकारे रूपाणि

### [१४.११] अनद्यतने लुट्॥ (३.३.१५)

**सूत्रार्थः** - भविष्यत्यनद्यतने अर्थे धातोर्लुट्।

**सूत्रव्याख्या** - सूत्रमिदम् विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयमस्ति। अनद्यतने (७/१), लुट् (१/१)। अविद्यमानोऽद्यतनः कालः सः अनद्यतनः। तस्मिन् इति बहुव्रीहिसमासः। प्रत्ययः परश्च इति सूत्रद्वयमधिकृतमत्र। प्रत्ययाधिकारे पठितत्वात् लुट् इति प्रत्ययः। धातोः इति पञ्चम्यन्तं पदमधिकृतमस्ति। भविष्यति गम्यादयः इत्यस्मात् सूत्रात् भविष्यति इति पदमनुवर्तते। अनद्यतने भविष्यति धातोः लुट् प्रत्ययः परः इति वाक्ययजना। ततश्च सूत्रार्थः भवति अनद्यतनभविष्यदर्थाद्धातोः लुट् प्रत्ययः परः स्यात् इति। अर्थात् यस्य धातोः अर्थः व्यापारः अनद्यतने भविष्यत्काले इति विवक्षा तस्माद् धातोः लुट् विधीयते इति।

**उदाहरणम्** - भूधातोरर्थः सत्ता। सा च अनद्यतने भविष्यत्काले इति विवक्षा चेत् भूधातोः अनद्यतने लुट् इति आलोच्यमानसूत्रेण लुट् विवक्षातः कर्तरि विधीयते। ततः उकारस्य टकारस्य च इत्संज्ञायां लोपे भू ल् इति स्थिते लस्य स्थाने अष्टादशसु तादेशेषु प्रसक्तेषु भूधातोः आत्मनेपदनिमित्तहीनत्वात् प्रथमपुरुषैकवचनविवक्षया च तिपि अनुबन्धलोपे भू ति इति स्थितिर्जायते। तदा -

### [१४.१२] स्यतासी लृलुटोः॥ (३.१.३३)

**सूत्रार्थः** - धातोः स्यतासी एतौ प्रत्ययौ स्तः लृ-लुटोः परतः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण स्य तास् इति एतौ विधीयेते। अस्मिन् सूत्रे द्वे पदे स्तः। स्यतासी (१/२), लृ-लुटोः (७/२)। स्यः च तासिश्च स्यतासी इति इतरेतरयोगद्वन्द्वसमासः। तासि इत्यत्र इकारः उच्चारणसौकर्याय। ला च लुट् च लृलुटौ, तयोः लृलुटोः इति इतरेतरयोगद्वन्द्वसमासः। निरनुबन्धकग्रहणे सानुबन्धकस्य इति परिभाषया लृ इत्यनेन लृट् लृङ् इति द्वयोरपि ग्रहणं भवति। प्रत्ययः परश्च इति सूत्रद्वयमधिकृतम्। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इति सूत्रात् धातोः इति पञ्चम्यन्तं पदमायाति, द्विवचनान्ततया विपरिणमते च। तदा पदयोजना भवति - धातोः स्यतासी प्रत्ययौ परौ लृटि लृङि लुटि। स्य तास् चेति द्वौ, लृ-लुटौ इति निमित्ते द्वे। अतः यथासंख्यमनुदेशः समानाम् इति परिभाषया लृपरतः स्यप्रत्ययः भवति, लुट्-परतः तास्-प्रत्ययः भवति। अत्र स्थान्यादेशयोः यथासंख्यं नास्ति। सदा स्थान्यादेशयोः एव यथासंख्यं न भवतीति अत्र गम्यते। सूत्रार्थो भवति - धातोः स्य प्रत्ययः स्यात् लृटि लृङि च परतः। धातोः तास् प्रत्ययः स्यात् लुटि परतः।

धातोः परं कर्त्रर्थे लुट् विधीयते। तत्र तस्य स्थाने तिङ् विधीयते। तिङ् तिङ् शित् सार्वधातुकमिति सूत्रेण सार्वधातुकसंज्ञकः। अतः धातोः कर्त्रर्थे सार्वधातुके परे कर्तरि शप् इति सूत्रेण शप्

प्रसक्तः। एवम् अन्येषु गणेषु श्यन् शः श्नुः श्नम्, उ, श्ना इत्यादयः अपि प्रसक्ताः। परन्तु प्रकृतसूत्रेण विहितः स्य तास् च एतेषाम् अपवादौ स्तः। किञ्च स्य तास् एव भवतः।

**उदाहरणम् -** भविता।

**सूत्रार्थसमन्वयः -** पूर्वोक्तसूत्रोक्तरूपेण भू ति इति स्थितिर्जाता। तत्र भूधातोः लुट्-स्थानिके तिपि परे तिप् तिङ् शित् सार्वधातुकमिति सूत्रेण सार्वधातुकसंज्ञकः। अतः भूधातोः कर्त्रर्थे सार्वधातुके परे कर्तरि शप् इति सूत्रेण शप् प्रसक्तः। परन्तु प्रकृतसूत्रेण विहितः तास् च शपः अपवादः अस्ति। अतः शपं प्रबाध्य तास्-प्रत्यये भू तास् ति इति स्थितिर्जायते। तास् तिङ् नास्ति, शित् नास्ति, धातोः इति विहितः अस्ति। अतः आर्धधातुकं शेषः इति सूत्रेण तस्य आर्धधातुकसंज्ञा भवति। तास् वलादिश्च वर्तते। अतः आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे टित्त्वाद् तासः आद्यावयवे भू इतास् ति इति स्थितिर्जाता। यदागमपरिभाषया इतास् इति आगमसहितः समुदायः एव प्रत्ययः। स च आर्धधातुकसंज्ञकः। आर्धधातुके परे सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य स्थाने स्थानतः आन्तर्याद् गुणे ओकारे भो इतास् ति इति स्थितिर्जायते। तदा इतास् इत्यस्य अचि इकारे परे एचोऽयवायावः इति सूत्रेण अवादेशे भव् इतास् ति अवस्था उत्पन्ना। तदा -

## [१४.१३] लुटः प्रथमस्य डारौरसः॥ (२.४.८५)

**सूत्रार्थः -** लुटः प्रथमस्य स्थाने डा रौ रस् एते क्रमात् स्युः।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। अनेन सूत्रेण डारौरसः विधीयन्ते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अत्र लुटः (६/१), प्रथमस्य (६/१), डारौरसः (१/३)। तदा वाक्ययोजना भवति - लुटः प्रथमस्य डारौरसः इति। ततश्च सूत्रार्थो भवति लुटः स्थाने विहितानां प्रथमपुरुषसंज्ञकानां प्रत्ययानां स्थाने डा रौ रस् एते क्रमात् स्युः इति।

तिप् तस्-झि इति परस्मैपदसंज्ञकाः त्रयः, त-आताम्-झ इति आत्मनेपदसंज्ञकाः त्रयः सन्ति। एवम् आहत्य षट् प्रत्ययाः सन्ति। डा-रौ-रसः इति प्रथमाबहुवचनान्तं पदम्। डा-रौ-रसः च डा-रौ-रसः चेति एकशेषे डा-रौ-रसः इति पदं निष्पद्यते। अतः तस्मिन् षट् प्रत्ययाः सन्ति। अतः यथासंख्यमनुदेशः समानाम् इति परिभाषाबलेन तिप्-तस्-झि इति एतेषां स्थाने क्रमशः डा-रौ-रस् एते भवन्ति। एवञ्च त-आताम्-झ एतेषां स्थाने डा-रौ-रस् एते क्रमशः भवन्ति।

तिप्-तस्-झि एतेषां स्थाने डा-रौ-रस् एते विधीयन्ते। यावत् डा-रौ-रस् एते तिबादीनां स्थानग्रहणं कुर्वन्ति तावत् तिबादीनां धर्माः डा-रौ-रस् एषु न आरोप्यन्ते। अतः एव डा-रौ-रस् इति एषां प्रत्ययसंज्ञा अपि तेषां प्रयोगात् उत्तरमेव। अतः यावत् डा तिपः निवृत्तिं न करोति तावत् डा प्रत्ययः नास्ति। प्रत्ययः नास्ति चेत् चुटू इति सूत्रेण तस्य आद्यस्य डकारस्य इत्संज्ञा न भवति। अतः प्रयोगात् पूर्वं डा इत्यस्य अनेकाल्त्वम् अस्ति। तेन अनेकाल्शित् सर्वस्य इति सूत्रेण सर्वस्य तिपः स्थाने एव आदेशः डा भवति न तु अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य। एवं तेषु तेषु प्रत्ययेषु बोध्यम्।



**उदाहरणम्** - पूर्वपूर्वसूत्रोक्तप्रकारेण भव् इतास् ति इति जायते। तत्र लुटः स्थाने विहितः तिप् प्रथमसंज्ञकः अस्ति। तिपः स्थाने यथासंख्यमनुदेशः समानाम् इति परिभाषया प्रकृतसूत्रेण स्थाने डा-आदेशे अनेकाल्शित् सर्वस्य इति सूत्रेण सर्वादेशे भव् इतास् डा इति स्थिते चुटू इति सूत्रेण प्रत्ययाद्यस्य डकारस्य इत्संज्ञायां तस्य लोपः इति लोपे च कृते भव् इतास् आ इति स्थितिर्जायते।

तिप् प्रत्ययः। तस्य स्थाने विहितः डा अपि स्थानिवद्भावाद् प्रत्ययसंज्ञकः। स्वादिषु कप्-प्रत्ययावधिषु एव परे पूर्वस्य भसंज्ञा भवति। डा स्वादिषु नास्ति। अतः डा-प्रत्यये परे भसंज्ञा न भवति। तथापि पाणिनिमुनिः डा इत्यस्य डित्त्वं कृतवान्। तेन इदं ज्ञाप्यते यत् भसंज्ञा नास्ति चेत् अभस्यापि टेः लोपः भवति। तदुच्यते डित्त्वसामर्थ्याद् अभस्यापि टेर्लोपः। डि-प्रत्यये परे इतास् इत्यस्य आस् टि अस्ति। तस्य लोपे भव् इत् आ इति स्थितिः भवति। तदा वर्णमेलनेन **भविता** इति रूपं सिद्ध्यति।

**भवितारौ** - पूर्ववत् भू-धातोः कर्तरि लुटि प्रथमपुरुषद्विवचनविवक्षायाम् तस्-प्रत्यये भू तस् इति जाते कर्तरि शप् इत्यनेन शपि प्रसक्ते स्यतासी लृलुटोः इत्यनेन शपं प्रबाध्य तास्-प्रत्यये भू तास् तस् इति स्थिते तासः आर्धधातुकत्वाद् वलादित्वाच्च आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे आद्यावयवे भू इतास् तस् इति स्थिते सार्वधातुकार्धधातुकयोः इति सूत्रेण भुवः ऊकारस्य गुणे ओकारे भो इतास् तस् इति स्थिते एचोऽयवायावः अवादेशे भवितास् तस् इति जाते लुटः प्रथमस्य डा-रौ-रसः इति सूत्रेण तसः स्थाने रौ इति सर्वादेशे भवितास् रौ इति अवस्था जाता। तदा - (रि च इति सूत्रे द्रष्टव्यम्।)

## [१४.१४] तासस्त्योर्लोपः॥ (७.४.५०)

**सूत्रार्थः** - तासेरस्तेश्च सस्य लोपः स्यात् सादौ प्रत्यये परे।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। तासस्त्योः लोपः इति सूत्रगतपदच्छेदः। तासस्त्योः (६/२), लोपः (१/१)। तास् च अस्तिश्च तासस्ती। तयोः तासस्त्योः इति इतरेतरयोगद्वन्द्वसमासः। अङ्गस्य इति अधिकृतम्। प्रत्यये परे एव अङ्गसंज्ञा उपपन्ना। अतः प्रत्यये इति सप्तम्यन्तम् पदम् आक्षिप्यते। इदम् अङ्गाक्षिप्तम् इति कथ्यते। सः स्यार्धधातुके इति सूत्रात् सि इति सप्तम्यन्तम् पदमनुवर्तते। तदा तासस्त्योः लोपः सि प्रत्यये इति वाक्ययोजना। अस्मिन् सूत्रे तदादिविधिः भवति। सि इति अल्बोधकं पदं प्रत्यये इत्यस्य विशेषणम् अस्ति। अतः तदादिविधिना 'सादौ प्रत्यये' इति अर्थः लभ्यते। तास्त्योः इत्यत्र षष्ठ्यर्थस्य सम्बन्धस्य अनुयोगिविरहात् स्थानषष्ठी। सा च अल्समुदायबोधकात् श्रूयते। किञ्च आदेशः लोपात्मकः। अतः अलोऽन्त्यस्य इति परिभाषाबलेन तास् इत्यस्य अस् इत्यस्य च अन्त्यस्य अलः सकारस्य लोपो भवतीत्यर्थो लभ्यते। ततश्च सूत्रार्थः भवति - सकारादौ प्रत्यये परे तासेः अस्तेश्च सकारस्य लोपो भवति इति।

**उदाहरणम्** - अस्य उदाहरणम् भवितासि इति। परन्तु प्रकृते भवितारौ इति रूपसाधनं प्रचलति। एवञ्च अस्मात् परं भवितारः इति रूपं भवति। अत्र रूपद्वयेऽपि इदं सूत्रं न प्रवर्तते। तथापि रि च इति सूत्रम् अस्मात् परम् अस्ति अष्टाध्याय्याम्। एवञ्च यदि रूपस्य क्रमेण एव अस्य उपस्थापनं कर्तव्यं



तर्हि रि च इति सूत्रात् अव्यवहितपरमेव अस्य उपस्थापनम् भवेत्। अतः अष्टाध्यायीक्रममादृत्य पूर्वम् उपन्यासः कृतः।

## [१४.१५] रि च॥ (७.४.५१)

**सूत्रार्थः** - तासेरस्तेश्च सस्य लोपः स्यात् रादौ प्रत्यये परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण सस्य लोपः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। रि (७/१), च इत्यव्ययपदम्। तासस्त्योर्लोपः इति सूत्रात् तासस्त्योः इति षष्ठीद्विवचनान्तं पदमनुवर्तते, लोपः इति प्रथमान्तं पदं चानुवर्तते। तास् च अस्तिश्च तासस्ती। तयोः तासस्त्योः इति इतरेतरयोगद्वन्द्वसमासः। अङ्गस्य इति अधिकृतम्। प्रत्यये परे एव अङ्गसंज्ञा उपपन्ना। अतः प्रत्यये इति सप्तम्यन्तम् पदम् आक्षिप्यते। इदम् अङ्गाक्षिप्तम् इति कथ्यते। तदा पदयोजना भवति - तासस्त्योः रि प्रत्यये च लोपः। रि इति अल्बोधकं पदं प्रत्यये इत्यस्य विशेषणम् अस्ति। अतः तदादिविधिना 'रादौ प्रत्यये' इति अर्थः लभ्यते। तास्त्योः इत्यत्र षष्ठ्यर्थस्य सम्बन्धस्य अनुयोगिविरहात् स्थानषष्ठी। सा च अल्समुदायबोधकात् श्रूयते। किञ्च आदेशः लोपात्मकः। अतः अलोऽन्त्यस्य इति परिभाषाबलेन तास् इत्यस्य अस् इत्यस्य च अन्त्यस्य अलः सकारस्य लोपो भवतीत्यर्थो लभ्यते। ततश्च सूत्रार्थः भवति - रेफादौ प्रत्यये परे तासेः अस्तेश्च सकारस्य लोपो भवति इति।

**उदाहरणम्** - भवितारौ।

**सूत्रार्थसमन्वयः** - लुटः प्रथमस्य डा-रौ-रसः इति सूत्रोक्तरूपेण भवितास् रौ इति स्थितौ रौ इति रादिप्रत्ययः परे अस्ति। अतः तास् इत्यस्य अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य सस्य लोपः रि च इति प्रकृतसूत्रेण भवति। तदा भवितारौ इति रूपं निष्पद्यते।

**भवितारः** - पूर्ववत् भू-धातोः लुटि प्रथमपुरुषबहुवचनविवक्षायाम् झि-प्रत्यये भू झि इति जाते कर्तरि शप् इत्यनेन शपि प्रसक्ते स्यतासी लृलुटोः इत्यनेन शपं प्रबाध्य तास्-प्रत्यये भू तास् झि इति स्थिते आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे भू इतास् झि इति स्थिते सार्वधातुकार्धधातुकयोः इति सूत्रेण भुवः ऊकारस्य गुणे ओकारे भो इतास् झि इति स्थिते एचोऽयवायावः इति सूत्रेण अवादेशे भवितास् झि इति जाते लुटः प्रथमस्य डा-रौ-रसः इति सूत्रेण स्थाने रस् इति सर्वादिशे भवितास् रस् इति अवस्था जाता। अत्र रादिप्रत्ययः परे अस्ति। अतः तास् इत्यस्य अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य सस्य लोपः रि च इति प्रकृतसूत्रेण भवति। तदा भवितारस् इति स्थिते पदान्तत्वात् रुत्वे विसर्गे भवितारः इति रूपं निष्पद्यते।

**भवितासि** - पूर्ववत् भू-धातोः लुटि मध्यमपुरुषैकवचनविवक्षायाम् सिप्-प्रत्यये अनुबन्धलोपे भू सि इति जाते प्राप्तं शपं प्रबाध्य स्यतासी लृलुटोः इत्यनेन तास्-प्रत्यये भू तास् सि इति स्थिते इडागमे भुवः ऊकारस्य गुणे ओकारे भो इतास् सि इति स्थिते अवादेशे भवितास् सि इति जायते। अत्र सादिप्रत्ययः परे अस्ति। अतः तास् इत्यस्य अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य सस्य लोपः तासस्त्योर्लोपः इति सूत्रेण भवति। तदा भवितासि इति रूपं निष्पद्यते।





**भवितास्थः** - (अत्र प्रक्रियां नैके अंशाः पूर्ववद् ऊह्याः।) भूधातोः लुटि थासि तास्-प्रत्यये इडागमे ऊकारस्य गुणे ओकारे ओकारस्य अवादेशे भवितास् थस् इति स्थिते समुदायस्य पदान्तत्वात् रूत्वे विसर्गे च कृते भवितास्थः इति रूपं सिध्यति।

**भवितास्थ** - (अत्र प्रक्रियां नैके अंशाः पूर्ववद् ऊह्याः।) भूधातोः लुटि थप्रत्यये तास्-प्रत्यये इडागमे ऊकारस्य गुणे ओकारे ओकारस्य अवादेशे भवितास् थ इति स्थिते भवितास्थ इति रूपं सिध्यति।

**भवितास्मि, भवितास्वः भवितास्मः** - (अत्र प्रक्रिया पूर्ववद् ऊह्या।)

भूधातोः लुटि रूपाणि अधः पट्टिकायां प्रदर्शितानि सन्ति -

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमपुरुषः** | भविता | भवितारौ | भवितारः |
| **मध्यमपुरुषः** | भवितासि | भवितास्थः | भवितास्थ |
| **उत्तमपुरुषः** | भवितास्मि | भवितास्वः | भवितास्मः |

**रूपसाधनम्**

**भविता -**

(भविता इति रूपं बहूषु सूत्रेषु व्याप्तम् अस्ति। तस्य खण्डशः प्रक्रिया किञ्चित् किञ्चित् अग्रे प्रगच्छति। अतः सर्वाणि सूत्राणि परिशील्य सर्वे खण्डाः एकत्रीकृत्य समग्रं रूपं साधनीयमिति अवधेयम्। भविता इति एकं रूपमत्र प्रदर्श्यते। अन्यानि रूपाणि छात्रेण स्वयमूह्यानि।)

**१) धातुपरिचयः** - सत्तार्थे वर्तमानो भ्वादिगणे पठितत्वाद् भूवादयो धातव इत्यनेन धातुसंज्ञकः अकर्मकः सेट् भू इति धातुः।

**२) लकारविधानं, लकारस्य स्थाने तिबादिविधानम्** - भूधात्वर्थस्य सत्ताक्रियायाः भविष्यति अनद्यने काले वृत्तित्वविवक्षायां अनद्यतने लुट् इति सूत्रेण भूधातोः विवक्षातः कर्तरि लुटि अनुबन्धलोपे भू ल् इति जाते लस्य इत्यधिकृत्य तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्वम्-इड्वहिमहिङ् इति सूत्रेण अष्टादशसु लादेशेषु प्रसक्तेषु भूधातोः आत्मनेपदनिमित्तहीनत्वात् शेषात् कर्तरि परस्मैपदम् इत्यनेन तिबादिनवसु प्रत्ययेषु प्रसक्तेषु मध्यमोत्तमयोः अविषयत्वात् कर्तुः एकत्वाच्च प्रथमपुरुषैकवचनविवक्षायां तिपि अनुबन्धलोपे भू ति इति स्थितिः जायते।

**३) तिबादेशविधानं, विकरणविधानम्** - भू ति इति स्थिते तत्र भूधातोः लुट्-स्थानिके तिपि परे तिङ् शित् सार्वधातुकमिति सूत्रेण तिपः सार्वधातुकत्वात् कर्तरि विहितत्वाच्च कर्त्रर्थे सार्वधातुके परे कर्तरि शप् इति सूत्रेण शपि प्रसक्ते प्रकृतसूत्रेण शपम् अपवादत्वेन प्रबाध्य तास्-प्रत्यये भू तास् ति इति स्थितिर्जायते। तास् इत्यस्य तिङ्-भिन्नत्वात् शिद्-भिन्नत्वात् , धातोः इति विहितत्वाच्च आर्धधातुकं



शेषः इति सूत्रेण आर्धधातुकसंज्ञा भवति। तास् वलादिश्च वर्तते। अतः आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे टित्त्वाद् तासः आद्यावयवे भू इतास् ति इति स्थितिर्जाता। इतास् इति समुदायः प्रत्ययः, आर्धधातुकसंज्ञकः च। आर्धधातुके परे सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य स्थाने स्थानतः आन्तर्याद् गुणे ओकारे भो इतास् ति इति स्थितिर्जायते। तदा इतास् इत्यस्य अचि इकारे परे एचोऽयवायावः इति सूत्रेण अवादेशे भव् इतास् ति अवस्था जाता। तत्र लुटः स्थाने विहितः तिप् प्रथमसंज्ञकः अस्ति। तिपः स्थाने यथासंख्यमनुदेशः समानाम् इति परिभाषया प्रकृतसूत्रेण स्थाने अनेकाल्शित् सर्वस्य इति सूत्रेण डा इति सर्वादेशे भव् इतास् डा इति स्थिते डा इत्यस्य स्थानिवद्भावात् प्रत्ययत्वविज्ञानात् चुटू इति सूत्रेण प्रत्ययाद्यस्य डकारस्य इत्संज्ञायां तस्य लोपः इति लोपे च कृते भव् इतास् आ इति स्थितिर्जायते।

तिप् -प्रत्ययस्य स्थाने विहितः डा अपि स्थानिवद्भावाद् प्रत्ययसंज्ञकः। एवञ्च डित्त्वसामर्थ्याद् अभस्यापि टेः इतास् इत्यस्य आस् इत्यस्य लोपे भव् इत् आ इति स्थिते वर्णमेलनेन **भविता** इति रूपं सिद्ध्यति।

अधः केचिद् धातवः दीयन्ते। तेषां रूपाणि एतावता अतिक्रान्तानि कानिचन सूत्राणि प्रयुज्य कर्तुं शक्यानि। तानि रूपाणि अभ्यासाय छात्रेण साधनीयानि।

१) **पठ** व्यक्तायां वाचि - **पठिता पठितारौ पठितारः। पठितासि पठितास्थः पठितास्थ। पठितास्मि पठितास्वः पठितास्मः।**

२) **गद** व्यक्तायां वाचि - **गदिता गदितारौ गदितारः। गदितासि गदितास्थः गदितास्थ। गदितास्मि गदितास्वः गदितास्मः।**

३) **अर्च** पूजायाम् - **अर्चिता अर्चितारौ अर्चितारः। अर्चितासि अर्चितास्थः अर्चितास्थ। अर्चितास्मि अर्चितास्वः अर्चितास्मः।**

४) **व्रज** गतौ - **व्रजिता व्रजितारौ व्रजितारः। व्रजितासि व्रजितास्थः व्रजितास्थ। व्रजितास्मि व्रजितास्वः व्रजितास्मः।**

५) **कटेँ** वर्षावरणयोः - **कटिता कटितारौ कटितारः। कटितासि कटितास्थः कटितास्थ। कटितास्मि कटितास्वः कटितास्मः।**

६) **क्षि** क्षये - **क्षयिता क्षयितारौ क्षयितारः। क्षयितासि क्षयितास्थः क्षयितास्थ। क्षयितास्मि क्षयितास्वः क्षयितास्मः।**

७) **चितीँ** संज्ञाने - **चेतिता चेतितारौ चेतितारः। चेतितासि चेतितास्थः चेतितास्थ। चेतितास्मि चेतितास्वः चेतितास्मः।**

८) **शुच** शोके - **शोचिता शोचितारौ शोचितारः। शोचितासि शोचितास्थः शोचितास्थ। शोचितास्मि शोचितास्वः शोचितास्मः।**





## पाठगतप्रश्नाः

१५. लुट् कस्मिन्नर्थे विधीयते।

१६. धात्वर्थव्यापारस्य अनद्यतने भविष्यति वृत्तित्वविक्षायां कः लकारः विधेयः।

१७. भवितास्मि इति कस्मिन् लकारे रूपम्।

१८. भवितास्मि इत्यत्र विकरणं किम्। केन सूत्रेण विहितम्।

१९. तास् कस्यापवादः।

२०. लुटः प्रथमस्य डारौरसः इत्यत्र प्रथमाः के।

२१. डा-रौ-रसः कस्य स्थाने कस्मिन् लकारे विधीयन्ते।

२२. तासेरस्तेश्च सस्य लोपः सादौ प्रत्यये परे केन सूत्रेण।

२३. भवितारौ इत्यत्र रूपे तासः सस्य लोपः केन सूत्रेण।



## पाठसारः

अस्मिन् पाठे लिट् लुट् इति लकारद्वयम् उपन्यस्तम्। धातोः अर्थः व्यापारः यदि अनद्यतनभूतकालीनः स्यात् एवञ्च वक्तुः अप्रत्यक्षः स्यात् तदा तस्माद् धातोः परोक्षे लिट् इति सूत्रेण लिट् लकारः प्रयुज्यते। लिटः आर्धधातुकत्वात् अत्र शबादिकं न भवति। लिट्-लकारे तिङां स्थाने परस्मैदानां णलतुसुस्थलथुसणल्वमाः इति सूत्रेण णलादयः आदेशाः भवन्तीति अस्य लकारस्य एको विशेषः। लिटि परतः अनभ्यासधातोः अवयवस्य द्वित्वम् लिटि धातोरनभ्यासस्य इति सूत्रेण भवतीति अपरो विशेषः। द्वित्वे यो पूर्वः तस्य अभ्याससंज्ञा पूर्वोऽभ्यासः इति सूत्रेण भवति। तस्य चाभ्यासस्य हलादिः शेषः इति सूत्रेण आदिः हल् शिष्यते अन्ये हलः च लुप्यन्ते। एवञ्च अचः न लुप्यन्ते। अभ्यासस्य अचः ह्रस्वः इति सूत्रेण ह्रस्वत्वं भवति। भूधातोस्तु भवतेरः इति सूत्रेण उकारस्य अकारो भवति। अभ्यासे चर्च इति सूत्रेण अभ्यासस्य झशां जशः खयां च चरः विधीयन्ते। वलादि आर्धधातुकं चेत् तस्य आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमः विधीयते। इत्थं कानिचन मुख्यानि सूत्राणि तेषां कार्याणि च लिट्-लकारे सन्ति। इतोऽपि अन्यानि सूत्राणि कार्याणि च सन्ति तानि अग्रिमप्रकरणेषु वक्ष्यन्ते। लिटः सम्यग् ज्ञानाय लिटः पठनानन्तरं अग्रे लिटः प्रकरणं पठनीयम्।

धातोः अर्थः व्यापारः यदि अनद्यतनभविष्यत्कालीनः स्यात् तर्हि तस्माद् धातोः अनद्यतने लुट् इति सूत्रेण लिट् लकारः प्रयुज्यते। स्यतासी इति सूत्रेण लुटि परतः धातोः तास् भवति। एवञ्च लुटः



प्रथमस्य डारौरसः इति सूत्रेण प्रथमस्य डा रौ रस् एते विधीयन्ते। ततश्च सादौ प्रत्यये तासः सस्य लोपः तासस्त्योर्लोपः इति सूत्रेण भवति, रादौ प्रत्यये च रि च इति सूत्रेण तासः सस्य लोपो भवति।

इत्थम् संक्षेपेण इदमधेयं यत् लिटि णलादयः द्वित्वम् हलादिशेषत्वं ह्रस्वत्वम् चर्त्वं जश्त्वम् इति एतानि मुख्यानि कार्याणि। एवञ्च लुटि च तास् डा रौ रस् तासः सलोपः एतानि मुख्यानि कार्याणि।

##  पाठान्तप्रश्नाः

१. परोक्षे लिट् इति सूत्रं व्याख्येयम्।

२. णलादीनां कथम् सर्वादेशत्वम् इति लिखत।

३. लिटि धातोरनभ्यासस्य इति सूत्रं व्याख्येयम्।

४. अभ्यासे चर्च इति सूत्रं व्याख्येयम्।

५. अभ्यासकार्याणि आश्रित्य प्रबन्धं रचयत।

६. आर्धधातुकस्येड् वलादेः इति सूत्रं व्याख्येयम्।

७. बभूव बभूविथ बभूवुः इति एतानि रूपाणि ससूत्रं साधयत।

८. अनद्यतने लुट् इति सूत्रं व्याख्यात।

९. स्यतासी लृलुटोः इति सूत्रं व्याख्यात।

१०. तासस्त्योर्लोपः इति सूत्रं व्याख्यात।

११. ससूत्रं रूपाणि साधयत – भविता भवितारौ भवितासि भवितास्मः।

##  पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि- १**

१. इन्द्रियागोचरत्वं परोक्षत्वम्।

२. धातोः अर्थः व्यापारः अर्थात् क्रिया अनद्यतने भूते परोक्षे च वर्तते इति विवक्षितं चेत् तस्माद् धातोः लिट् विधीयते।

३. तिपं निवर्त्य णल् यावत् तिपः स्थानम् अधिकरोति तावत् णल् न प्रत्ययः। स्थानिवद्भावेन तस्य यदा प्रत्ययत्वम् अतिदिश्यते तदा चुटू इति सूत्रेण प्रत्ययाद्यस्य णकारस्य इत्संज्ञा भवति। ततः तस्य लोपः इति लोपोऽभवति। अत एव विधानात् पूर्वं णस्य इत्संज्ञालोपयोः अभावे णलः अलेकाल्त्वमस्ति। अतः अनेकाल्शित् सर्वस्य इति सूत्रेण णल् सर्वस्य तिपः स्थाने भवति।



४. भुवः वुक् लुङि लिटि च।

५. १

**उत्तराणि- २**

६. लिटि धातोरनभ्यासस्य॥

७. षाष्ठद्वित्वप्रकरणे ये द्वे विहिते, तयोः पूर्वस्य अभ्याससंज्ञा भवति।

८. अभ्यासस्य आदेः हलः शेषः।

९. अभ्यासस्याचो ह्रस्वः।

१०. ह्रस्वः।

११. भूधातोः अभ्यासस्य उकारस्य अकारः लिटि परे।

१२. भूधातोः अभ्यासस्य उकारस्य अकारः लिटि परे।

१३. अभ्यासे झलां चर् जश् च। झशां जशः खयां चरः इति विवेकः।

१४. आर्धधातुकस्येड् वलादेः॥

**उत्तराणि- ३**

१५. धात्वर्थव्यापारस्य अनद्यतने भविष्यति वृत्तित्वविक्षायां लुट् लकारः विधेयः।

१६. लुट्

१७. लुटि मिपि रूपम्।

१८. तास्। स्यतासी लृलुटोः इति सूत्रेण विहितम्।

१९. शप् श्यन् शः श्नुः श्नम्, उ, श्ना इत्यादीनाम् लुटि परतः प्राप्तानां विकरणानाम्।

२०. लुटः प्रथमस्य डारौरसः इत्यत्र प्रथमाः - तिप् तस्-झि इति परस्मैपदसंज्ञकाः त्रयः, त-आताम्-झ इति आत्मनेपदसंज्ञकाः त्रयः सन्ति। एवम् आहत्य षट् प्रथमसंज्ञकाः प्रत्ययाः सन्ति।

२१. डा-रौ-रसः प्रथमसंज्ञकानाम् तिप् तस्-झि इति परस्मैपदसंज्ञकानां, त-आताम्-झ इति आत्मनेपदसंज्ञकानां च स्थाने लुटि लकारे विधीयन्ते।

२२. तासेरस्तेश्च सस्य लोपः सादौ प्रत्यये परे तासस्त्योर्लोपः इति सूत्रेण।

२३. भवितारौ इत्यत्र रूपे तासः सस्य लोपः रि च इति सूत्रेण।

## ॥ इति चतुर्दशः पाठः ॥



१५

# भ्वादिप्रकरणे- भूधातोः लृटि लोटि च रूपसाधनम्

## प्रस्तावना

पूर्वपाठेषु लट् लिट् लुट् इति एते लकाराः अतिक्रान्ताः। एषु लकारेषु भूधातोः रूपाणि साधितानि। तेषां साधनाय यानि सूत्राणि अपेक्षितानि तानि प्रस्तूय व्याख्यातानि च।

इतः परं लृट् लोट् लङ् चेति त्रयो लकाराः अत्र प्रस्तोष्यन्ते। भूधातोः एषु लकारेषु सर्वाणि रूपाणि साधयितुम् यानि सूत्राणि अपेक्षितानि सन्ति तानि अत्र प्रदास्यन्ते। एतेषां रूपाणां साधनाय यानि दशमकक्षायाः व्याकरणस्य पुस्तकस्य सूत्राणि इतः पूर्वम् अतिक्रान्तानि च सूत्राणि छात्रेण ज्ञातानि एव इति मत्वा पुनः न व्याख्यास्यन्ते। अतः व्याकरणे परपाठस्य अध्यनाय प्रथमतः पठितेषु किं सूत्रं कदा अपेक्षितं भवेदिति निश्चयः नास्ति। अतः दशमकक्षायाः पाठाः द्वादश्याः च इतः पूर्वं गताः पाठाः साधु पठनीयाः।

प्रथमद्वितीयपाठयोः यानि तिङन्तप्रकरणस्य साधारणानि सूत्राणि सन्ति तानि बहूनि यद्यपि आवश्यकानि भवन्ति तथापि सर्वेषां सदा उल्लेखः न करिष्यते। प्रति रूपं सर्वाणि रूपाणि उल्लिख्यन्ते चेत् ग्रन्थस्य परिमाणम् निर्दिष्टपरिमाणादपि अद्यधिकं भवेद्।



## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- तिङन्तप्रकरणस्य सूत्राणि बुध्यात्।
- लृट् लोट् लङ् एषु लकारेषु भूधातोः रूपाणि ज्ञास्यति।
- लृट् लोट् लङ् एषु त्रिषु लकारेषु भूधातोः तत्तुल्यानाम् अन्येषामपि धातूनां रूपाणि साधयितुं समर्थो भविष्यति।
- लृट् लोट् लङ् एषां लकाराणां कदा कुत्र प्रयोगः कर्तव्यः इति विज्ञास्यति।
- शबादिविकरणस्य अपवादं ज्ञास्यति।





- लृट् लोट् लङ् एषु त्रिषु लकारेषु अनुवृत्तिः अधिकारः आक्षेपः तदादिविधिः तदन्तविधिः एतान् ज्ञास्यति।
- लृट् लोट् लङ् एषां त्रयाणां लकाराणां सूत्राणि व्याख्यातुं समर्थो भविष्यति।

## भूधातोः लृट्-लकारे रूपाणि

### [१५.१] लृट् शेषे च॥ (३.३.१३)

**सूत्रार्थः** - भविष्यति अर्थे धातोर्लृट् क्रियार्थायां क्रियायां सत्याम् असत्यां च।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन लृट् लकारः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। लृट् (१/१), शेषे (७/१), च इत्यव्ययपदम्। भविष्यति गम्यादयः इति सूत्राद् भविष्यति इति सप्तम्यन्तं पदमनुवर्तते। धातोः इति पञ्चम्यन्तमधिकृतमस्ति। च इत्यनेन तुमुण्वुलौ क्रियायां क्रियार्थायाम् इति सूत्रस्थाभ्यां क्रियार्थायां क्रियायाम् इति पदाभ्यां परामर्शः भवति। क्रियार्था या क्रिया ततः भिन्नार्थः एवात्र शेषः। सूत्रार्थो भवति - क्रियार्थायाम् क्रियायां सत्याम् असत्यां च धात्वर्थव्यापारः भविष्यत्काले इति विवक्षा चेत् धातोः लृट् विधीयते।

**विवरणम्** -

या क्रिया अपरक्रियायाः निष्पादनार्थं क्रियते सा क्रियार्था क्रिया। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था क्रिया। चैत्रः वदति - पठिष्यामि इति पाठशालां गच्छामि इति वाक्यम्। अत्र चैत्रः गमनक्रियां करोति। किं प्रयोजनम् अस्याः क्रियायाः। अत्र गमनं कृत्वा पठिष्यति चैत्रः। अतः गमनक्रियायाः प्रयोजनम् पठनक्रिया। गमनं पठनार्थम्। अतः गमनक्रिया पठनार्था क्रिया। अतः क्रियार्था क्रिया गमनक्रिया।

वाक्ये क्रियार्था क्रिया स्यात् न वा स्यात् , धातोः लृट् 'भविष्यति' अर्थे विधीयते। अत एव सूत्रार्थो भवति - क्रियार्थक्रियायाः सत्त्वे असत्त्वे च धात्वर्थव्यापारः भविष्यत्काले इति विवक्षा चेत् धातोः लृट् विधीयते।

लृट् अद्यतने अनद्यतने च भविष्यति काले भवति। अतः भविष्यत्सामान्ये लृट् विधीयते।

**उदाहरणम्** - १) क्रियार्थायाम् क्रियायां सत्याम् - पठिष्यामि इति गच्छामि इति। २) क्रियार्थायाम् क्रियायाम् असत्याम् - पठिष्यामि इति।

**सूत्रार्थसमन्वयः** - १) क्रियार्थायाम् क्रियायां सत्याम् - पठिष्यामि इति गच्छामि इति। अत्र पठनार्थम् गमनम्। पठनक्रियार्था गमनक्रिया। अतः क्रियार्थायाम् सत्याम् भविष्यति काले पठने विवक्षिते प्रकृतसूत्रेण पठ्-धातोः लृट् विहितः।



२) क्रियार्थायाम् क्रियायाम् असत्याम् - पठिष्यामि इति। अत्र वाक्ये क्रियार्था क्रिया नास्ति, परन्तु भविष्यति काले पठनं विवक्षितम्। अतः प्रकृतसूत्रेण पठधातोः लृट् विहितः।

भूधात्वर्थः व्यापारः भविष्यत्काले इति विवक्षायां भूधातोः लृट् शेषे च इति सूत्रेण लृटि ऋकारटकारयोः इत्संज्ञायां लोपे च भू ल् इति स्थितिः जायते। कर्तुः प्रथमपुरुषैकवचनविवक्षायाम् लस्य स्थाने तिपि अनुबन्धलोपे भू ति इति स्थितिर्भवति। अत्र लृट् कर्तरि विहितः। एवञ्च तस्य स्थाने विहितः तिप् अपि स्थानिवद्भावेन कर्तरि एव, तिङ्त्वात् तिङ् शित् सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञकश्च। अतः कर्त्रर्थे सार्वधातुके परे कर्तरि शप् इति सूत्रेण शप् प्राप्नोति। तदा स्यतासी लृलुटोः इति सूत्रेण शपम् अपवादत्वेन प्रबाध्य स्यप्रत्यये कृते भू स्य ति इति स्थितिर्जायते। अत्र स्य प्रत्ययः तिङ्-भिन्नत्वात् शिद्भिन्नत्वात् धातोः इति विहितत्वाच्च आर्धधातुकं शेषः इति सूत्रेण आर्धधातुकसंज्ञकः, तस्य आद्यवर्णः सकारः वल्-प्रत्याहारस्थः, अतः स्यप्रत्ययः वलादिरपि अस्ति। अतः आर्धधातुकस्येड् वलादेः इति सूत्रेण स्यस्य इडागमे टित्त्वाद् आद्यावयवे भू इस्य ति इति स्थितिर्जायते।

ततश्च यदागमपरिभाषया इस्य इति आगमसहितः समुदायः एव प्रत्ययः। स च आर्धधातुकसंज्ञकः। आर्धधातुके परे सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य स्थाने स्थानतः आन्तर्याद् गुणे ओकारे भो इस्य ति इति स्थितिर्जायते। तदा इस्य इत्यस्य अचि इकारे परे एचोऽयवायावः इति सूत्रेण अवादेशे भव् इस्य ति अवस्था उत्पन्ना। अत्र स्य प्रत्ययस्य अवयवः सकारः। स च इणः इकारात् परः अस्ति, अपदान्तश्च अस्ति। अतः आदेशप्रत्यययोः इति सूत्रेण सस्य मूर्धन्यादेशे षकारे भव् इष्य ति इति स्थिते सर्ववर्णमेलने **भविष्यति** इति रूपं सिध्यति।

(**सूत्रम् - आदेशप्रत्यययोः** - इण्-कुभ्यां परस्य अपदान्तस्य आदेशस्य, प्रत्ययावयवश्च यः सकारः तस्य, मूर्धन्यादेशः भवति।)

एवमन्यानि लृट्-लकारस्य सर्वाणि रूपाणि सिध्यन्ति। इतः पूर्वम् उक्तेभ्यः अन्यत् नूतनं सूत्रं तत्र नापेक्षितम्। अतः पूर्वम् अतिक्रान्तानि सूत्राणि आनीय विशिष्टक्रमेण सन्निवेशे सर्वाणि रूपाणि सिध्यन्ति। तत्र कानिचन अत्यन्तं लघुना प्रदर्श्यन्ते। प्रति रूपम् सुदीर्घा रूपसाधनप्रक्रिया भवति। परन्तु सर्वेषामपि रूपाणां समग्रा प्रक्रिया पुस्तकस्य परिमाणम् अत्यधिकं वर्धयेत्। अतः सविस्तरं नोच्यते।

**भविष्यतः** - भूधात्वर्थव्यापारः भविष्यत्काले विवक्षितः तदा भूधातोः लृटि तसि शपं प्रबाध्य स्यप्रत्यये इडागमे भुवः ऊकारस्य गुणे ओकारे ओकारस्य अवादेशे स्यस्य सकारस्य मूर्धन्यादेशे भविष्यतस् इति स्थिते समुदायस्य तिङन्तत्वेन पदत्वात् रुत्वे विसर्गे भविष्यतः इति रूपं सिध्यति।

**भविष्यन्ति** - भूधातोः लृटि झिप्रत्यये झस्य अन्तादेशे पूर्ववत् भविष्य अन्ति इति अतो गुणे इत्यनेन पररूपैकादेशे भविष्यन्ति इति रूपं सिध्यति।

**भविष्यसि, भविष्यथः भविष्यथ** एषु पूर्ववत् रूपाणि भवन्ति।

**भविष्यामि** - भूधातोः लृटि मिपि पूर्ववत् भविष्य मि इति अतो दीर्घो यञि इत्यनेन अदन्ताङ्गस्य दीर्घे भविष्यामि इति रूपं सिध्यति। एवमेव भविष्यावः भविष्यामः इत्यपि।

टिप्पणी



## भ्वादिप्रकरणे- भूधातोः लृटि लोटि च रूपसाधनम्

भूधातोः लृटि रूपाणि अधः पट्टिकायां प्रदर्शितानि सन्ति -

| लृट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | भविष्यति | भविष्यतः | भविष्यन्ति |
| मध्यमपुरुषः | भविष्यसि | भविष्यथः | भविष्यथ |
| उत्तमपुरुषः | भविष्यामि | भविष्यावः | भविष्यामः |

अधः केचिद् धातवः दीयन्ते। तेषां रूपाणि एतावता अतिक्रान्तानि कानिचन सूत्राणि प्रयुज्य कर्तुं शक्यानि। तानि रूपाणि अभ्यासाय छात्रेण साधनीयानि।

१) **पठ** व्यक्तायां वाचि - **पठिष्यति पठिष्यतः पठिष्यन्ति। पठिष्यसि पठिष्यथः पठिष्यथ। पठिष्यामि पठिष्यावः पठिष्यामः।**

२) **गद** व्यक्तायां वाचि - **गदिष्यति गदिष्यतः गदिष्यन्ति। गदिष्यसि गदिष्यथः गदिष्यथ। गदिष्यामि गदिष्यावः गदिष्यामः।**

३) **अर्च** पूजायाम् - **अर्चिष्यति अर्चिष्यतः अर्चिष्यन्ति। अर्चिष्यसि अर्चिष्यथः अर्चिष्यथ। अर्चिष्यामि अर्चिष्यावः अर्चिष्यामः।**

४) **व्रज** गतौ - **व्रजिष्यति व्रजिष्यतः व्रजिष्यन्ति। व्रजिष्यसि व्रजिष्यथः व्रजिष्यथ। व्रजिष्यामि व्रजिष्यावः व्रजिष्यामः।**

५) **कटेँ** वर्षावरणयोः - **कटिष्यति कटिष्यतः कटिष्यन्ति। कटिष्यसि कटिष्यथः कटिष्यथ। कटिष्यामि कटिष्यावः कटिष्यामः।**

६) **क्षि** क्षये - **क्षयिष्यति क्षयिष्यतः क्षयिष्यन्ति। क्षयिष्यसि क्षयिष्यथः क्षयिष्यथ। क्षयिष्यामि क्षयिष्यावः क्षयिष्यामः।**

७) **चितीँ** संज्ञाने - **चेतिष्यति चेतिष्यतः चेतिष्यन्ति। चेतिष्यसि चेतिष्यथः चेतिष्यथ। चेतिष्यामि चेतिष्यावः चेतिष्यामः।**

८) **शुच** शोके - **शोचिष्यति शोचिष्यतः शोचिष्यन्ति। शोचिष्यसि शोचिष्यथः शोचिष्यथ। शोचिष्यामि शोचिष्यावः शोचिष्यामः।**



## पाठगतप्रश्नाः-१

१. लृट् शेषे च इति सूत्रस्य उदाहरणं किम्।

२. लृडादेशस्य तिङः आर्धधातुकसंज्ञा भवति न वा।

३. लृटि स्यप्रत्ययः सार्वधातुकः आर्धधातुको वा।



४. स्यप्रत्ययः केषु लकारेषु भवति।

५. लृट् शेषे च इत्यत्र कः शेषपदार्थः।

६. इदं लृटः उदाहरणं नास्ति।

१) भविष्यथः २) भविष्याव ३) भविष्यामि ४) भविष्यतः

---

## लोट् लकारः

### [१५.२] लोट् च॥ (३.३.१६२)

**सूत्रार्थः** - विध्यादिषु अर्थेषु धातोः लोट् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे पदद्वयमस्ति। लोट् (१/१), च इत्यव्ययपदम्। विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति सूत्रात् विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु इति पदमनुवर्तते। प्रत्ययः परश्च इति सूत्रद्वयमधिकृतमत्र। प्रत्ययाधिकारे पठितत्वात् लोट् इति प्रत्ययसंज्ञकः। धातोः इति पञ्चम्यन्तं पदमधिकृतमस्ति। सूत्रार्थो भवति - विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु अर्थे वर्तमानाद् धातोः परं लोट् प्रत्ययः भवति। विध्यादीनाम् विस्तृतं विवेचनम् विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति सूत्रे द्रष्टव्यम्।

(यदि परीक्षासु अस्य व्याख्या कर्तव्या तर्हि विधिलिङि प्रपञ्चितो विषयः अवश्यलेख्यः अस्ति।)

### [१५.३] आशिषि लिङ्-लोटौ॥ (३.३.१७३)

**सूत्रार्थः** - आशिषि अर्थे धातोः लिङ्लोटौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। आशिषि (७/१), लिङ्लोटौ (१/२)। लिङ् च लोट् च इति लिङ्लोटौ इति इतरेतरयोगद्वन्द्वसमासः। प्रत्ययः परश्च इति सूत्रद्वयमधिकृतमत्र। प्रत्ययाधिकारे पठितत्वात् लिङ् लोट् इति प्रत्ययौ। धातोः इति पञ्चम्यन्तं पदमधिकृतमस्ति। सूत्रार्थो भवति - आशिषि अर्थे वर्तमानाद् धातोः परम् लिङ् लोट् च प्रत्ययौ स्तः।

आशिस् इति सकारान्तः स्त्रीलिङ्गशब्दः। आशासनम् याच्ञा आशीः। अप्राप्तस्य इष्टस्य अर्थस्य प्राप्तुम् इच्छा आशीः। कश्चिद् शक्त्या ज्ञानेन वयसा वा ज्येष्ठः कनिष्ठस्य अप्राप्तः इष्टः अर्थः कनिष्ठस्य भवतु इति इच्छां वचसा प्रकटयति। सा आशीः कथ्यते। तथाहि अभियुक्तोक्तिः -

**वात्सल्याद्यत्र मान्येन कनिष्ठस्याभिधीयते।**
**इष्टावधारकं वाक्यमाशीः सा परिकीर्तिता।।**

**उदाहरणम्** - चिरं जीव। सफलो भवतात्। स्वस्ति भवतु।



**सूत्रार्थसमन्वयः** - आशीर्वादार्थे वर्तमानाद् भूधातोः आशिषि लिङ्-लोटौ इति सूत्रेण कर्तरि लोट् विधीयते। लोटः अनुबन्धलोपे भू ल् इति जाते लस्य स्थाने प्रथमपुरुषैकवचनविवक्षायां तिप्-प्रत्यये भू ति इति स्थिते तिङ्शित्सार्वधातुकम् इति सूत्रेण तिपः सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ ति इति जायते। शप्-प्रत्ययः शित् एवञ्च धात्वधिकारोक्तः। अतः तिङ्शित् सार्वधातुकमिति सार्वधातुकसंज्ञकः। अतः सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ ति इति जायते। यथासंख्यमनुदेशः समानाम् इति परिभाषया परिष्कृतेन एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव् अ ति इति जाते वर्णसम्मेलने भवति इति रूपं लभ्यते। तदा -

## [१५.४] एरुः॥ (३.४.८६)

**सूत्रार्थः** - लोटः इकारस्य उः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण उकारः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। एः (६/१) (इकारस्य षष्ठी), उः (१/१)। लोटो लङ्वत् इति सूत्रात् लोटः इति षष्ठ्यन्तं पदमनुवर्तते। सूत्रार्थो भवति - लोटः इकारस्य स्थाने उकारः स्यात्।

**उदाहरणम्** - भवतु

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण भव् अ ति स्थितौ ति लोट् अस्ति। एवञ्च तस्य इकारः अस्ति। अतः प्रकृतसूत्रेण इकारस्य स्थाने उकारे भवतु इति रूपं लभ्यते। तदा -

## [१५.५] तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्॥ (७.१.३५)

**सूत्रार्थः** - आशिषि तुह्योः तातङ् वा स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण तातङ् विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। तुह्योः तातङ् आशिषि अन्यतरस्याम् इति सूत्रस्थसन्धेः छेदः। तुह्योः (६/२), तातङ् (१/१), आशिषि (७/१), अन्यतरस्याम् इति विकल्पार्थे अव्ययम्। तुश्च हिश्च तुही, तयोः तुह्योः इति इतरेतरयोगद्वन्द्वसमासः। सूत्रार्थो भवति - आशिषि विद्यमानस्य तु इत्यस्य स्थाने हि इत्यस्य च स्थाने तातङ् विकल्पेन भवति।

तातङ् इत्यस्य ङकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, तस्य लोपः इति सूत्रेण लोपः च भवति। अकारः उच्चारणार्थः अस्ति। तात् इति अवशिष्यते। इत्थम् तात् अर्थात् तातङ् अनेकाल् अस्ति, ङिदपि अस्ति। अतः परिभाषाप्रकरणे प्रोक्तप्रकारेण अनेकाल् ङित् आदेशः ङिच्च इति परिभाषया यस्य उक्तः तस्य अन्त्यस्य अलः एव भवति। ङिच्च इति परिभाषा अनेकाल्शित् सर्वस्य इति परिभाषायाः अपवादः एवास्ति। तत्रोच्यते - कोऽपि इत्संज्ञकः पाणिनिना प्रयोजनम् उद्दिश्य आसज्यते। यथा क्वचित् ङकारः इत् चेत् क्ङिति च इति सूत्रेण वृद्धिनिषेधो भवति, ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च इत्यनेन सम्प्रसारणं भवति। इत्थं यदि



ङित्वस्य प्रयोजनं स्यात् तर्हि इदं ङित्त्वं कार्यं कृत्वा मन्थरं भवति, शक्तिहीनं भवति। अतः तादृशं ङित्त्वम् अस्ति चेदपि ङिच्च इति परिभाषा कार्यं न करोति। अत्रापि तातङः ङित्त्वम् अन्यत्र कार्यं कृत्वा शक्तिहीनं सञ्जातम्। अतः ङिच्च इति परिभाषा न प्रवर्तते। अत एव अनेकाल्शित् सर्वस्य इति परिभाषया तातङ् तुस्थाने हिस्थाने सर्वादेशः भवति।

**उदाहरणम्** - भवतात्।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण भवतु इति स्थितौ तु इति प्रत्ययः आशिषि लिङ्लोटौ इति सूत्रेण विहितस्य लोटः स्थाने अस्ति। अतः स्थानिवद्भावात् सोऽपि आशिषि एवास्ति। अतः अनेकाल्शित् सर्वस्य इति परिभाषया तु इति सर्वस्य स्थाने विकल्पेन तातङ्- आदेशे **भवतात्** इति रूपं निष्पद्यते। तातङ्ङभावपक्षे **भवतु** इत्यपि रूपं सिध्यति।

--

आशीर्वादार्थे वर्तमानाद् भूधातोः आशिषि लिङ्-लोटौ इति सूत्रेण कर्तरि लोटि लस्य स्थाने तस्-प्रत्यये भू तस् इति स्थितिर्जायते। तदा -

## [१५.६] लोटो लङ्वत्॥ (३.४.८५)

**सूत्रार्थः** - लङः स्थाने कार्याणि इव कार्याणि लोटः स्थाने अतिदिश्यन्ते। कार्याणि च लोटः तामादयः सलोपश्च।

**सूत्रव्याख्या** - अतिदेशसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। लोटः लङ्वत् इति सूत्रगतपदच्छेदः। लोटः (६/१), लङ्वत् इत्यव्ययपदम्। लङः इव इति लङ्वत्। (तत्र तस्येव इति सूत्रेण वतिः प्रत्ययः।) सूत्रार्थो भवति - लङः स्थाने कार्याणि इव कार्याणि लोटः स्थाने अतिदिश्यन्ते। कानि तानि कार्याणि। कार्याणि हि - तस्थस्थमिपां तान्तन्तामः इति सूत्रेण विहिताः तामादयः, नित्यं ङितः सूत्रेण विहितः सलोपश्चेति।

अनेन सूत्रेण अतिदेशः कृतः। अतः अतिदेशवशात् लङः स्थाने कार्यविधायकानि सूत्राणि अत्र प्रवर्तन्ते। तदुपन्यासः अधस्तात्।

## [१५.७] तस्थस्थमिपां तान्तन्तामः॥ (३.४.१०१)

**सूत्रार्थः** - ङितः चतुर्णां तामादयः क्रमात् स्युः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण ताम् तम् त अ एते विधीयन्ते। अस्मिन् सूत्रे द्वे पदे स्तः। तस्थस्थमिपाम् तान्तन्तामः इति सूत्रगतपदच्छेदः। नित्यं ङितः इति सूत्रात् ङितः इति षष्ठ्यन्तं पदमनुवर्तते। लस्य इत्यधिकृतम्। ताः च थाः च थः च मिप् च इति तस्थस्थमिपः, तेषां तस्थस्थमिपाम् इति इतरेतरयोगद्वन्द्वसमासः। (अत्र तस् इति सान्तः प्रत्ययः। तस्य वेधस्-शब्दवत् पुंसि रूपम् ताः। एवमन्यत्र।) ताम् च तम् च तश्च अम् च इति तान्तन्तामः इति इतरेतरयोगद्वन्द्वसमासः। ङितः इति लस्य विशेषणम्। अतः लः यः ङित् तस्य इत्यर्थो लभ्यते। सूत्रार्थो भवति - ङितः लस्य स्थाने विहितानाम् तस् थस् थ मिप् एषां स्थाने ताम् तम् त अम् एते क्रमात् स्युः। ताम् इत्यादयः अनेकालः सन्ति। अतः



## भ्वादिप्रकरणे- भूधातोः लृटि लोटि च रूपसाधनम्

अनेकाल्शित् सर्वस्य इति परिभाषया सर्वस्य स्थाने भवन्ति। एवञ्च ङितो लकाराः भवन्ति लङ् लिङ् लुङ् लृङ् चेति चत्वारः। एषे चतुर्षु अस्य सूत्रस्य प्रवृत्तिः स्यात्। तत्र लोटः स्थाने लङः इव कार्याणि अतिदिष्टानि। अतः एतत्सूत्रं लोटि अपि प्रवर्तते।

**उदाहरणम् -** भवताम्। भवतम्। भवत।

**सूत्रार्थसमन्वयः -** आशीर्वादार्थे वर्तमानाद् भूधातोः आशिषि लिङ्-लोटौ इति सूत्रेण कर्तरि लोटि लस्य स्थाने तस्-प्रत्यये भू तस् इति स्थितिर्जायते। तत्र लोटः स्थाने तस् विहितः अस्ति। लोटः स्थाने लङः इति कार्याणि भवन्ति इति अतिदेशः अस्ति। अतः लङः स्थाने कार्यविधायकं तस्थस्थमिपां तान्तन्तामः इति सूत्रमत्र प्रवर्तते। तेन तसः स्थाने सर्वादेशः ताम् भवति। तेन भू ताम् इति स्थितिर्जायते। स्थानिवद्भावात् तामः अपि तिङ्शित्सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ ताम् इति जायते। शप्-प्रत्ययः शित् एवञ्च धात्वधिकारोक्तः। अतः तिङ्शित् सार्वधातुकमिति सार्वधातुकसंज्ञकः। अतः सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ ताम् इति जायते। यथासंख्यमनुदेशः समानाम् इति परिभाषया परिष्कृतेन एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव् अ ताम् इति जाते वर्णसम्मेलने **भवताम्** इति रूपं सिध्यति।

(भवन्तु इति रूपे लोटो लङ्वत् इत्यादिकार्यं नास्ति। तथापि क्रमेण रूपम् आयाति। अतः अत्र उपस्थाप्यते।)

**भवन्तु -** आशीर्वादार्थे वर्तमानाद् भूधातोः आशिषि लिङ्-लोटौ इति सूत्रेण कर्तरि लोटि लस्य स्थाने प्रथमबहुवचनविवक्षायाम् झि-प्रत्यये भू झि इति स्थिते झकारस्य स्थाने झोऽन्तः इति सूत्रेण अन्त् इत्यादेशे भू अन्ति इति जाते ततः शपि गुणे अवादेशे भव् अ अन्ति इति स्थिते अतो गुणे इति सूत्रेण पररूपैकादेशे भवन्ति इति रूपं लभ्यते। तत्र अन्ति लोट् अस्ति। एवञ्च तस्य इकारः अस्ति। अतः एरुः इति सूत्रेण इकारस्य स्थाने उकारे **भवन्तु** इति रूपं सिध्यति।

(अत्र सिप्-प्रत्यये कृते भव इति रूपं देयमस्ति। परन्तु तद् अग्रे दत्तमस्ति। प्रकृतसूत्रस्योदाहरणानि अत्र दीयन्ते।)

**भवतम् -** पूर्ववत् आशीर्वादार्थे वर्तमानाद् भूधातोः आशिषि लिङ्-लोटौ इति सूत्रेण कर्तरि लोटि लस्य स्थाने मध्यमद्विवचनविवक्षायाम् थस्-प्रत्यये भू थस् इति स्थितिर्जायते। लोटो लङ्वत् इति अतिदेशेन तस्थस्थमिपां तान्तन्तामः इति सूत्रेण थसः स्थाने सर्वादेशे तम्-आदेशे भू तम् इति स्थितिर्जायते। ततः शपि गुणे अवादेशे भव् अ तम् इति जाते वर्णसम्मेलने **भवतम्** इति रूपं सिध्यति।

**भवत -** पूर्ववत् भूधातोः आशिषि लिङ्-लोटौ इति सूत्रेण कर्तरि लोटि लस्य स्थाने मध्यमबहुवचनविवक्षायाम् थ-प्रत्यये भू थ इति स्थितिर्जायते। लोटो लङ्वत् इति अतिदेशेन तस्थस्थमिपां तान्तन्तामः इति सूत्रेण थस्य स्थाने सर्वादेशे त-आदेशे भू त इति स्थितिर्जायते। ततः शपि गुणे अवादेशे भव् अ त इति जाते वर्णसम्मेलने **भवत** इति रूपं सिध्यति।



## [१५.८] सेर्ह्यपिच्च॥ (३.४.८७)

**सूत्रार्थः** - लोटः सेः हि स्यात्। सः अपित् अस्ति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण हि-आदेशः विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। सेः हि अपित् च इति सूत्रगतपदच्छेदः। सेः (६/१), हि (१/१), अपित् (१/१), च इत्यव्ययम्। लोटो लङ्वत् इति सूत्रात् लोटः इति षष्ठ्यन्तं पदमनुवर्तते। प्रत्ययः परश्चेति द्वयमपि अधिकृतम्। सूत्रार्थो भवति - लोटः स्थाने विहितस्य सिपः स्थाने हि इत्यादेशो भवति। स च आदेशः अपित् अस्ति। तिप्-तस्-झि ... इति सूत्रेण मध्यमैकवचनविवक्षायां लस्य स्थाने सिप् विधीयते। यदि लोटः स्थाने सिप् विहितः तर्हि सिपः स्थाने अनेन सूत्रेण हि इति आदेशः विधीयते। हि अनेकाल्त्वात् सर्वादेशः भवति।

स्थानिवद्भावात् सिपः पित्त्वं हि-आदेशे अतिदिश्यते। तद्वारणाय अपित् इति उक्तं सूत्रे। अपित्त्वस्य फलं तु सार्वधातुकमपित् इति सूत्रेण ङिद्वद्भावात् क्ङिति च इति गुणवृद्धिनिषेधादिकम्।

**उदाहरणे सूत्रार्थसमन्वयः** -

**भवसि** - आशीर्वादार्थे वर्तमानाद् भूधातोः आशिषि लिङ्-लोटौ इति सूत्रेण कर्तरि लोटि लस्य स्थाने मध्यमपुरुषैक-वचनविवक्षायां सिपि अनुबन्धलोपे भू सि इति स्थितिर्भवति। अत्र लोटः स्थाने सिः विहितः अस्ति। अतः सेर्ह्यपिच्च इति प्रकृतसूत्रेण सिस्थाने हि इति अनेकाल्त्वात् सर्वादेशे भू हि इति जाते हि-आदेशस्य स्थानिवद्भावात् सार्वधातुकसंज्ञायां कर्तरि विहितत्वाच्च कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ हि इति जायते। ततश्च भुवः ऊकारस्य गुणे ओकारे भो अ हि इति जाते ओकारस्य अवादेशे भव हि इति जायते। तदा -

## [१५.९] अतो हेः॥ (६.४.१०५)

**सूत्रार्थः** - अदन्तादङ्गात् परस्य हेर्लुक्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। सूत्रेस्मिन् पदद्वयं वर्तते। अतः हेः इति सूत्रगतपदच्छेदः। अतः (५/१), हेः (६/१)। चिणो लुक् इति सूत्रात् लुक् इति प्रथमान्तं पदमनुवर्तते। अङ्गस्य इति अधिकृतम्। अङ्गस्य इति षष्ठ्यन्तं पदं पञ्चम्यन्ततया विपरिणमते। तदा वाक्ययोजना भवति - अतः अङ्गात् हेः लुक् इति। अत्र तदन्तविधिः भवति। अत्र अतः अङ्गात् इति पदद्वयं समानविभक्तिकं वर्तते। अत्र अङ्गात् इति विशेष्यम्। अतः इति विशेषणम्। अतः तदन्तविधिना अदन्तात् अङ्गात् इति लभ्यते। ततश्च सूत्रार्थः भवति - अदन्तात् अङ्गात् परस्य हेः लुक् भवतीति।

**विशेषता** - प्रत्ययस्य लुक्-श्लु-लुपः इत्यनेन प्रत्ययस्य अदर्शनस्य लुक् इति संज्ञा भवति। अत्र हि इत्यपि स्थानिवद्भावेन प्रत्ययः अस्ति। अतः अत्र हि इति समग्रस्य प्रत्ययस्य लुक् भवति। तस्मात् अत्र अलोऽन्त्यस्य इति परिभाषा न प्रवर्तते।

**उदाहरणम्** - भव।



**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तरूपेण भव हि इति स्थितिः। अत्र हि-प्रत्यये परे भव इति अङ्गम्। तच्च अदन्तमस्ति। तस्मात् तस्मात् परस्य हेः लुक् प्रकृतसूत्रेण भवति। तेन **भव** इति साधु रूपं निष्पद्यते।

तुह्योस्तातङ्ङाशिषि अन्यतरस्याम् इति सूत्रेण विकल्पेन हिस्थाने तातङ् विधयते। अतः पक्षे **भवतात्** इत्यपि रूपं भवति।

## [१५.१०] मेर्निः॥ (३.४.८९)

**सूत्रार्थः** - लोटः मेः स्थाने निः आदेशः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण निः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। मेः (६/१), निः (१/१)। लोटो लङ्वत् इति सूत्रात् लोटः इति षष्ठ्यन्तं पदमनुवर्तते। सूत्रार्थो भवति - लोटः स्थाने विहितस्य मिपः स्थाने निः आदेशः भवति। मिः अनेकाल्त्वात् सर्वादेशः भवति। लङ्वद्भावेन तस्थस्थमिपां तान्तन्तामः इति सूत्रेण मिपः स्थाने अम् प्राप्तः। तस्य अनेन बाधः क्रियते। अतः अमः निः अपवादः।

**उदाहरणे सूत्रार्थसमन्वयः** - आशीर्वादार्थे वर्तमानाद् भूधातोः आशिषि लिङ्-लोटौ इति सूत्रेण कर्तरि लोटि लस्य स्थाने उत्तमैक-वचनविवक्षायां मिपि अनुबन्धलोपे भू मि इति स्थितिर्भवति। लोटो लङ्वत् इति सूत्रेण अतिदेशे कृते तस्थस्थमिपां तान्तन्तामः इति सूत्रेण मिपः स्थाने अम्-आदेशे प्राप्ते प्रकृतसूत्रेण तम् अपवादत्वेन प्रबाध्य निः विधीयते। अतः भू नि इति स्थितिर्जायते। तदा -

## [१५.११] आडुत्तमस्य पिच्च॥ (३.४.९२)

**सूत्रार्थः** - लोडुत्तमस्य आट् स्यात् पिच्च।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन आट् विधीयते। अस्मिन् सूत्रे आट् उत्तमस्य पित् च इति पदचतुष्टयम् अस्ति। तत्र आट् (१/१), उत्तमस्य (६/१) पित् (१/१), चेति अव्ययपदम्। प् इत् यस्य स पित् इति बहुव्रीहिसमासः। ततश्च सूत्रार्थो भवति - लोटः स्थाने विहितस्य उत्तमपुरुषस्य आट् स्यात् स पित् च स्यात् इति। आटः टित्त्वात् आद्यन्तौ टकितौ इत्यनया परिभाषया आट् उत्तमपुरुषस्य आद्यावयवः भवति।

उत्तमाः षट् सन्ति। मिप् वस् मस् , इट् वहि महिङ् इति। तेषु केवलं मिप् एव पित् अस्ति। अन्ये अपितः सन्ति। अतः तेषामपि पित्त्वविधानाय अत्र आटः पित्त्वम् उक्तम्। एवञ्च सार्वधातुकमपित् इति सूत्रेण अपित् सार्वधातुकं ङिद्वद् भवति। तद् मा भूत् इति पित्त्वविधिः। ङित्त्वेन क्ङिङति च गुणवृद्धिनिषेधः प्राप्नोति। तस्य वारणायायं पित्त्वप्रपञ्चः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तरूपेण भू नि इति स्थितिः। तत्र लोटः उत्तमस्य मिपः स्थाने विहितः निः अपि उत्तमः एव। अत एव आडुत्तमस्य पिच्च इति प्रकृतसूत्रेण आडागमे आटः टित्त्वात् आद्यन्तौ टकितौ इत्यनया परिभाषया आद्यावयवे भू आनि इति स्थिते आनि इत्यस्य



सार्वधातुकसंज्ञायां कर्तरि विहितत्वाच्च कर्तरि शप् इति सूत्रेण धातोः शपि भू अ आनि इति जाते भुवः ऊकारस्य गुणे ओकारे भो अ आनि इति जाते ओकारस्य अवादेशे भव आनि इति जायते। तदा अकः सवर्णे दीर्घः इति सूत्रेण अकार-आकारयोः स्थाने सवर्णदीर्घैकादेशे **भवानि** इति रूपं सिध्यति।

## [१५.१२] नित्यं ङितः॥ (३.४.९९)

**सूत्रार्थः** - सकारन्तस्य ङिदुत्तमस्य नित्यं लोपः भवति।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयमस्ति। नित्यम् ङितः इति सूत्रगतपदच्छेदः। नित्यम् इति क्रियाविशेषणम् अव्ययपदम्। ङितः इति षष्ठ्यन्तं पदम्। लस्य (६/१) इति अधिकृतम्। स उत्तमस्य इति सम्पूर्णं सूत्रमनुवर्तते। तत्र सः इति षष्ठ्यन्तम्। उत्तमस्य इत्यपि षष्ठ्यन्तम्। प्रत्ययः इति अधिकृतम्। षष्ठ्यन्ततया विपरिणामश्च भवति। ङकारः इत् यस्य सः ङित्, तस्य ङितः इति बहुव्रीहिसमासः। ङित् इत्यनेन ङित् लकाराः ग्राह्याः। ते हि लङ् लिङ् लुङ् लृङ् चेति चत्वारः। पदयोजना - सः उत्तमस्य ङितः लस्य प्रत्ययस्य नित्यं लोपः।

ङितः उत्तमस्य इत्यस्यार्थो हि ङितः लकारस्य स्थाने विहितः य उत्तमसंज्ञकः प्रत्ययः तस्य इति।

अत्र सूत्रे तदन्तविधिः भवति। अत्र सः ङिदुत्तमस्य इति षष्ठ्यन्तं समानविभक्तिकं पदद्वयमस्ति। सः इति विशेषणम्, उत्तमस्य इति विशेष्यम्। अतः तदन्तविधिना सकारान्तस्य उत्तमस्य इत्यर्थो लभ्यते। अत्र उत्तमस्य इति अल्समुदायबोधकं पदम्, आदेशस्य लोपः। अतः अलोऽन्त्यस्य इति परिभाषया सान्तस्य उत्तमस्य अन्त्यस्य अलः सकारस्य लोपः भवति इत्यर्थो लभ्यते। अतः सूत्रार्थो भवति - ङितः लस्य स्थाने विहितः यः सकारान्तः उत्तमः, तस्य अन्त्यस्य अलः सकारस्य नित्यं लोपः भवति।

**उदाहरणम्** - भवाव। भवाम।

**सूत्रार्थसमन्वयः** -

**भवाव** - भू-धातोः लोटि उत्तमपुरुषद्विवचने वसि भू वस् इति आडुत्तमस्य पिच्च इत्यनेन आडागमे टित्त्वाद् आद्यावयवे भू आवस् इति स्थिते शपि गुणे अवादेशे भव आवस् इति स्थिते लोटो लङ्वत् इति अतिदेशबलेन आवस् इत्यपि लङः ङित्त्वात् यानि कार्याणि तानि लभते। अतः आवस् इति ङितः स्थाने विहितः उत्तमसंज्ञकः, सान्तश्च अस्ति। अतः नित्यं ङितः इति सूत्रेण आवस् अन्त्यस्य अलः सकारस्य लोपे भव आव इति स्थिते अकः सवर्णे दीर्घः इति सूत्रेण अकार-आकारयोः स्थाने सवर्णदीर्घैकादेशे **भवाव** इति रूपं सिध्यति।

**भवाम** - भू-धातोः लोटि उत्तमपुरुषबहुवचने मसि भू मस् इति स्थिते आडागमे भू आमस् इति जाते शपि गुणे अवादेशे भव आमस् इति स्थिते लोटो लङ्वत् इति अतिदेशबलेन आमस् इत्यस्य ङिद्वद्भावेन नित्यं ङितः इति सूत्रेण आमस् अन्त्यस्य अलः सकारस्य लोपे भव आम इति स्थिते अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घैकादेशे **भवाम** इति रूपं सिध्यति।



आशिषि भूधातोः लोटि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| आशीर्लोट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | भवतु भवतात् | भवताम् | भवन्तु |
| मध्यमपुरुषः | भव भवतात् | भवतम् | भवत |
| उत्तमपुरुषः | भवानि | भवाव | भवाम |

धातोः परं विध्यादिषु अर्थेषु लोट्-लकारे विहिते तातङ् न भवति। अन्यानि सर्वाणि रूपाणि यथा आशिषि साध्यन्ते तथैव विध्यादिषु अर्थेषु अपि साध्यन्ते। न कोऽपि भेदः।

विध्यादिषु अर्थेषु भूधातोः लोटि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| विधिलोट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | भवतु | भवताम् | भवन्तु |
| मध्यमपुरुषः | भव | भवतम् | भवत |
| उत्तमपुरुषः | भवानि | भवाव | भवाम |

अधः केचिद् धातवः दीयन्ते। तेषां रूपाणि एतावता अतिक्रान्तानि कानिचन सूत्राणि प्रयुज्य कर्तुं शक्यानि। तानि रूपाणि अभ्यासाय छात्रेण साधनीयानि।

१) **पठ** व्यक्तायां वाचि - **पठतु पठताम् पठन्तु। पठ पठतम् पठत। पठानि पठाव पठाम।**

२) **गद** व्यक्तायां वाचि - **गदतु गदताम् गदन्तु। गद गदतम् गदत। गदानि गदाव गदाम।**

३) **अर्च** पूजायाम् - **अर्चतु अर्चताम् अर्चन्तु। अर्च अर्चतम् अर्चत। अर्चानि अर्चाव अर्चाम।**

४) **व्रज** गतौ - **व्रजतु व्रजताम् व्रजन्तु। व्रज व्रजतम् व्रजत। व्रजानि व्रजाव व्रजाम।**

५) **कटेँ** वर्षावरणयोः - **कटतु कटताम् कटन्तु। कट कटतम् कटत। कटानि कटाव कटाम।**

६) **क्षि** क्षये - **क्षयतु क्षयताम् क्षयन्तु। क्षय क्षयतम् क्षयत। क्षयानि क्षयाव क्षयाम।**

७) **चितीँ** संज्ञाने - **चेततु चेतताम् चेतन्तु। चेत चेततम् चेतत। चेतानि चेताव चेताम।**

८) **तप** सन्तापे - **तपतु तपताम् तपन्तु। तप तपतम् तपत। तपानि तपाव तपाम।**

९) **शुच** शोके - **शोचतु शोचताम् शोचन्तु। शोच शोचतम् शोचत। शोचानि शोचाव शोचाम।**



## पाठगतप्रश्नाः-२

७. लोट् च इति सूत्रस्य अर्थं लिखत।



८. आशिषि के लकाराः भवन्ति।

९. आशिषि लोट् केन सूत्रेण विधीयते।

१०. आशिःशब्दार्थः कः।

११. एरुः इति सूत्रस्यार्थं लिखत।

१२. मेर्निः कस्य कस्मिन् लकारे च।

१३. भवाव इति रूपे सलोपः केन सूत्रेण।

१४. लोटः मिपः स्थाने क आदेशो भवति।

१) नि २) अम् ३) इलोपः ४) आट्

१५. लोटः उदाहरणं किम्।।

१) भवावः २) भवाम ३) भवथ ४) भवतः

१६. भवतु इति रूपे तिपः इकारस्य उकारः केन सूत्रेण।

१) इतश्च २) एरुः ३) नित्यं ङितः ४) अतो हेः

१७. लोटः आट् केन सूत्रेण विधीयते।

१) आटश्च २) आडजादीनाम् ३) आडुत्तमस्य पिच्च ४) लोट् च

१८. लोटः कस्य आट् भवति।

१) अङ्गस्य २) मध्यमस्य ३) उत्तमस्य ४) आगमस्य

१९. नित्यं ङितः इति सूत्रं किं करोति।

१) आडागमः २) अडागमः ३) वृद्धिः ४) सलोपः

२०. लोटः उत्तमस्य आट् कीदृशः।

१) पित् २) अपित् ३) ङित् ४) कित्

२१. सेर्हि कीदृशः।

१) पित् २) अपित् ३) ङित् ४) कित्

२२. अतो हेः इति सूत्रेण किं विधीयते।

१) अल्लोपः २) हिलोपः ३) हिलुक् ४) अतो दीर्घः

२३. अतो हेः इति सूत्रस्योदाहरणं किम्।

१) याहि २) एधि ३) भवत ४) भव



## भूधातोः लङ्-लकारे रूपाणि

### [१५.१३] अनद्यतने लङ्॥ (३.२.१११)

**सूत्रार्थः** - अनद्यतनभूतार्थवृत्तेः धातोः लङ् स्यात्।

**सूत्रव्याख्या** - सूत्रमिदम् विधिसूत्रम्। अस्मिन् सूत्रे पदत्रयमस्ति। अनद्यतने (७/१), लङ् (१/१)। भूते (७/१), धातोः (५/१), प्रत्ययः (१/१), परश्च (१/१) चैषामधिकारः आयाति। अद्य भवः अद्यतनः, अविद्यमानः अद्यतनः यस्मिन् सः अनद्यतनः कालः इति बहुव्रीहिसमासः। अतीतरात्रेः अन्त्ययामेन आगामिरात्रेः आद्ययामेन सहितः कालः अद्यतनः। तद्भिन्नः अनद्यतनः। भूतत्वं च अतीतकालः। पदयोजना - अनद्यतने भूते धातोः परः लङ् प्रत्ययः। ततश्च सूत्रार्थः भवति - अनद्यतनभूते अर्थे वर्तमानाद् धातोः परं लङ् प्रत्ययः स्यात् इति।

धातोः अर्थः व्यापारः फलं चेति उक्तमेव। यस्य धातोः अर्थः व्यापारः अर्थात् क्रिया अनद्यतने भूते वर्तते स धातुः अनद्यतनभूतार्थवृत्तिः कथ्यते। तस्मिन् काले क्रियायाः वृत्तिः यस्य स अनद्यतनभूतार्थवृत्तिः धातुः। यदि तस्मिन् काले क्रिया इति प्रकटनस्य विवक्षा अस्ति तर्हि धातोः परं लङ् प्रत्ययः विधीयते।

**उदाहरणम्** - रामः अयोध्याया राजा अभवत्।
भूधातोः भूते अनद्यतने अर्थे लङि अकारस्य ङकारस्य च इत्संज्ञायां लोपे भू ल् इति स्थिते तिपि भू ति इति स्थिते इकारस्य लोपे भू त् इति स्थिते शपि अनुबन्धलोपे भू अ त् इति स्थिते गुणे अवादेशे अडागमे अ भव् अ त् इति स्थिते सर्वसंयोगे अभवत् इति रूपं सिद्ध्यति।

### [१५.१४] लुङ्-लङ्-लृङ्-क्ष्वडुदात्तः॥ (६.४.७१)

**सूत्रार्थः** - लुङ् लङ् लृङ् एषु अङ्गस्य अट् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण अट् विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। लुङ्-लङ्-लृङ्-क्षु (७/३), अट् (१/१), उदात्तः (१/१)। अङ्गाधिकारे पठितमिदं सूत्रम्। लुङ् च लङ् च लृङ् च इति लुङ्-लङ्-लृङः, तेषु लुङ्-लङ्-लृङ्-क्षु इति इतरेतरयोगद्वन्द्वसमासः। सूत्रार्थो भवति - लुङ्-लङ्-लृङ् एषु प्रत्ययेषु परेषु यदङ्गं तस्य अट् स्यात् स उदात्तश्च। अटः टस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, तस्य लोपः इति सूत्रेण लोपश्च भवति। अटः टित्त्वात् आद्यन्तौ टकितौ इति परिभाषया सः अङ्गस्य आद्यावयवः भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - (लट्-लकारवत् अत्र प्रक्रिया भवति। सा संक्षेपेण दीयते अत्र।) अनद्यतनभूतार्थे वर्तमानाद् भूधातोः अनद्यतने लङ् इति सूत्रेण कर्तरि लङ् विधीयते। लङः अनुबन्धलोपे भू ल् इति जाते लस्य स्थाने प्रथमपुरुषैकवचनविवक्षायां तिप्-प्रत्यये भू ति इति स्थिते तिङ्शित्सार्वधातुकम् इति सूत्रेण तिपः सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण धातोः शपि



अनुबन्धलोपे भू अ ति इति जायते। शप्-प्रत्ययः शित् एवञ्च धात्वधिकारोक्तः। अतः तिङ्शित् सार्वधातुकमिति सार्वधातुकसंज्ञकः। अतः सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ ति इति जायते। यथासंख्यमनुदेशः समानाम् इति परिभाषया परिष्कृतेन एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव ति इति जाते लङः स्थाने विहिते तिपि परे भव इति शप्-सहितस्य अङ्गसंज्ञा भवति। तदा लुङ्-लङ्-लृङ्-क्ष्वड्उदात्तः इति सूत्रेण भव इति अङ्गस्य अट्-आगमे टित्त्वाद् आद्यावयवे अभव ति इति स्थितिः जायते। तदा -

## [१५.१५] आडजादीनाम्॥ (६.४.७२)

**सूत्रार्थः** - अजादेः अङ्गस्य आट् लुङ्-लङ्-लृङ्-क्षु।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण आट् विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। आट् अजादीनाम् इति सूत्रगतपदच्छेदः। आट् (१/१), अजादीनाम् (६/३)। अङ्गस्य इति अधिकृतम्। तस्य बहुवचनान्ततया विपरिणामः भवति। लुङ्-लङ्-लृङ्-क्ष्वड्उदात्तः इति सूत्रात् लुङ्-लङ्-लृङ्-क्षु इति सप्तमीबहुवचनान्तं पदमनुवर्तते। उदात्तः इति प्रथमान्तं पदमनुवर्तते। अच् आदिः येषां ते अजादयः, तेषाम् अजादीनाम् इति बहुव्रीहिः समासः। लुङ् च लङ् च लृङ् च इति लुङ्-लङ्-लृङः, तेषु लुङ्-लङ्-लृङ्-क्षु इति इतरेतरयोगद्वन्द्वसमासः। पदयोजना भवति - अजादीनाम् अङ्गानाम् आट् उदात्तः लुङ्-लङ्-लृङ्-क्षु। सूत्रार्थो भवति - लुङ्-लङ्-लृङ् एषु प्रत्ययेषु परेषु यद् अजादि अङ्गं तस्य आट् स्यात् स उदात्तश्च। आटः टस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, तस्य लोपः इति सूत्रेण लोपश्च भवति। आटः टित्त्वात् आद्यन्तौ टकितौ इति परिभाषया सः अङ्गस्य आद्यावयवः भवति।

**उदाहरणम्** - आतत्।

**सूत्रार्थसमन्वयः** - अत सातत्यगमने इति धातोः लङि अनुबन्धलोपे अत् ल् इति जाते तिपि शपि अत् अ ति जाते लङि परतः अत्+अ इति अङ्गम्। तस्य आदिवर्णः अकारः अच्। अतः अङ्गम् अजादि। अतः प्रकृतसूत्रेण तस्य आट् आगमः, आटः टित्त्वात् आद्यन्तौ टकितौ इति परिभाषया सः अङ्गस्य आद्यावयवः भवति। तेन आ अत् अ ति स्थितिः जायते। तदा -

## [१५.१६] आटश्च॥ (६.१.९०)

**सूत्रार्थः** - आटोऽचि परे वृद्धिरेकादेशः स्यात्।

**सूत्रावतरणम्** - आ एध् ल् इति स्थिते अकार-एकारयोः स्थाने वृद्धिविधानार्थम् इदं सूत्रं प्रवर्तते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सूत्रेऽस्मिन् द्वे पदे स्तः। आटः इति षष्ठ्यन्तं पदम्। च इति अव्ययपदम्। वृद्धिरादैच् इति सूत्रात् वृद्धिः इति प्रथमान्तं पदम् अनुवर्तते। एकः पूर्वपरयोः इति सूत्रस्य अधिकारे विद्यते। तेन पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवतीति सूत्रार्थः समायाति।





**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तरूपेण आ अत् अ ति स्थितौ आटश्च इति सूत्रेण अचि परतः पूर्वपरयोः आ अ इत्यनयोः वृद्धिः एकादेशः भवति। तेन आत् अ ति जाते। ततश्च इतश्च इति सूत्रेण तिपः इकारलोपे **आतत्** इति रूपं सिध्यति।

## [१५.१७] इतश्च॥ (३.४.९९)

**सूत्रार्थः** - ङितो लस्य परस्मैपदम् इकारान्तं यत् तदन्तस्य लोपः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण लोपो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। इतः च इति पदच्छेदः। इतः (६/१), च इत्यव्ययम्। नित्यं ङितः इति सूत्रात् ङितः इति षष्ठ्यन्तं पदमनुवर्तते। लस्य (६/१) इति अधिकृतम्। इतश्च लोपः परस्मैपदेषु इति सूत्रात् परस्मैपदम् अनुवर्तते, षष्ठ्येकवचनान्ततया च विपरिणमते। पदयोजना - ङितः लस्य इतः परस्मैपदस्य लोपः।

इतः परस्मैपदस्य इति समानविभक्तिकं पदद्वयम्। इतः इति विशेषणम्, परस्मैपदमिति विशेष्यम्। अतः तदन्तविधिना इदन्तस्य परस्मैपदस्य इति लभ्यते। इदन्तपरस्मैपदस्य इत्यत्रापि स्थानषष्ठी अल्समुदायबोधकात् श्रूयते। एवञ्च आदेशः लोपरूपः। अतः अलोऽन्त्यस्य इति परिभाषया इदन्तपरस्मैपदस्य अन्त्यस्य अलः इतः लोपः भवतीति अर्थो लभ्यते। ङितः इति लस्य इत्यस्य विशेषणम्। तयोः अभेदान्वयः भवति। ङिद् यो लः तस्य इति। सूत्रार्थो भवति - ङिद् यो लकारः, तस्य स्थाने विहितं यद् इकारान्तं परस्मैपदम् , तदन्तस्य इकारस्य लोपः भवतीति। अयं लोपः सर्वेषु ङित्-लकारेषु भवति।

**उदाहरणम्** - अभवत्। अभवन्। अभवः।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण अभव ति इति स्थितिः अस्ति। अत्र ङित् लकारः लङ्। तस्य स्थाने विहितम् इकारान्तं परस्मैपदम् ति। अतः इतश्च इति प्रकृतसूत्रेण इकारस्य लोपे **अभवत्** इति रूपं सिध्यति। दशमकक्षायाः सन्धिप्रकरणे पठितानि सूत्राणि कानिचन अत्र प्रवर्तन्ते। तथाहि - अभवत् इति तिङन्तत्वात् पदम्। झलां जशोऽन्ते इति सूत्रेण अन्त्यस्य तकारस्य स्थाने स्थानत आन्तर्याद् जश्त्वे दकारे अभवद् इति स्थितिः जायते। ततश्च वाऽवसाने इति सूत्रेण विकल्पेन चर्त्वे तकारे कृते अभवत् इत्यपि शब्दः निष्पद्यते। इत्थम् **अभवद् अभवत्** इति द्विधमपि रूपं साधु। एवमन्यत्रापि विद्यार्थिना स्वयमूह्यम्।

**अभवताम्** - अनद्यतनभूतार्थे वर्तमानाद् भूधातोः अनद्यतने लङ् इति सूत्रेण कर्तरि लङ् विधीयते। लङः अनुबन्धलोपे भू ल् इति जाते लस्य स्थाने तस्-प्रत्यये भू तस् इति स्थितिर्जायते। तस्थस्थमिपां तान्तन्तामः इति सूत्रेण तसः स्थाने तामि सर्वादिशः भू ताम् इति स्थितिर्जायते। स्थानिवद्भावात् तामः अपि तिङ्शित्सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण धातोः शपि अनुबन्धलोपे भू अ ताम् इति जायते। शपोऽपि शित्वात् धात्वधिकारोक्तत्वाच्च तिङ्शित् सार्वधातुकमिति सार्वधातुकसंज्ञा भवति। अतः सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे स्थानत आन्तर्याद् ओकारे भो अ ताम् इति जायते। यथासंख्यमनुदेशः समानाम् इति



परिभाषया परिष्कृतेन एचोऽयवायावः इति सूत्रेण अच्परत्वाद् ओकारस्य अवादेशे भव ताम् इति जाते लङः स्थाने विहितस्य तसः स्थाने विहिते तामि परे भव इति शप्-सहितस्य अङ्गसंज्ञा भवति। तदा लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण भव इति अङ्गस्य अट्-आगमे टित्त्वाद् आद्यावयवे अभव ताम् जाते वर्णसम्मेलने **अभवताम्** इति रूपं सिध्यति। (यद्यपि अस्मिन् रूपे इतश्च इति सूत्रं न प्रवर्तते तथापि धातोः लङि रूपाणि प्रायः क्रमशः साधयित्वा प्रदर्श्यन्ते। अतः क्रमानुरोधादत्र उपन्यस्तम्।)

**अभवन्** - अनद्यतनभूतार्थे वर्तमानाद् भूधातोः अनद्यतने लङ् इति सूत्रेण कर्तरि लङ् विधीयते। लङः अनुबन्धलोपे भू ल् इति जाते लस्य स्थाने प्रथमबहुवचनविवक्षायाम् झि-प्रत्यये भू झि इति स्थिते झकारस्य स्थाने झोऽन्तः इति सूत्रेण अन्त् इत्यादेशे भू अन्ति इति जाते ततः शपि गुणे अवादेशे भव् अ अन्ति इति स्थिते लङः स्थाने विहिते झि-प्रत्यये परे भव इति शप्-सहितस्य अङ्गसंज्ञा भवति। तदा लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण भव इति अङ्गस्य अट्-आगमे टित्त्वाद् आद्यावयवे अभव अन्ति इति स्थिते अतो गुणे इति सूत्रेण पररूपैकादेशे अभवन्ति इति जायते। अत्र ङित् लकारः लङ् अस्ति। तस्य स्थाने विहितम् इकारान्तं परस्मैपदम् अन्ति। अतः इतश्च इति प्रकृतसूत्रेण इकारस्य लोपे अभवन्त् इति जाते समुदायस्य तिङन्तत्वात् पदसंज्ञायाम् संयोगान्तस्य लोपः इति सूत्रेण अन्त्यस्य तकारस्य लोपे **अभवन्** इति रूपं सिध्यति।

**अभवः** - भूधातोः लङि सिपि गुणे अवादेशे भव सि इति स्थिते लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण भव इति अङ्गस्य अडागमे अभव सि इति जाते इतश्च इति सूत्रेण इलोपे अभवस् इति जाते रुत्वे विसर्गे अभवः इति रूपं सिध्यति।

**अभवतम्** - पूर्ववत् भूधातोः लङि लस्य स्थाने मध्यमद्विवचनविवक्षायाम् थस्-प्रत्यये भू थस् इति स्थितिर्जायते। तस्थस्थमिपां तान्तन्तामः इति सूत्रेण थसः स्थाने सर्वादेशे तम्-आदेशे भू तम् इति स्थितिर्जायते। ततः शपि गुणे अवादेशे भव् अ तम् इति जाते लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण भव इति अङ्गस्य अडागमे अभव तम् इति स्थिते वर्णसम्मेलने **अभवतम्** इति रूपं सिध्यति।

**अभवत** - पूर्ववत् भूधातोः लङि लस्य स्थाने मध्यमबहुवचनविवक्षायाम् थ-प्रत्यये भू थ इति जाते तस्थस्थमिपां तान्तन्तामः इति सूत्रेण थस्य स्थाने सर्वादेशे त-आदेशे भू त इति जाते शपि गुणे अवादेशे भव् अ त इति जाते लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण भव इति अङ्गस्य अडागमे अभव त इति स्थिते वर्णसम्मेलने **अभवत** इति रूपं सिध्यति।

**अभवम्** - पूर्ववत् भूधातोः लङि लस्य स्थाने उत्तमैकवचनविवक्षायाम् मिपि भू मि इति जाते तस्थस्थमिपां तान्तन्तामः इति सूत्रेण मिपः स्थाने अम्-आदेशे भू अम् इति जाते शपि गुणे अवादेशे भव् अ अम् इति जाते लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण भव इति अङ्गस्य अडागमे अभव अम् इति स्थिते अतो गुणे इति सूत्रेण पररूपैकादेशे वर्णसम्मेलने **अभवम्** इति रूपं सिध्यति।

**अभवाव** - भू-धातोः लङि उत्तमपुरुषद्विवचने वसि भू वस् इति स्थिते शपि गुणे अवादेशे भव वस् इति स्थितौ वस् इति ङितः स्थाने विहितः उत्तमसंज्ञकः, सान्तश्च अस्ति। अतः नित्यं ङितः इति सूत्रेण वसः अन्त्यस्य अलः सकारस्य लोपे भव व इति स्थिते लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण भव



इति अङ्गस्य अभव व इति स्थिते अतो दीर्घो यञि इति सूत्रेण अतः अङ्गस्य दीर्घे आकारे **अभवाव** इति रूपं सिध्यति।

**अभवाम** - भू-धातोः लङि उत्तमपुरुषबहुवचने मसि भू मस् इति स्थिते शपि गुणे अवादेशे भव मस् इति स्थितौ मस् इति ङितः स्थाने विहितः उत्तमसंज्ञकः, सान्तश्च अस्ति। अतः नित्यं ङितः इति सूत्रेण मसः अन्त्यस्य अलः सकारस्य लोपे भव म इति स्थिते लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण भव इति अङ्गस्य अभव म इति स्थिते अतो दीर्घो यञि इति सूत्रेण अतः अङ्गस्य दीर्घे आकारे **अभवाम** इति रूपं सिध्यति।

अनद्यतने भूते भूधातोः लङि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| लङ् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| **प्रथमपुरुषः** | अभवत् | अभवताम् | अभवन् |
| **मध्यमपुरुषः** | अभवः | अभवतम् | अभवत |
| **उत्तमपुरुषः** | अभवम् | अभवाव | अभवाम |

अधः केचिद् धातवः दीयन्ते। तेषां रूपाणि एतावता अतिक्रान्तानि कानिचन सूत्राणि प्रयुज्य कर्तुं शक्यानि। तानि रूपाणि अभ्यासाय छात्रेण साधनीयानि।

१) **पठ** व्यक्तायां वाचि - **अपठत् अपठताम् अपठन्। अपठः अपठतम् अपठत। अपठम् अपठाव अपठाम।**

२) **गद** व्यक्तायां वाचि - **अगदत् अगदताम् अगदन्। अगदः अगदतम् अगदत। अगदम् अगदाव अगदाम।**

३) **अर्च** पूजायाम् - **आर्चत् आर्चताम् आर्चन्। आर्चः आर्चतम् आर्चत। आर्चम् आर्चाव आर्चाम।**

४) **व्रज** गतौ - **अव्रजत् अव्रजताम् अव्रजन्। अव्रजः अव्रजतम् अव्रजत। अव्रजम् अव्रजाव अव्रजाम।**

५) **कटेँ** वर्षावरणयोः - **अकटत् अकटताम् अकटन्। अकटः अकटतम् अकटत। अकटम् अकटाव अकटाम।**

६) **क्षि** क्षये - **अक्षयत् अक्षयताम् अक्षयन्। अक्षयः अक्षयतम् अक्षयत। अक्षयम् अक्षयाव अक्षयाम।**

७) **चितीँ** संज्ञाने - **अचेतत् अचेतताम् अचेतन्। अचेतः अचेततम् अचेतत। अचेतम् अचेताव अचेताम।**

८) **तप** सन्तापे - **अतपत् अतपताम् अतपन्। अतपः अतपतम् अतपत। अतपम् अतपाव अतपाम।**



९) **शुच** शोके - **अशोचत् अशोचताम् अशोचन्। अशोचः अशोचतम् अशोचत। अशोचम् अशोचाव अशोचाम।**



## पाठगतप्रश्नाः

२४. अनद्यतने लङ्, भूते भविष्यति वा।

२५. लङ्विधायकं सूत्रं लिखत।

२६. अभवत् इतीह अड्विधायकं सूत्रं किम्।

२७. इतश्च इति सूत्रस्य वृत्तिं लिखत।

२८. लङि हलादेः अङ्गस्य अट् केन सूत्रेण।

२९. लुङ्लङ्लृङ्क्ष्वडुदात्तः इति सूत्रेण अट् कस्य आगमो विधीयते।।

१) धातोः २) अङ्गस्य ३) प्रत्ययस्य ४) अभ्यासस्य

३०. इतश्च इति सूत्रस्योदाहरणं किम्।

१) अभवः २) अभवताम् ३) अभवतम् ४) अभवम्

३१. अभवत् इतीह तिपः इकारलोपः केन सूत्रेण।

१) इतश्च २) एरुः ३) नित्यं ङितः ४) अतो हेः

३२. आडजादीनाम् इति सूत्रस्योदाहरणं किम्।

१) आगच्छति २) आतत् ३) आस्ते ४) भवानि

३३. एषु किं सूत्रं लोट्-लकारे न प्रवर्तते।

१) एरुः २) शेषात् कर्तरि परस्मैपदम् ३) शेषे प्रथमः ४) इतश्च



## पाठसारः

अस्मिन् पाठे लृट् लोट् लङ् चेति त्रयो लकाराः उपन्यस्ताः। तेषु लकारेषु भूधातोः रूपाणि साधयितुं यानि नूतनानि सूत्राणि प्रवर्तन्ते तानि उपन्यस्तानि।

क्रियार्थायाम् क्रियायां सत्याम् असत्यां च धात्वर्थव्यापारः भविष्यत्काले इति विवक्षा चेत् धातोः लृट् लृट् शेषे च इति सूत्रेण विधीयते। स्यतासी लृलुटोः इति सूत्रेण लृटि परतः शपं प्रबाध्य धातोः स्यप्रत्ययः भवतीति अस्य लकारस्य विशेषोऽस्ति। स्यप्रत्ययः आर्धधातुकसंज्ञकः। अतः अयम् आर्धधातुकलकारः इति प्रसिद्धिः।



## भ्वादिप्रकरणे- भूधातोः लृटि लोटि च रूपसाधनम्

विध्यादीनाम् अर्थानाम् प्रकटनाय धातोः लोट् लोट् च इति सूत्रेण विधीयते। आशिषि तु आशिषि लिङ्-लोटौ इति सूत्रेण लिट् लिङ् च विधीयते। विधिलोटि आशीर्लोटि च साधारणानि कार्याणि सन्ति। केवलं तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् इति सूत्रेण तिपः सिपः रूपयोः तातङ् इति आशीर्लोटि विशिष्टं कार्यम्। तेन भवतु भवतात् , भव भवतात् इति रूपं द्वयं तत्र भवति। अन्यानि रूपाणि विधिलोटि आशीर्लोटि च साधारणानि एव। तत्र इकारस्य उकारत्वाय एरुः, सेर्ह्यपिच्च इति सूत्रेण सिपः हि, अतो हेः इत्यनेन अतः परस्य हेः लुक्, मेर्निः इत्यनेन मिपः निः, आडुत्तमस्य पिच्च इति सूत्रेण उत्तमस्य आट् भवति इति लोटः सारसंक्षेपः।

कानिचन कार्याणि लङ् लिङ् लुङ् लृङ् एषां चतुर्णां ङित्-लकाराणाम् सन्ति। तानि च लोटि अपि अपेक्षितानि। अतः लोटो लङ्वत् इति अतिदेशेन तानि कार्याणि लोटि प्रापितानि। तानि तस्थस्थमिपं तान्तन्तामः इति तामादयः, नित्यं ङितः इति सूत्रेण वस्-मसोः सलोपश्चेति।

यस्य धातोः अर्थः व्यापारः अर्थात् क्रिया अनद्यतने भूते वर्तते इति प्रकटनाय तस्माद् धातोः अनद्यतने लङ् इति सूत्रेण लङ् लकारः विधीयते। लङ्-लकारस्य वैशिष्ट्यं यद् लुङ्-लङ्-लृङ्-क्ष्वड्डुदात्तः इति सूत्रेण हलादेः अङ्गस्य अट् भवति, आडजादीनाम् इति सूत्रेण अजादेः अङ्गस्य आडागमश्च भवति। इतश्चेति सूत्रेण ङितो लस्य परस्मैपदम् इकारान्तं यत् तदन्तस्य लोपः भवति।

इत्थम् संक्षेपेण इदमधेयं यत् लृटि शबपवादः स्यप्रत्ययः भवति।

लोटि लकारे तु इकारस्य उकारः, तु हि अनयोः तातङ् आशिषि, लङ्वद् अतिदेशः, तेन तामादयः सलोपश्चेति कार्यद्वयम्, सिस्थाने हि, अतः हेर्लुक्, मेर्निः, उत्तमस्या आट् इति एतानि कार्याणि भवन्ति।

लङि लकारे तु अट् आट् इलोपः, इति एतानि कार्याणि सन्ति।



## पाठान्तप्रश्नाः

१. लृट् शेषे च इति सूत्रं व्याख्यात।

२. ससूत्रं रूपाणि साधयत – भविष्यति भविष्यन्ति भविष्यामि

३. लोट् च इति सूत्रं व्याख्यात।

४. आशिषि लिङ्-लोटौ इति सूत्रं व्याख्यात।

५. मेर्निः इति सूत्रं व्याख्यात।

६. नित्यं ङितःइति सूत्रं व्याख्यात।

७. लोटः मिपः स्थाने अम्-आदेशः कुतो न भवति।

८. ससूत्रं रूपाणि साधयत – भवतात्, भवतु, भवताम्, भव, भवानि, भवाम।

९. अनद्यतने लङ् इति सूत्रं व्याख्यात।



१०. इतश्च इति सूत्रं व्याख्यात।

११. ससूत्रं रूपाणि साधयत – अभवत्, अभवन्, अभवः, अभवम्।



## पाठगतप्रश्नानाम् उत्तरमाला

**उत्तराणि- १**

१. भविष्यामि।

२. न।

३. आर्धधातुकः।

४. लृटि लृङि च।

५. क्रियार्था या क्रिया ततः भिन्नार्थः एवात्र शेषः।

६. २

**उत्तराणि- २**

७. विध्यादिषु अर्थेषु धातोः लोट् स्यात्।

८. लिङ्लोटौ।

९. आशिषि लिङ्-लोटौ॥

१०. आशासनम् याच्ञा आशीः। अप्राप्तस्य इष्टस्य अर्थस्य प्राप्तुम् इच्छा आशीः।

११. लोटः इकारस्य उः स्यात्।

१२. लोटः स्थाने विहितस्य मिपः स्थाने निः आदेशः भवति।

१३. नित्यं ङितः।

१४. १

१५. २

१६. २

१७. ३

१८. ३

१९. ४

२०. १

२१. २

२२. ३



२३. ४

**उत्तराणि- ३**

२४. भूते।

२५. अनद्यतने लङ्।

२६. लुङ्लङ्लृङ्क्ष्वडुदात्तः।

२७. ङितो लस्य परस्मैपदम् इकारान्तं यत् तदन्तस्य लोपः।

२८. लुङ्लङ्लृङ्क्ष्वडुदात्तः।

२९. २

३०. १

३१. १

३२. २

३३. ४

॥इति पञ्चदशः पाठः॥



१६

# भ्वादिप्रकरणे- भूधातोः लिङि लुङि लृङि च रूपसाधनम्

## प्रस्तावना

तिङन्तस्य पूर्वपाठेषु लट् लिट् लुट् लृट् लोट् लङ् चेति लकाराः पठिताः। अस्मिन् पाठे लिङ् लुङ् लृङ् चेति त्रयो लकाराः पठनीयाः सन्ति।

एषु लिङः विधिलिङ् आशीर्लिङ् इति भागद्वयमस्ति। आज्ञा अनुरोधः याच्ञा इत्यादयो भावाः भाषया प्रकट्यन्ते। तदर्थं विधिलिङ् लकारस्य प्रयोगः बाहुल्येन भवति। लिङ् लकारः कमपि विशिष्टं कालं न द्योतयति, क्रियायाम् प्रेरणं द्योतयति। आशीर्लिङ् आशीर्वादार्थे प्रयुज्यते।

अतीतकालीनायाः क्रियायाः प्रकटनाय लुङ् सुप्रसिद्धः प्राचीनसाहित्येषु प्रचुरं प्रयुक्तः लकारः। लुङ् विकरणभेदेन बहुविधो भवति। अस्मिन् पाठे लुङः साधारणप्रक्रिया प्रदर्श्यते। अवशिष्टानि सूत्राणि कानिचन अग्रे वक्ष्यन्ते।

अल्पप्रयोगः भवति लृङ्लकारस्य। तथापि लोके प्रयोगवशात् अत्र उपस्थाप्यते। क्रियातिपतौ गम्यमानायाम् अस्य प्रयोगो भवति।

भूधातोः एषु लकारेषु रूपाणि प्रदर्श्यन्ते। अन्येषु भूधातुतुल्येषु धातुषु प्रक्रिया रूपाणि च विद्यार्थिना स्वयमूह्यानि।



## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- विध्यादीन् बुध्यात्।
- लिङो भेदान् ज्ञास्यति।
- आज्ञादिकं कर्तुं योग्यस्य लकारस्य प्रयोगे समर्थो भवेत्।
- सर्वासाम् अतीतकालीनानाम् क्रियाणां प्रकटनाय लुङः प्रयोगं विज्ञास्यति।
- क्रियातिपत्तिश्चेत् को लकारः प्रयोक्तव्यः इति जानीयात्।



## विधिलिङ् लकारः

### [१६.१] विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्॥ (३.३.१६१)

**सूत्रार्थः** - विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु एषु अर्थेषु धातोः लिङ् स्यात्।

**सूत्रव्याख्या** - सूत्रमिदम् विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयमस्ति। विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु (७/३) लिङ् (१/१)। धातोः (५/१), प्रत्ययः (१/१), परश्च (१/१) चैषामधिकारः आयाति। विधिः च निमन्त्रणं च आमन्त्रणं च अधीष्टः च संप्रश्नः च प्रार्थनं च इति विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनानि, तेषु विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु इति इतरेतरयोगद्वन्द्वसमासः। सूत्रार्थो भवति - विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु अर्थेषु विद्यमानाद् धातोः परं लिङ् प्रत्ययः भवति।

विध्यादिशब्दानाम् अर्थः अधस्तात् उपन्यस्यते -

**१) विधिः** - वयसा अधिकारेण वर्णेन वा निकृष्टस्य भृत्यादेः (कनिष्ठस्य) प्रवर्तनम् हि विधिः। वक्तुः वचनेन श्रोता कर्मणि प्रवर्तते, प्रेरितो भवति। अत्र आज्ञा भवति विधिः। उदाहरणम् - भृत्यं स्वामी वदति - भवान् वस्त्रं क्षालयेद् इति। शिष्यम् आचार्यः आह – त्वं वेदं पठेः। सेवकं स्वामी आह – जलम् आनयेः। भृत्यस्य अकरणे यद्यपि पापं न भवति, तथापि स दण्डार्हः भवति। शास्त्रवचनानि प्रायः आज्ञारूपेण सन्ति। यथा - सत्यं ब्रूयात् प्रियं ब्रूयात्। स्वर्गकामो यजेत।

**२) निमन्त्रणम्** - नियोगकरणं हि निमन्त्रणम्। त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलः इत्यादिवचनानि श्रुतिस्मृतिशास्त्रेषु सन्ति। शास्त्रवचनम् अनुसृत्य यस्य गृहे श्राद्धादिकर्म अस्ति स यथाशास्त्रं ब्राह्मणादीन् भोजनाय आह्वयति। तत्र यदि आहूतः भोजनाय न गच्छति तर्हि शास्त्रमर्यादायाः उल्लङ्घनात् शास्त्रानुसारं पापभाग् भवति, तस्य पापम् अधर्मः प्रत्यवायः भवति। अतः एतत् अवश्यकर्तव्यम् अस्ति। ईदृशं नियोगकरणं हि निमन्त्रणम्।

**३) आमन्त्रणम्** - कामचारानुज्ञा हि आमन्त्रणम्। यथेच्छम् आचारणम् कामचारः। यथा गृहम् आगतम् अतिथिम् गृहस्वामी आह – इह आसने उपविशेत् भवान्। परन्तु अतिथिः स्वेच्छानुसारम् अन्यत्र एव उपविशति। अतिथेः तथा आचरणेन तस्य न कोऽपि प्रत्यवायः, अधर्मः भवति। एवञ्च अत्र अतिथिं प्रति आज्ञा अपि नास्ति। आमन्त्रणशब्दस्य साम्प्रतिकाः आह्वानम् इति अर्थं बहुधा मन्यन्ते। परन्तु केवलम् आह्वनमेव आमन्त्रणम् इति न। यथा मित्र इदं फलं खादेः त्वम् इति वाक्ये क्रियायां प्रवर्तनम् अस्ति। अत्र खादनाय प्रेरणमस्ति। एवं कस्यामपि क्रियायाम् प्रेरणम्, यत्र आज्ञा नास्ति, अकरणे प्रत्यवायः नास्ति, कामचारः अस्ति, तथा प्रेरणम् आमन्त्रणम्।

**४) अधीष्टः** (अधीष्टम् इत्यपि क्वचित्) - सत्कारपूर्वको व्यापारो हि अधीष्टम्। सत्कृत्य प्रवर्तनमित्यर्थः। कश्चित् गृही स्वपुत्रम् गुरुकूलम् नीत्वा गुरुम् आह – पुत्रम् अध्यापयेद् भवान्। अत्र



अनेन वचनेन गुरुः अध्यापनकार्ये प्रेरितः। परन्तु अत्र गुरुं प्रति आज्ञा नास्ति, याच्ञा नास्ति, अकरणे गुरोः प्रत्यवायः नास्ति, एवञ्च सम्मानप्रदर्शनपुरःसरं गृही गुरुं प्रति वदति, गुरुं च प्रेरयति। अतः अत्र लिङर्थः भवति अधीष्टः।

**५) संप्रश्नः** - विचार्य निर्धारणं हि सम्प्रश्नः। संप्रधारणं सम्प्रश्नः। यथा कश्चित् शिष्यः गुरुं प्रति आह – किं भो व्याकरणम् अधीयीय उत शिक्षाम् इति। अत्र प्रश्नं कृत्वा शिष्यः निर्णेतुम् इच्छति।

**६) प्रार्थनम्** - याच्ञा हि प्रार्थनम्। यथा कश्चित् भिक्षुकः आह - भवानन्नं मे दद्याद् इति। भो भोजनं लभेय।

विध्यादिषु आद्येषु चतुर्षु अर्थेषु प्रवर्तनसामान्यम् अस्ति। अतः तत्र प्रवर्तनात्वम् लिङर्थः। प्रवर्तना हि प्रवृत्त्यनुकूलो व्यापारः। यथा अनुचरं प्रति जलम् आनय इति वाक्येन अनुचरस्य जलानयने प्रवृत्तिः भवति। अत एव ईदृशवाक्यप्रयोगः एवात्र व्यापारः। तत्रापि विशिष्य लोटः लिङः वा प्रयोगः। अत्र प्रवृत्तिः प्रेरितनिष्ठा, तदनुकूलव्यापारश्च प्रेरकनिष्ठः। प्रेरकः वाक्यप्रयोगकर्ता।

**उदाहरणम्** - विध्यादिषु अर्थेषु वर्तमानाद् भूधातोः विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति सूत्रेण कर्तरि लिङि ङकारेकारयोः लोपे भू ल् इति स्थिते प्रथमपुरुषैकवचनविवक्षायाम् तिप्-तस्-झि ... इति सूत्रेण तिपि अनुबन्धलोपे भू ति इति स्थिते इतश्च इत्यनेन इकारलोपे भू त् इति स्थितिः जायते।

## [१६.२] यासुट् परस्मैपदेषूदात्तो ङिच्च॥ (३.४.१०३)

**सूत्रार्थः** - लिङः परस्मैपदानां यासुडागमः स्यात् स ङित् च।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण यासुट् विधीयते। अस्मिन् सूत्रे पञ्च पदानि सन्ति। यासुट् परस्मैपदेषु उदात्तः ङित् च इति सूत्रगतपदच्छेदः। तत्र यासुट् (१/१), परस्मैपदेषु (७/१), उदात्तः (१/१), ङित् (१/१), च इत्यव्ययम्। लिङः सीयुट् इति सूत्रात् लिङः इति षष्ठ्यन्तं पदमनुवर्तते। ङ् इत् यस्य स ङित् इति बहुव्रीहिसमासः। परस्मैपदेषु इत्यस्य परस्मैपदानाम् इति षष्ठ्यन्ततया विपरिणामः भवति। सूत्रार्थो भवति - लिङः स्थाने विहितानां परस्मैपदानाम् यासुट् आगमः भवति, स च उदात्तः इति। यासुट् टित्त्वाद् आद्यन्तौ टकितौ इति परिभाषया आद्यावयवः भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण भू त् इति स्थितिः। तत्र प्रकृतसूत्रेण त् इति लिङः स्थाने विहितस्य परस्मैपदस्य यासुट् इति आगमे अनुबन्धलोपे भू यास् त् इति स्थितिः भवति। अत्र सागमकस्य यास्त् इति समुदायस्य तिङ् शित् सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञायाम् कर्तरि शप् इति शपि गुणे अवादेशे च भव यास्त् इति स्थितिः जाता। तदा -

## [१६.३] लिङः स लोपोऽनन्त्यस्य॥ (७.२.७९)

**सूत्रार्थः** - सार्वधातुकलिङः अनन्त्यस्य सस्य लोपः भवति।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण लोपः विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। लिङः स लोपः अनन्त्यस्य इति सूत्रगतपदच्छेदः। लिङः (६/१), स (६/१) इदं लुप्तषष्ठीकं पदम्, तेन सस्य इति लभ्यते। लोपः (१/१), अनन्त्यस्य (६/१)। अन्ते भवः अन्त्यः। न अन्त्यः अनन्त्यः, तस्य इति तत्पुरुषसमासः। रुदादिभ्यः सार्वधातुके इति सूत्रात् सार्वधातुके इति सप्तम्यन्तं पदम् अनुवर्तते सार्वधातुकस्य इति षष्ठ्यन्ततया च विपरिणमते। पदयोजना - लिङः अनन्त्यस्य सार्वधातुकस्य लिङः सस्य लोपः। सूत्रार्थो भवति - सार्वधातुकसंज्ञकः यो लिङादेशः तस्य अनन्त्यस्य सस्य लोपः भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तसूत्रप्रकारेण भव यास्त् इति स्थितौ यास्त् इत्यंशः लिङ् सार्वधातुकसंज्ञकः अस्ति। कथम्। यास्त् इत्यस्मिन् त् इति एव लस्य स्थाने विहितः। यासुट् तस्य आगमः अस्ति। यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति परिभाषया सागमकस्य यास्त् इति समुदायस्य अपि सार्वधातुकत्वम् भवति। यास्त् इत्यस्य सकारः अन्ते नास्ति। अतः अनन्त्यः अस्ति। अतः प्रकृतसूत्रेण सस्य लोपे प्राप्ते -

## [१६.४] अतो येयः॥ (७.२.८०)

**सूत्रार्थः** - अदन्तादङ्गात् परस्य सार्वाधातुकावयवस्य यास् इत्यस्य इय् स्यात्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अतः या इयः इति सूत्रगतपदच्छेदः। अतः (५/१), या इति लुप्तषष्ठ्यैकवचनान्तम् पदम्। इयः (१/१)। अङ्गस्य इति षष्ठ्यन्तस्य अधिकृतस्य अङ्गात् इति पञ्चम्यन्ततया विपरिणामः भवति। रुदादिभ्यः सार्वधातुके इति सूत्रात् सार्वधातुके इति सप्तम्यन्तं पदम् अनुवर्तते, तच्च सार्वधातुकस्य इति षष्ठ्यन्ततया विपरिणमते। एवम् अतः अङ्गस्य सार्वधातुकस्य या इयः इति वाक्ययोजना। अतः अङ्गात् इत्यत्र तदन्तविधिना अदन्तादङ्गात् इति लभ्यते। ततश्च सूत्रार्थः भवति - अदन्ताद् अङ्गात् परस्य सार्वधातुकावयवस्य यास् (याः) इत्यस्य इय् इति आदेशः भवति इति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण भव यास्त् इति स्थितिः। तत्र लिङः सलोपोऽनन्त्यस्य इति सूत्रेण यासः सलोपे प्राप्ते यासः स्थाने प्रकृतसूत्रेम इय् इत्यादेशे भव इय् त् इति स्थितिः जायते। तदा -

## [१६.५] लोपो व्योर्वलि॥ (६.१.६४)

**सूत्रार्थः** - व्योः वलि परे लोपः स्यात्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। लोपः व्योः वलि इति सूत्रगतपदच्छेदः। लोपः (१/१), व्योः (६/२), वलि (७/१)। व् च य् व्यौ, तयोः व्योः इति इतरेतरयोगद्वन्द्वसमासः। ततश्च सूत्रार्थः भवति - वकारयकारयोः लोपो वलि परे इति।



**उदाहरणम् -** पूर्वसूत्रोक्तप्रकारेण भव इय् त् इति स्थितिः। तत्र इय् इत्यस्य यः वलि तकारे परे अस्ति। अतः लोपो व्योर्वलि इति सूत्रेण यलोपे भव इ त् इति स्थिते अवर्णाद् अकाराद् अचि इकारे परे आद् गुणः इति सूत्रेण गुणे **भवेत्** इति रूपं सिध्यति।

**भवेताम् -** विध्यादिषु अर्थेषु वर्तमानाद् भूधातोः विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति सूत्रेण कर्तरि लिङि ङकारेकारयोः लोपे भू ल् इति स्थिते प्रथमपुरुषद्विवचनविवक्षायाम् तिप्-तस्-झि ... इति सूत्रेण तसि अनुबन्धलोपे भू तस् इति स्थिते तस्थस्थमिपां तान्तन्तामः इति सूत्रेण तसः स्थाने तामि सर्वादेशः भू ताम् इति स्थितिर्जायते। लिङः स्थाने विहितस्य तसः स्थाने विहितस्य ताम् इति परस्मैपदस्य यासुट्-आगमे अनुबन्धलोपे भू यास्ताम् इति स्थितिः भवति। अत्र सागमकस्य यास्ताम् इति समुदायस्य तिङ् शित् सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञायाम् कर्तरि शप् इति शपि गुणे अवादेशे च भव यास्ताम् इति स्थितिः जाता। यास्ताम् इत्यस्य अनन्त्यस्य सस्य लिङः सलोपोऽनन्त्यस्य इत्यनेन सस्य लोपे प्राप्ते अतो येयः इति सूत्रेण यास् इत्यस्य स्थाने इय् इत्यादेशे भव इय् ताम् इति जायते। ततश्च वलि परतः यकारस्य लोपो व्योर्वलि इति सूत्रेण लोपे भव इ ताम् इति स्थिते अवर्णाद् अकाराद् अचि इकारे परे आद् गुणः इति सूत्रेण गुणे **भवेताम्** इति रूपं सिध्यति।

## [१६.६] झेर्जुस्॥ (३.४.१०८)

**सूत्रार्थः -** लिङो झेर्जुस् स्यात्।

**सूत्रव्याख्या -** सूत्रमिदं विधिसूत्रम्। सूत्रेऽस्मिन् पदद्वयं वर्तते। झेः जुस् इति सूत्रगतपदच्छेदः। झेः (६/१), जुस् (१/१)। लिङः सीयुट् इति सूत्रात् लिङः इति षष्ठ्यन्तं पदमनुवर्तते। तदा वाक्ययोजना भवति - लिङः झेः जुस्। ततश्च सूत्रार्थः भवति - लिङः झेः स्थाने जुस् आदेशः भवतीति। अर्थात् लिङः स्थाने विहितो यो झिप्रत्ययः तस्य स्थाने जुस् इत्यादेशः स्यादिति। जुस् प्रयोगोत्तरं स्थानिवद्भावेन प्रत्ययत्वं लभेत। तदा चुटू इति सूत्रेण प्रत्ययाद्यस्य जकारस्य इत् संज्ञा, तस्य लोपः इति तस्य लोपश्च भवति। जुस् अनेकाल्त्वात् अनेकाल्शित् सर्वस्य इति परिभाषया झेः सर्वस्य स्थाने भवति। जुसः सकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां प्राप्तायां जुसः स्थानिवद्भावेन विभक्तिसंज्ञकत्वात् न विभक्तौ तुस्माः इत्यनेन इत्संज्ञानिषेधो भवति।

**उदाहरणम् -** भवेयुः।

**सूत्रार्थसमन्वयः -** विध्यादिषु अर्थेषु वर्तमानाद् भूधातोः कर्तरि लिङि भू ल् इति स्थिते प्रथमपुरुषबहुवचनविवक्षायाम् तिप्-तस्-झि ... इति सूत्रेण झौ भू झि इति स्थिते झेर्जुस् इति प्रकृतसूत्रेण जसि सर्वादिशे चुटू इति सूत्रेण प्रत्ययाद्यस्य जकारस्य इत् संज्ञायां, तस्य लोपः इति तस्य लोपे कृते भू उस् इति स्थितिर्जायते। लिङः स्थाने विहितस्य झिस्थाने विहितस्य जुसः परस्मैपदस्य यासुट्-आगमे अनुबन्धलोपे भू यास् उस् इति स्थितिः भवति। अत्र सागमकस्य यासुस् इति समुदायस्य तिङ् शित् सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञायाम् कर्तरि शप् इति शपि गुणे अवादेशे च भव यासुस् इति स्थितिः जाता। यासुस् इत्यस्य अनन्त्यस्य सस्य लिङः सलोपोऽनन्त्यस्य इत्यनेन सस्य लोपे प्राप्ते अतो येयः इति सूत्रेण यास् इत्यस्य स्थाने इय् इत्यादेशे भव इय् उस् इति स्थिते अवर्णाद् अकाराद् अचि





इकारे परे आद् गुणः इति सूत्रेण गुणे भवेयुस् इति जाते समुदायस्य पदत्वात् रुत्वे विसर्गे **भवेयुः** रूपं सिध्यति।

**भवेः** - भूधातोः लङि सिपि भू सि इति जाते इतश्च इत्यनेन इलोपे भू स् इति जायते। यासुट् परस्मैपदेषूदात्तो ङिच्च इति सूत्रेण यासुडागमे भू यास् स् इति जाते शपि गुणे अवादेशे भव यास् स् इति जायते। लिङः सलोपोऽनन्त्यस्य इत्यनेन यासः सलोपे प्राप्ते अतो येयः इत्यनेन इय् इत्यादेशे भव इय् स् इति स्थिते वलि परतः यकारस्य लोपो व्योर्वलि इति सूत्रेण लोपे भव इ स् इति स्थिते आद् गुणः इति सूत्रेण गुणे भवेस् इति जाते रुत्वे विसर्गे **भवेः** इति रूपं सिध्यति।

**भवेतम्** - भूधातोः कर्तरि लिङि भू ल् इति स्थिते तिप्-तस्-झि ... इति सूत्रेण थसि भू थस् इति स्थिते तस्थस्थमिपां तान्तन्तामः इति सूत्रेण थसः स्थाने तमि सर्वादेशः भू तम् इति स्थितिर्जायते। यासुट् परस्मैपदेषूदात्तो ङिच्च इति सूत्रेण यासुट्-आगमे अनुबन्धलोपे भू यास्तम् इति स्थितिः भवति। ततश्च कर्तरि शप् इति शपि गुणे अवादेशे च भव यास्तम् इति स्थितिः जाता। यास्तम् इत्यस्य अनन्त्यस्य सस्य लिङः सलोपोऽनन्त्यस्य इत्यनेन सस्य लोपे प्राप्ते अतो येयः इति सूत्रेण यास् इत्यस्य स्थाने इय् इत्यादेशे भव इय् तम् इति जायते। ततश्च वलि परतः यकारस्य लोपो व्योर्वलि इति सूत्रेण लोपे भव इ तम् इति स्थिते आद् गुणः इति सूत्रेण गुणे **भवेतम्** इति रूपं सिध्यति।

**भवेत** - भूधातोः लिङि थ-प्रत्यये भू थ इति स्थिते तस्थस्थमिपां तान्तन्तामः इति सूत्रेण थस्थाने तप्रत्यये सर्वादेशे भू त इति स्थिते यासुट्-आगमे शपि गुणे अवादेशे च भव यास्त इति स्थितिः जाता। लिङः सलोपोऽनन्त्यस्य इत्यनेन सस्य लोपे प्राप्ते अतो येयः इति सूत्रेण यास् इत्यस्य स्थाने इय् इत्यादेशे भव इय् त इति जायते। लोपो व्योर्वलि इति सूत्रेण यलोपे भव इ त इति स्थिते आद् गुणः इति सूत्रेण गुणे **भवेत** इति रूपं सिध्यति।

**भवेयम्** - भूधातोः लिङि मिपि भू मि इति स्थिते तस्थस्थमिपां तान्तन्तामः इति सूत्रेण मिपः स्थाने अम्-प्रत्यये सर्वादेशे भू अम् इति स्थिते यासुट्-आगमे शपि गुणे अवादेशे च भव यास् अम् इति स्थितिः जाता। लिङः सलोपोऽनन्त्यस्य इत्यनेन सस्य लोपे प्राप्ते अतो येयः इति सूत्रेण यास् इत्यस्य स्थाने इय् इत्यादेशे भव इय् अम् इति जाते आद् गुणः इति सूत्रेण गुणे **भवेयम्** इति रूपं सिध्यति।

**भवेव, भवेम** — भूधातोः द्विवचने वसि, बहुवचने मसि च नित्यं ङितः इत्यनेन अन्त्यस्य सस्य लोपे यासुट्-आगमे शपि गुणे अवादेशे च भव यास् व, भव यास् म इति स्थितिः जाता। लिङः सलोपोऽनन्त्यस्य इत्यनेन सस्य लोपे प्राप्ते अतो येयः इति सूत्रेण यास् इत्यस्य स्थाने इय् इत्यादेशे आद् गुणः इति सूत्रेण गुणे **भवेव, भवेम** इति रूपे सिध्यतः।

भूधातोः विधिलिङि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| **विधिलिङ्** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमपुरुषः** | भवेत् | भवेताम् | भवेयुः |

| | | | |
|---|---|---|---|
| **मध्यमपुरुषः** | भवेः | भवेतम् | भवेत |
| **उत्तमपुरुषः** | भवेयम् | भवेव | भवेम |

--

अधः केचिद् धातवः दीयन्ते। तेषां रूपाणि एतावता अतिक्रान्तानि कानिचन सूत्राणि प्रयुज्य कर्तुं शक्यानि। तानि रूपाणि अभ्यासाय छात्रेण साधनीयानि।

१) **पठ** व्यक्तायां वाचि - **पठेत् पठेताम् पठेयुः। पठेः पठेतम् पठेत। पठेयम् पठेव पठेम।**

२) **गद** व्यक्तायां वाचि - **गदेत् गदेताम् गदेयुः। गदेः गदेतम् गदेत। गदेयम् गदेव गदेम।**

३) **अर्च** पूजायाम् - **अर्चेत् अर्चेताम् अर्चेयुः। अर्चेः अर्चेतम् अर्चेत। अर्चेयम् अर्चेव अर्चेम।**

४) **व्रज** गतौ - **व्रजेत् व्रजेताम् व्रजेयुः। व्रजेः व्रजेतम् व्रजेत। व्रजेयम् व्रजेव व्रजेम।**

५) **कटेँ** वर्षावरणयोः - **कटेत् कटेताम् कटेयुः। कटेः कटेतम् कटेत। कटेयम् कटेव कटेम।**

६) **क्षि** क्षये - **क्षयेत् क्षयेताम् क्षयेयुः। क्षयेः क्षयेतम् क्षयेत। क्षयेयम् क्षयेव क्षयेम।**

७) **चितीँ** संज्ञाने - **चेतेत् चेतेताम् चेतेयुः। चेतेः चेतेतम् चेतेत। चेतेयम् चेतेव चेतेम।**

८) **तप** सन्तापे - **तपेत् तपेताम् तपेयुः। तपेः तपेतम् तपेत। तपेयम् तपेव तपेम।**

९) **शुच** शोके - **शोचेत् शोचेताम् शोचेयुः। शोचेः शोचेतम् शोचेत। शोचेयम् शोचेव शोचेम।**



## पाठगतप्रश्नाः-१

१. को विधिः यत्र लिङ् विधीयते।

२. किं निमन्त्रणम्।

३. किम् आमन्त्रणम्।

४. कः अधीष्टः।

५. कः संप्रश्नः।

६. लिङ् केषु अर्थेषु विधीयते।

७. अतो येयः इति सूत्रेण कस्य स्थाने क आदेशो विधीयते।

८. झेर्जुस् क्व।

९. यासुट् किम् भवति।

१) प्रत्ययः २) आगमः ३) आदेशः ४) अङ्गम्

१०. इतश्च इति सूत्रस्योदाहरणं किम्।

१) भवेः २) भवेताम् ३) भवेयुः ४) भवेयम्



११. यासुट् कुत्र भवति।

१) परस्मैपदेषु २) आत्मनेपदेषु ३) अङ्गे ४) विकरणे

## भूधातोः आशीर्लिङि रूपाणि

आशिषि लिङ्लोटौ इति सूत्रेण आशिषि अर्थे भूधातोः लिङि प्रथमपुरुषैकवचनविवक्षायां तिपि भू ति इति स्थिते इतश्च इत्यनेन इलोपे भू त् इति स्थितिर्जायते। तत्र आशिषि विहितस्य लिङः आदेशस्य तिपः लिङाशिषि इति सूत्रेण आर्धधातुकसंज्ञा भवति। (सार्वधातुके परे एव शप् भवति। अत्र तदभावे कर्तरि शप् इति न प्रवर्तते) यासुट् परस्मैपदेषूदात्तो ङिच्च इति सूत्रेण यासुडागमे भू यास्त् इति स्थितिर्जाता। (अत्र यास्त् इति न सार्वधातुकम्। अतः लिङः सलोपोऽनन्त्यस्य इति न प्रवर्तते। तेन सार्वधातुकलिङः एव सस्य लोपः क्रियते।) स्कोः संयोगाद्योरन्ते च इति सूत्रेण पदान्ते विद्यमानस्य स्त् इति संयोगस्य आद्यस्य सकारस्य लोपे भू यात् इति स्थितिर्जाता। यात् इत्यस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन इगन्ताङ्गस्य इकः ऊकारस्य गुणः प्राप्तः। तदा -

(**सूत्रम् - स्कोः संयोगाद्योरन्ते च**। - पदस्य अन्ते यः संयोगः, झलि परतो वा यः संयोगः, तदाद्योः सकारककारयोः लोपो भवति।)

### [१६.७] किदाशिषि॥ (३.४.१०४)

**सूत्रार्थः** - आशिषि लिङः यासुट् कित् भवति।

**सूत्रव्याख्या** - अतिदेशसूत्रमिदम्। अनेन सूत्रेण यासुट् कित् विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। कित् आशिषि इति सूत्रगतपदच्छेदः। कित् (१/१), आशिषि (७/१)। लिङः सीयुट् इति सूत्राद् लिङः इति षष्ठ्यन्तं पदमनुवर्तते। यासुट् परस्मैपदेषूदात्तो ङिच्च इति सूत्राद् यासुट् इति प्रथमान्तं पदमनुवर्तते। पदयोजना - आशिषि लिङः यासुट् कित्। सूत्रार्थो भवति - आशीर्वादार्थे विहितस्य लिङः यासुट् कित् स्यात्।

### [१६.८] क्क्ङिति च॥ (१.१.५)

**सूत्रार्थः** - गित्-किद्-ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः।

**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अनेन सूत्रेण गुणवृद्धिनिषेधः क्रियते। अस्मिन् सूत्रे द्वे पदे स्तः। क्क्ङिति (७/१), अत्र एषा निमित्तसप्तमी, च इत्यव्ययपदम्। इको गुणवृद्धी इति समग्रं सूत्रम् अनुवर्तते। तत्र इकः इति षष्ठ्यन्तं पदम्। गुणवृद्धी इति प्रथमाद्विवचनान्तं पदम्। न धातुलोप आर्धधातुके इति सूत्रात् न इत्यव्ययमनुवर्तते। ग् च क् च ङ् च इति क्क्ङः इति इतरेतरयोगद्वन्द्वसमासः। क्क्ङः इतः यस्य स क्क्ङित् , तस्मिन् क्क्ङिति इति बहुव्रीहिसमासः। गुणश्च वृद्धिश्चेति गुणवृद्धी इति इतरेतरयोगद्वन्द्वसमासः। पदयोजना - क्क्ङिति इकः गुणवृद्धी न च। सूत्रार्थो भवति - गित्-किद्-



ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः। इको गुणवृद्धी इति परिभाषया यत्र इकः इति षष्ठ्यन्तम् पदम् उपस्थाप्यते तत्र प्राप्ते गुणवृद्धी इग्लक्षणे इति कथ्यते। येन निमित्तेन इग्लक्षणे गुणवृद्धी प्राप्येते तन्निमित्तं यदि गित् कित् ङित् वा स्यात् तर्हि एते गुणवृद्धी निषिध्येते।

**उदाहरणम् -** भूयात्।

**सूत्रार्थसमन्वयः -** भू यात् इति स्थितौ आर्धधातुकत्वात् गुणः प्राप्तः। अत्र किदाशिषि इति सूत्रेण यासुटः कित्त्वात् यात् इति समुदायस्यापि कित्त्वं भवति। अत्र प्राप्तः गुणः इग्लक्षणः, किन्तु तस्य निमित्तम् यात् किदस्ति। अतः क्क्ङिति च इति सूत्रेण गुणनिषेधो भवति। तेन **भूयात्** इति रूपं सिध्यति।

**भूयास्ताम् -** आशिषि लिङ्लोटौ इति सूत्रेण आशिषि अर्थे भूधातोः लिङि प्रथमपुरुषद्विवचनविवक्षायां तसि तस्य ताम् इत्यादेशे तत्र आशिषि विहितस्य लिङः आदेशस्य तसः तदादेशस्य तामः च लिङाशिषि इति सूत्रेण आर्धधातुकसंज्ञा भवति। यासुट् परस्मैपदेषूदात्तो ङिच्च इति सूत्रेण यासुडागमे भू यास्ताम् इति स्थितिर्जाता। यास्ताम् इत्यस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन इगन्ताङ्गस्य इकः ऊकारस्य गुणे प्राप्ते किदाशिषि इति सूत्रेण यासुटः कित्त्वात् यास्ताम् इति समुदायस्यापि कित्त्वं भवति। अत्र प्राप्तम् इग्लक्षणं गुणं क्क्ङिति च इति सूत्रेण निषिध्य **भूयास्ताम्** इति रूपं सिध्यति।

**भूयासुः -** आशिषि अर्थे भूधातोः लिङि प्रथमपुरुषबहुवचनविवक्षायां झौ झेर्जुस् इत्यनेन जुसि लिङाशिषि इति सूत्रेण जुसः आर्धधातुकसंज्ञा भवति। तस्य यासुडागमे भू यासुस् इति स्थितिर्जाता। यासुस् इत्यस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन इगन्ताङ्गस्य इकः ऊकारस्य गुणे प्राप्ते किदाशिषि इति सूत्रेण यासुटः कित्त्वात् यास्ताम् इति समुदायस्यापि कित्त्वं भवति। अत्र प्राप्तस्य इग्लक्षणगुणस्य क्क्ङिति च इति सूत्रेण निषेधे सस्य रुत्वे विसर्गे **भूयासुः** इति रूपं सिध्यति।

**भूयाः -** भूधातोः लिङि मध्यममपुरुषैकवचनविवक्षायां सिपि इतश्च इति इलोपे यासुडागमे भू यास् स् इति स्थिते स्कोः संयोगाद्योरन्ते च इति सूत्रेण संयोगाद्यस्य पूर्वसकारस्य लोपे यासुटः कित्त्वात् इग्लक्षणगुणस्य क्क्ङिति च इति सूत्रेण निषेधे सस्य रुत्वे विसर्गे **भूयाः** इति रूपं सिध्यति।

**भूयास्तम् -** मध्यमपुरुषद्विवचने धातोः थस्, तस्य तम् आदेशः, तस्य यासुडागमः, यासुटः कित्त्वाद् इग्लक्षणगुणस्य निषेधः च इति एवं **भूयास्तम्** इति रूपं भवति।

**भूयास्त -** मध्यमपुरुषबहुवचने धातोः थ, तस्य त आदेशः, तस्य यासुडागमः, यासुटः कित्त्वाद् इग्लक्षणगुणस्य निषेधः च इति एवं **भूयास्त** इति रूपं भवति।

**भूयासम् -** उत्तमपुरुषैकवचने धातोः परं मिप्, तस्य अम् आदेशः, तस्य यासुडागमः, यासुटः कित्त्वाद् इग्लक्षणगुणस्य निषेधः च इति एवं **भूयासम्** इति रूपं भवति।

**भूयास्व -** उत्तमपुरुषद्विवचने धातोः परं वस्, नित्यं ङितः इति सलोपः, वसः यासुडागमः, यासुटः कित्त्वाद् इग्लक्षणगुणस्य निषेधः च इति एवं **भूयास्व** इति रूपं भवति।

**भूयास्म -** उत्तमपुरुषबहुवचने धातोः परं मस्, नित्यं ङितः इति सलोपः, मसः यासुडागमः, यासुटः कित्त्वाद् इग्लक्षणगुणस्य निषेधः च इति एवं **भूयास्म** इति रूपं भवति।



भूधातोः आशीर्लिङि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| आशीर्लिङ् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| **प्रथमपुरुषः** | भूयात् | भूयास्ताम् | भूयासुः |
| **मध्यमपुरुषः** | भूयाः | भूयास्तम् | भूयास्त |
| **उत्तमपुरुषः** | भूयासम् | भूयास्व | भूयास्म |



## पाठगतप्रश्नाः-२

१२. यासुट् कित् केन सूत्रेण।

१३. यासुट् कित् क्व।

१४. अतो येयः इति सूत्रम् आशीर्लिङि कुतो न प्रवर्तते।

१५. आशिषि लिङादेशः तिङ् आर्धधातुकसंज्ञः केन सूत्रेण विधीयते।

१६. लिङाशिषि इति सूत्रेण किं क्रियते।

१७. इतश्च इति सूत्रस्योदाहरणं किम्।

१) भूयात् २) भूयास्ताम् ३) भूयासुः ४) भूयास्त

१८. भूयात् इत्यत्र आर्धधातुकनिबन्धनगुणस्य निषेधस्य कारणं किम्।

१) यासुटः कित्त्वम् २) यासुटः ङित्त्वम् ३) तिपः पित्त्वम् ४) धातोः सेट्त्वम्

१९. आशिषि भूधातोः एषु किं रूपं नास्ति।

१) भव २) भवतात् ३) भूयासुः ४) भूयास्वः

२०. आशिषि भूधातोः एषु किं रूपमस्ति।

१) भूयासुः २) भुयासुः ३) भूयासूः ४) भुयासूः



## भूधातोः लुङ्-लकारे रूपाणि

### [१६.९] लुङ्॥ (३.२.११०)

**सूत्रार्थः** - भूतार्थे धातोः लुङ् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण लुङ् विधीयते। अस्मिन् सूत्रे लुङ् इति एकमेव प्रथमैकवचनान्तं पदम्। भूते (७/१), धातोः (५/१), प्रत्ययः (१/१), परश्च (१/१) चैषामधिकारः आयाति। सूत्रार्थो भवति - भूते धातोः परः लुङ् प्रत्ययः भवति। अर्थात् धात्वर्थः व्यापारः भूतकालीनः इति विवक्षा चेत् तद्धातोः परं लुङ् लकारः प्रयोक्तव्यः इति। अनद्यतनपरोक्षभूते लिट् अनद्यतनभूते लङ् भूते च लुङ् इति व्यवस्था। लङ् परोक्षे प्रत्यक्षे च भवति। लुङ् भूतसामान्ये अर्थात् अद्यतने अनद्यतने च परोक्षे प्रत्यक्षे च भूते भवति।

**उदाहरणम्** - अभूत्।

**सूत्रार्थसमन्वयः** - भूधात्वर्थः व्यापारः भूतकालीनः इति विवक्षिते लुङ् इति सूत्रेण कर्तरि लुङि ङकार-उकारयोः इत्संज्ञायां तयोर्लोपे च भू ल् इति स्थिते प्रथमपुरुषैकवचनविवक्षायाम् तिपि अनुबन्धलोपे भू ति इति जाते इतश्च इत्यनेन तिपः इलोपे भू त् इति स्थिते लुङादेशस्य तिङः तिङ् शित् सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञायां कर्तरि शप् इति सूत्रेण शप् प्राप्तः। तदा -

### [१६.१०] च्लि लुङि॥ (३.१.४३)

**सूत्रार्थः** - लुङि परतः धातोः परः च्लि प्रत्ययः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण च्लि विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। च्लि (१/१), लिङि (७/१)। धातोः (५/१), प्रत्ययः (१/१), परश्च (१/१) चैषामधिकारः आयाति। सूत्रार्थो भवति - लुङि परतः धातोः परः च्लि प्रत्ययः भवति। च्लिप्रत्ययस्य इकारः उच्चारणार्थः। चकारः चुटू इत्यनेन इत्संज्ञकः। च्लिप्रत्ययः धातोः प्राप्तानां शबादीनाम् अपवादः।

**उदाहरणं सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तरूपेण भू त् स्थिते शपि प्राप्ते च्लि लुङि इति सूत्रेण च्लिप्रत्यये भू च्लि त् इति स्थितिः जायते।

### [१६.११] च्लेः सिच्॥ (३.१.४४)

**सूत्रार्थः** - च्लिस्थाने सिच् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण सिच् विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। च्लेः (६/१), सिच् (१/१)। च्लि लुङि इत्यतः लुङि इति सप्तम्यन्तं पदमनुवर्तते। धातोः (५/१), प्रत्ययः (१/१), परश्च (१/१) चैषामधिकारः आयाति। सूत्रार्थो भवति - लुङि धातोः परः च्लेः स्थाने सिच् प्रत्ययः भवति। सिचः चकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा भवति, इकारस्य च उपदेशेऽजनुनासिक इत्

इति सूत्रेण इत्संज्ञा भवति। तयोः लोपे सकारः एव अवशिष्यते। (च्लेः स्थाने यथा सिच् तथा अङ् चङ् क्स इत्यादयोऽपि भवन्ति।)

**उदाहरणे सूत्रार्थसमन्वयः** - भू च्लि त् इत्यत्र च्लेः स्थाने प्रकृतसूत्रेण सिचि भू स् त् इति जाते लुङ्-लङ्-लृङ्क्ष्वडुदात्तः इति सूत्रेण अङ्गस्य अडागमे अभू स् त् इति स्थितिर्जाता। तदा -

## [१६.१२] गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु॥ (२.४.७७)

**सूत्रार्थः** - गाति-स्था-घु-पा-भूभ्यः सिचः लुक् स्यात् परस्मैपदेषु परेषु।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण लुक् विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। गाति-स्था-घु-पा-भूभ्यः (५/३), सिचः (६/१), परस्मैपदेषु (७/३)। ण्यक्षत्रियार्ष-ञितो यूनि लुगणिञोः इति सूत्राद् लुक् इति प्रथमान्तं पदमनुवर्तते। गातिः च स्थाः च घुः च पाः च भूः च गाति-स्था-घु-पा-भुवः इति इतरेतरयोगद्वन्द्वसमासः। तेभ्यः गाति-स्था-घु-पा-भूभ्यः। सूत्रार्थो भवति - गा-स्था-घु-पा-भू एभ्यः धातुभ्यः परस्य सिचः लुक् स्यात् परस्मैपदेषु प्रत्ययेषु परेषु। इणो गा लुङि इति सूत्रेण इण्-धातोः गा-आदेशः भवति। अयं गा एव अत्र अभिमतः। पा पाने पा रक्षणे चेति द्वौ धातू स्तः। तत्र पानार्थकः पाधातुः अत्र गृह्यते। दाधाघ्वदाप् इति सूत्रेण दारूपाणां धारूपाणां च धातूनां घुसंज्ञा विधीयते। तेन डुदाञ् दाने, डुधाञ् धारणपोषणयोः इत्यनयोः ग्रहणं वेदितव्यम्।

**विशेषता** - प्रत्ययस्य लुक्-श्लु-लुपः इत्यनेन प्रत्ययस्य अदर्शनस्य लुक् इति संज्ञा भवति। अत्र सिच् प्रत्ययः अस्ति। अतः सिच् इति समग्रस्य प्रत्ययस्य लुक् भवति। तस्मात् अत्र अलोऽन्त्यस्य इति परिभाषा न प्रवर्तते।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण अभू स् त् इति स्थिते गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु इति प्रकृतसूत्रेण सिचः लुकि अभूत् इति स्थिते तिपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन इगन्ताङ्गस्य भुवः ऊकारस्य स्थाने गुणः प्राप्तः। तदा -

## [१६.१३] भूसुवोस्तिङि॥ (७.३.८८)

**सूत्रार्थः** - भू सू एतयोः सार्वधातुके तिङि परे गुणो न।

**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अनेन सूत्रेण गुणो निषिध्यते। अस्मिन् सूत्रे द्वे पदे स्तः। भूसुवोः तिङि इति सूत्रगतपदच्छेदः। भूसुवोः (६/२), तिङि (७/१)। नाभ्यस्तस्याचि पिति सार्वधातुके इति सूत्राद् न इत्यव्ययमनुवर्तते। सार्वधातुके इति च सप्तम्यन्तं पदमनुवर्तते। मिदेर्गुणः इति सूत्राद् गुणः इति प्रथमान्तं पदमनुवर्तते। भूः च सूः च भूसुवौ, तयोः भूसुवोः इति इतरेतरयोगद्वन्द्वसमासः। भू सत्तायाम् , षूञ् प्राणिगर्भविमोचने इति एतौ धातू अभिमतौ। सूत्रार्थो भवति - भू सू एतयोः सार्वधातुके तिङि परे गुणो न।

अत्र गुणः इति पदमुच्चार्य गुणः न विधीयते, अपि तु निषिध्यते। अतः इको गुणवृद्धी इति परिभाषा न प्रवर्तते, लिङ्गाभावात्।

**उदाहरणम्** - अभूत्।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण अभू त् इति स्थितौ गुणे प्राप्ते प्रकृतसूत्रेण गुणनिषेधे **अभूत्** इति रूपं सिध्यति।

**अभूताम्** - भूधातोः लुङ् इति सूत्रेण लुङि प्रथमपुरुषद्विवचनविवक्षायाम् तस्-प्रत्यये तस्थस्थमिपां तान्तन्तामः इति सूत्रेण तसः स्थाने तामि सर्वादिशे भू ताम् इति स्थितिर्जायते। लुङि परतः च्लि लुङि इति सूत्रेण च्लि-प्रत्यये च्लेः सिच् इत्यनेन सिचि अनुबन्धलोपे भू स् ताम् इति स्थिते गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु इति सूत्रेण सिचः लुकि भू ताम् इति जाते तामः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणः प्राप्तः। तदा -

## [१६.१४] सार्वधातुकमपित्॥ (१.२.४)

**सूत्रार्थः** - अपित् सार्वधातुकं ङिद्वद् भवति।

**सूत्रव्याख्या** - अतिदेशसूत्रमिदम्। अनेन सूत्रेण ङिद्वत्त्वम् अतिदिश्यते। अस्मिन् सूत्रे द्वे पदे स्तः। सार्वधातुकम् (१/१), अपित् (१/१)। गाङ्कुटादिभ्योऽञ्णिन्ङित् इति सूत्रात् ङित् इति प्रथमान्तं पदमनुवर्तते। प् इत् यस्य स पित् , न पित् अपित् इति बहुव्रीहिगर्भ-नञ्-तत्पुरुषः समासः। ङ् इत् यस्य स ङित्। सूत्रार्थो भवति - अपित् सार्वधातकुम् ङिद्वत् भवति। अर्थात् पिद्भिन्नं सार्वधातुकम् ङिद्वद् भवति। यस्य पकारः इत् नास्ति तस्य सार्वधातुकस्य ङकारः इत् अस्ति इव मन्तव्यम्।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण अभू ताम् इति स्थितिः। तत्र इग्लक्षणे गुणे प्राप्ते ताम् इति तसः स्थाने आदेशः। तस् पित् नास्ति, अतः अपित्। तदादेशः ताम् स्वतः अपि अपित् अस्ति, एवञ्च सार्वधातुकसंज्ञकः अपि अस्ति। अतः प्रकृतसूत्रेण ताम् ङिद्वत् भवति। ङिद्वत्त्वात् क्क्ङिति च इति सूत्रेण इग्लक्षणगुणस्य निषेधे लुङ्-लङ्-लृङ्क्ष्वड्डुदात्तः इति सूत्रेण अङ्गस्य अडागमे अनुबन्धलोपे आद्यावयवे **अभूताम्** इति रूपं निष्पद्यते।

**अभूवन्** - भूते भूधातोः लुङ् इति सूत्रेण लुङि प्रथमबहुवचनविवक्षायाम् लुङः झि-आदेशे शपं प्रबाध्य च्लि लुङि इति च्लि-प्रत्यये च्लेः सिच् इति सिचि भू स् झि इति जायते। तदा गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु इति सूत्रेण सिचः लुकि भू झि इति स्थिते लुङ्-लङ्-लृङ्क्ष्वड्डुदात्तः इति सूत्रेण अङ्गस्य अडागमे अनुबन्धलोपे आद्यावयवे अभू झि इति जायते। तदा झोऽन्तः इत्यनेन अन्तादेशे अभू अन्ति इति जाते इतश्च इत्यनेन इलोपे अभू अन्त् इति स्थिते संयोगान्तस्य लोपः इत्यनेन संयोगान्तस्य तकारस्य लोपे अभू अन् इति स्थिते भुवो वग् लुङ्लिटोः इत्यनेन भुवः वुगागमे कित्त्वाद् अन्त्यावयवे अभूव् अन् इति जाते वर्णमेलनेन **अभूवन्** इति रूपं सिध्यति।

**अभूः** - भूते भूधातोः लुङ् इति सूत्रेण लुङि मध्यमैकवचनविवक्षायाम् लुङः सिपि आदेशे शपं प्रबाध्य च्लि लुङि इति च्लि-प्रत्यये च्लेः सिच् इति सिचि भू स् सि इति जायते। तदा गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु इति सूत्रेण सिचः लुकि भू सि इति स्थिते लुङ्-लङ्-लृङ्क्ष्वड्डुदात्तः इति सूत्रेण



अङ्गस्य अडागमे अनुबन्धलोपे आद्यावयवे अभू सि इति जायते। ततश्च इतश्च इत्यनेन सिपः इलोपे अभू स् इति जाते सिपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य भुवः ऊकारस्य गुणे प्राप्ते भूसुवोस्तिङि इति सूत्रेण गुणस्य निषेधे सस्य रुत्वे विसर्गे च कृते **अभूः** इति रूपं सिध्यति।

**अभूतम्** - मध्यमपुरुषद्विवचनविवक्षायाम् धातोः थस्, तस्य तस्थस्थमिपां तान्तन्तामः इति तम् आदेशः, च्लि लुङि इति च्लि-प्रत्ययः, च्लेः सिच् इति सिच् , इति एवं भू स् तम् इति जायते। तदा गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु इति सूत्रेण सिचः लुकि भू तम् इति जाते इग्लक्षणे गुणे प्राप्ते तमः अपित्त्वात् सार्वधातुकमपित् इति ङिद्वत् भवति। ङिद्वत्त्वात् क्ङिति च इति सूत्रेण इग्लक्षणगुणस्य निषेधे अडागमे **अभूतम्** इति रूपं निष्पद्यते।

**अभूत** - मध्यमपुरुषबहुवचनविवक्षायाम् धातोः थ, तस्य त-आदेशः, च्लि-प्रत्ययः, तस्य सिच् , इति एवं भू स् त इति जायते। तदा सिचो लुकि ङिद्वत्त्वात् इग्लक्षणगुणस्य निषेधे अडागमे **अभूत** इति रूपं निष्पद्यते।

**अभूवम्** - उत्तमपुरुषैकवचनविवक्षायाम् धातोः मिप्, तस्य अम् आदेशः, च्लि-प्रत्ययः, तस्य सिच् , इति एवं भू स् अम् इति जायते। तदा सिचो लुकि भुवो वुग् लुङ्लिटोः इति वुगागमे अडागमे च **अभूवम्** इति रूपं निष्पद्यते।

**अभूव** - उत्तमपुरुषद्विवचनविवक्षायाम् धातोः वस्, नित्यं ङितः इति सलोपः, च्लि-प्रत्ययः, तस्य सिच् , इति एवं भू स् व इति जायते। तदा सिचो लुकि ङिद्वत्त्वात् इग्लक्षणगुणस्य निषेधे अडागमे **अभूव** इति रूपं निष्पद्यते।

**अभूम** - उत्तमपुरुषबहुवचनविवक्षायाम् धातोः मस्, नित्यं ङितः इति सलोपः, च्लि-प्रत्ययः, तस्य सिच् , इति एवं भू स् म इति जायते। तदा सिचो लुकि ङिद्वत्त्वात् इग्लक्षणगुणस्य निषेधे अडागमे **अभूम** इति रूपं निष्पद्यते।

भूधातोः लुङि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| लुङ् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| **प्रथमपुरुषः** | अभूत् | अभूताम् | अभूवन् |
| **मध्यमपुरुषः** | अभूः | अभूतम् | अभूत |
| **उत्तमपुरुषः** | अभूवम् | अभूव | अभूम |

## [१६.१५] न माङ्योगे॥ (६.४.७४)

**सूत्रार्थः** - माङः क्रियया योगे अडाटौ न स्तः।



**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अनेन सूत्रेण अट् आट् इति अनयोः प्रयोगः निषिध्यते। अस्मिन् सूत्रे द्वे पदे स्तः। लुङ्-लङ्-लृङ्क्ष्वडुदात्तः इति सूत्रात् अट् इति प्रथमान्तं पदमनुवर्तते। आडजादीनाम् इति सूत्रात् आट् इति प्रथमान्तं पदमनुवर्तते। अङ्गस्य (६/१) इत्यधिकृतम्। माङो योगः माङ्योगः। तस्मिन् माङ्योगे। माङर्थनिषेधस्य क्रियायाम् अन्वयः अत्र माङ्योगशब्दस्य तात्पर्यार्थः। सूत्रार्थो भवति - माङ्योगे अङ्गस्य अट् आट् एतौ न स्तः। अर्थात् माङः प्रयोगे माङर्थनिषेधस्य क्रियायाम् अन्वयः चेत् तत्क्रियावाचकस्य धातोः अट् आट् च एतौ न स्तः।

**उदाहरणम्** - मा भवान् प्रमादं कार्षीत्। (विवरणम् अग्रिमसूत्रद्वये द्रष्टव्यम्।)

## [१६.१६] माङि लुङ्॥ (३.३.१७५)

**सूत्रार्थः** - माङि उपपदे धातोः लुङ् सर्वलकारापवादः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण लुङ् विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। माङि (७/१), लुङ् (१/१)। अत्र धातोः (५/१), प्रत्ययः (१/१), परश्च (१/१) चैषामधिकारः आयाति। सूत्रार्थो भवति - माङि उपपदे सति धातोः परः लुङ् प्रत्ययः भवति। स च सर्वलकारापवादः। अर्थात् माङ् इति निषेधार्थकम् अव्ययम्। यस्याः क्रियायाः निषेधः कर्तव्यः तद्वाचकाधातोः परं लुङ् विधेयः। अयं लुङ् अन्येषां सर्वेषाम् अपि लकाराणां ये अर्थाः सन्ति तेषु अर्थेषु भवति, न केवलं भूते एव।

**उदाहरणम्** - मा भवान् प्रमादं कार्षीत्।

**सूत्रार्थसमन्वयः** - कृधातोः लुङि तिपि अकार्षीत् इति रूपं भवति। माङः ङकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा ततश्च लोपो भवति। न माङ्-योगे इति सूत्रेण अट्-आटौ न भवतः। अतः कार्षीत् इति रूपे अट् न दृश्यते। अत्र प्रमादकरणस्य निषेधः वर्तते। विवक्षानुसारं स सर्वेषु कालेषु प्रकारेषु च वक्तुं शक्यः।

## [१६.१७] स्मोत्तरे लङ् च॥ (३.३.१७६)

**सूत्रार्थः** - स्मोत्तरे माङि लङ् लुङ् च स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण लङ् लुङ् च विधीयेते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। स्मोत्तरे (७/१), लङ् (१/१), च इत्यव्ययम्। माङि लुङ् इत्यतः लुङ् इति प्रथमान्तं च इति पदप्रभावात् अनुकृष्यते। अत्र धातोः (५/१), प्रत्ययः (१/१), परश्च (१/१) चैषामधिकारः आयाति। स्मः उत्तरः परः यस्मात् स स्मोत्तरः इति बहुव्रीहिसमासः। सूत्रार्थो भवति - निषेधार्थकः माङ् इत्यस्मात् परं स्म इत्यस्य प्रयोगश्चेत् यस्याः क्रियायाः निषेधः कर्तव्यः तद्वाचकाधातोः परं लङ् लुङ् च विधेयौ।

**उदाहरणम्** - मा स्म भवान् भूत्। मा स्म भवत्।

**सूत्रार्थसमन्वयः** - मा स्म भवान् भूत् इति उदाहरणे भूधातोः लुङि रूपम् अभूत् इति। माङः ङकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा ततश्च लोपो भवति। न माङ्-योगे इति सूत्रेण अट्-आटौ न भवतः। अतः भूत् इति रूपे अट् न दृश्यते।



मा स्म भवत् इति उदाहरणे भूधातोः लङि रूपम् अभवत् इति। न माङ्-योगे इति सूत्रेण अट्-आटौ न भवतः। अतः भवत् इति रूपे अट् न दृश्यते।

## भूधातोः लृङ्-लकारे रूपाणि

### [१६.१८] लिङ्-निमित्ते लृङ् क्रियातिपत्तौ॥ (३.३.१३९)

**सूत्रार्थः** - हेतु-हेतुमद्भावादि लिङ्निमित्तम्, तत्र वर्तमानात् धातोः परः लृङ् प्रत्ययः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण लृङ् विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। लिङ्निमित्ते (७/१), लृङ् (१/१), क्रियातिपत्तौ (७/१)। भविष्यति मर्यादा-वचनेऽवरस्मिन् इति सूत्रात् भविष्यति (७/१) इति पदमनुवर्तते। अत्र धातोः (५/१), प्रत्ययः (१/१), परश्च (१/१) चैषामधिकारः आयाति। लिङो निमित्तं लिङ्निमित्तम्। तस्मिन् लिङ्निमित्ते इति षष्ठीतत्पुरुषसमासः। क्रियायाः अतिपत्तिः अनिष्पत्तिः असिद्धिः अनभिनिवृत्तिः क्रियातिपत्तिः। तस्याम् क्रियातिपत्तौ इति षष्ठीतत्पुरुषसमासः। सूत्रार्थो भवति - हेतु-हेतुमद्भावादि लिङ्निमित्तम्, तत्र वर्तमानात् धातोः परः लृङ् प्रत्ययः स्यात्।

हेतु-हेतुमतोर्लिङ् इत्यादिसूत्रैः लिङ्-प्रयोगस्य कानिचन निमित्तानि अष्टाध्याय्याम् उक्तानि। हेतुः कारणम्। हेतुमत् कार्यं फलम्। इत्थम् हेतुहेतुमद् कारण-फलयोः युग्मं भवति। कारणफलयुग्मेन निर्दिष्टायाः क्रियायाः वैगुण्याद् अतिपत्तिः गम्यते चेत् तत्क्रियावाचकाद् धातोः लृङ् विधीयते।

**उदाहरणम्** - कृष्णम् अनंस्यत् चेत् सुखम् अयास्यत्। सुवृष्टिः चेद् अभविष्यत् तदा सुभिक्ष्यम् अभविष्यत्। दक्षिणेन चेदायास्यन् न शकटं पर्यभविष्यत्। अभोक्ष्यत भवान् घृतेन यदि मत्समीपम् आगमिष्यत्। गुरुं चेत् प्रणमेत् शास्त्रान्तं गच्छेत्।

**सूत्रार्थसमन्वयः** - कृष्णम् अनंस्यत् चेत् सुखम् अयास्यत् इत्युदाहरणे कृष्णनमनं हेतुः, सुखलाभः कार्यं फलम्। अत्र हेतुहेतुमद्भावः कारणफलयुग्मम् अस्ति। परन्तु केनचित् प्रमाणेन ज्ञायते यत् नायं नमनं करिष्यति नापि अस्य सुखं यास्यति। अतः कारणफलयुग्मेन निर्दिष्टायाः क्रियायाः असिद्धिः गम्यते। अतः नम्-धातोः याधातोः लृङ् भवति। एवञ्च प्रक्रियया अनंस्यत् अयास्यत् इति रूपाणि भवन्ति, तत्प्रयोगेण वाक्यं च सिध्यति।

कृष्णं नमेत् चेत् सुखं यायात् इत्यपि विधिलिङि प्रयोगः भवति। परन्तु अत्र क्रियातिपत्तिः न अभीष्टा।

भूधातोः लृङि तिपि स्यतासी लृलुटोः इति स्यप्रत्यये तस्य आर्धधातुकत्वात् इडागमे भू इस्य ति इति स्थिते इतश्च इति तिपः इलोपे अङ्गस्य लुङ्-लङ्-लृङ्क्ष्वडुदात्तः इति सूत्रेण अडामगे अभू इस्यत् इति स्थिते स्यस्य सस्य आदेशप्रत्यययोः इत्यनेन मूर्धन्यादेशे अभू इष्यत् इति स्थिते भुवः ऊकारस्य गुणे अवादेशे अभविष्यत् इति रूपं भवति।

अन्येषु उदाहरणेषु एवमेव ऊह्यम्।



भूधातोः लृङि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| लृङ् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| **प्रथमपुरुषः** | अभविष्यत् | अभविष्यताम् | अभविष्यन् |
| **मध्यमपुरुषः** | अभविष्यः | अभविष्यतम् | अभविष्यत |
| **उत्तमपुरुषः** | अभविष्यम् | अभविष्याव | अभविष्याम |

अधः केचिद् धातवः दीयन्ते। तेषां रूपाणि एतावता अतिक्रान्तानि कानिचन सूत्राणि प्रयुज्य कर्तुं शक्यानि। तानि रूपाणि अभ्यासाय छात्रेण साधनीयानि।

१) **पठ** व्यक्तायां वाचि - **अपठिष्यत् अपठिष्यताम् अपठिष्यन्। अपठिष्यः अपठिष्यतम् अपठिष्यत। अपठिष्यम् अपठिष्याव अपठिष्याम।**

२) **गद** व्यक्तायां वाचि - **अगदिष्यत् अगदिष्यताम् अगदिष्यन्। अगदिष्यः अगदिष्यतम् अगदिष्यत। अगदिष्यम् अगदिष्याव अगदिष्याम।**

३) **अर्च** पूजायाम् - **आर्चिष्यत् आर्चिष्यताम् आर्चिष्यन्। आर्चिष्यः आर्चिष्यतम् आर्चिष्यत। आर्चिष्यम् आर्चिष्याव आर्चिष्याम।**

४) **व्रज** गतौ - **अव्रजिष्यत् अव्रजिष्यताम् अव्रजिष्यन्। अव्रजिष्यः अव्रजिष्यतम् अव्रजिष्यत। अव्रजिष्यम् अव्रजिष्याव अव्रजिष्याम।**

५) **कटैँ** वर्षावरणयोः - **अकटिष्यत् अकटिष्यताम् अकटिष्यन्। अकटिष्यः अकटिष्यतम् अकटिष्यत। अकटिष्यम् अकटिष्याव अकटिष्याम।**

६) **क्षि** क्षये - **अक्षयिष्यत् अक्षयिष्यताम् अक्षयिष्यन्। अक्षयिष्यः अक्षयिष्यतम् अक्षयिष्यत। अक्षयिष्यम् अक्षयिष्याव अक्षयिष्याम।**

७) **चितीँ** संज्ञाने - **अचेतिष्यत् अचेतिष्यताम् अचेतिष्यन्। अचेतिष्यः अचेतिष्यतम् अचेतिष्यत। अचेतिष्यम् अचेतिष्याव अचेतिष्याम।**

८) **शुच** शोके - **अशोचिष्यत् अशोचिष्यताम् अशोचिष्यन्। अशोचिष्यः अशोचिष्यतम् अशोचिष्यत। अशोचिष्यम् अशोचिष्याव अशोचिष्याम।**



## पाठगतप्रश्नाः-३

२१. लुङ् इति सूत्रस्यार्थं लिखत।

२२. लुङि शबपवादः कः।

२३. च्लेः सिच् कस्मिन् लकारे।



२४. सिचि के इत्संज्ञकाः भवन्ति।

२५. अभूत् इति रूपे सिच् लुक् केन सूत्रेण।

२६. गातिस्था ... इति सूत्रेण किं क्रियते।

२७. अभूत् इतीह सार्वधातुकनिबन्धनगुणः कुतो न।

२८. स्मोत्तरे माङि के लकाराः भवन्ति।

२९. न माङ्योगे, किं न।

३०. मा भवान् भूत् इतीह अङ्गस्य अट् कुतो न।

३१. क्रियातिपत्तिः का।

३२. लृङि किं विकरणम्।

१) शप् २) तास् ३) च्लि ४) स्य

३३. लृङि अङ्गस्य किन्न भवति।

१) अट् २) आट् ३) गुणः ४) अभ्यासः

३४. एषु किं रूपं भूधातोः लुङि नास्ति।

१) अभूताम् २) अभुवन् ३) अभूवम् ४) अभूत

३५. च्लेः स्थाने कः भवति।

१) स्य २) तास् ३) यासुट् ४) सिच्

---



## पाठसारः

अस्मिन् पाठे लिङ् लुङ् लृङ् चेति त्रयो लकाराः उपन्यस्ताः। तेषु विधिलिङ् आशीर्लिङ् इति भेदेन लिङ् द्वेधा।

विध्यादिषु अर्थेषु विधीयमानो लिङ् विधिलिङ् इति कथ्यते। प्रेरणा प्रवर्तना वा मुख्यार्थो विधिलिङः। विधिलिङि तिङ् शप् च विधीयेते। यासुट् परस्मैपदेषूदात्तो ङिच्च इति सूत्रेण परस्मैपदस्य यासुट् विधीयते इति एको विशेषः। यासुटः सस्य लोपः क्वचिद् भवति क्वचिच्च अतो येयः इति सूत्रेण यासः स्थाने इय् इति विधीयते। झेर्जुस् इत्यपि अपरं वैशिष्ट्यं विधिलिङः। ङितो लस्य इतश्च, नित्यं ङितः, तस्थस्थमिपां तान्तन्तामः इत्यादीनि अपि भवन्ति।

आशीर्लिङ् लकारः आशीर्वादार्थे प्रयुज्यते। आशीर्लिङि यासुटः कित्त्वं किदाशिषि इति सूत्रेण विधीयते। तेन क्क्ङिति च इति सूत्रेण इग्लक्षणगुणवृद्धिनिषेधो भवति।



लुङ् लकारः साहित्यिकानां प्रियः। अस्य लकारस्य प्रयोगं यः करोति तस्य संस्कृतं प्रौढं भवति। अस्य लकारस्य प्रयोगः भूतकालीनां सर्वासाम् अपि क्रियाणां प्रकटनाय व्यवह्रियते। लुङः स्थाने तिङि, शबाद्यपवादत्वेन च्लि, तस्य सिच् इति वैशिष्ट्यानि अत्र पाठे दृष्टानि। इतोऽपि वृद्धिप्रकरणं महत् गुरुत्वपूर्णं चास्ति। तत् अग्रिमेषु पाठेषु प्रदर्शयिष्यते। माङ् प्रयुक्तश्चेत् लुङ् सर्वलकारापवादः भवति। स्मोत्तरः माङ् प्रयुक्तश्चेत् धातोः लुङ् लङ् च भवतः। माङि प्रयुक्ते अङ्गस्य अडाटौ न स्तः।

क्रियायाः अनिष्पतौ गम्यमानायां लिङ्निमित्ते लृङ् क्रियातिपत्तौ इति सूत्रेण लृङ् विधीयते। स्यतासी लृलुटोः इति सूत्रेण लृङि परतः धातोः स्यप्रत्ययः शबाद्यपवादत्वेन प्रयुज्यते। लृङि परतः अङ्गस्य अडाटौ अपि स्तः।



## पाठान्तप्रश्नाः

१. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति सूत्रं व्याख्यात।

२. ससूत्रं रूपाणि साधयत – भवेत्, भवेताम्, भवेयुः, भवेयम्, भवेम।

३. क्क्ङिति च इति सूत्रं व्याख्यात।

४. ससूत्रं रूपाणि साधयत – भूयात्, भूयास्ताम्, भूयासुः, भूयासम्, भूयास्म।

५. लुङ् इति सूत्रं व्याख्यात।

६. सार्वधातुकमपित् इति सूत्रं व्याख्यात।

७. ससूत्रं रूपाणि साधयत – अभूत्, अभूवन्, अभूत, अभूवम्, अभूम ,अभविष्यत्, अभविष्यः, अभविष्यम्।

८. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत। क-स्तम्भे सूत्राणि सन्ति। ख-स्तम्भे कस्मिन्नर्थे तेषां प्रयोगः इत्यस्ति। कस्य सूत्रस्य कस्मिन्नर्थे प्रयोगः भवतीति मेलनीयम्।

| क-स्तम्भः | ख-स्तम्भः |
|---|---|
| १) परोक्षे लिट् | क) क्रियातिपत्तौ |
| २) अनद्यतने लुट् | ख) भविष्यति |
| ३) लृट् शेषे च | ग) अनद्यतनभविष्यति |
| ४) लोट् च | घ) भूतसामान्ये |
| ५) अनद्यतने लङ् | ङ) अनद्यतनपरोक्षभूते |
| ६) लुङ् | च) अनद्यतनभूते |



| | |
|---|---|
| ७) लृङ् | छ) विध्यादौ |

सूत्रार्थयोः - १)-ङ), २)-ग), ३)-ख), ४)-छ), ५)-च), ६)-घ), ७)-क)

९. स्तम्भयोः स्थितान् युक्त्या मेलयत। क-स्तम्भे लकारः अस्ति, ख-स्तम्भे तस्य उदाहरणम् अस्ति। कस्य लकारस्य किमुदाहरणमिति मेलनीयम्।

| | क-स्तम्भः | ख-स्तम्भः |
|---|---|---|
| १) | लट् | क) अभवत |
| २) | लिट् | ख) भवेत |
| ३) | लुट् | ग) भूयासम् |
| ४) | लृट् | घ) अभूवन् |
| ५) | लोट् | ङ) अभविष्यत |
| ६) | लङ् | च) भवतः |
| ७) | विधिलिङ् | छ) बभूविथ |
| ८) | आशीर्लिङ् | ज) भवितास्मि |
| ९) | लुङ् | झ) भविष्यथ |
| १०) | लृङ् | ञ) भवत |

लकारोदाहरणयोः - १)-च), २)-छ), ३)-ज), ४)-झ), ५)-ञ), ६)-क), ७)-ख), ८)-ग), ९)-घ), १०)-ङ)

१०. स्तम्भयोः स्थितान् युक्त्या मेलयत। क-स्तम्भे लकारः अस्ति, ख-स्तम्भे तस्य विकरणादि वैशिष्ट्यमस्ति। कस्य लकारस्य किं वैशिष्ट्यमिति मेलनीयम्।

| | क-स्तम्भः | | ख-स्तम्भः |
|---|---|---|---|
| १) | लिङ् | क) | शप् |
| २) | लृङ् | ख) | सिच् |
| ३) | लुङ् | ग) | स्य |
| ४) | लुट् | घ) | हि |
| ५) | लङ् | ङ) | अभ्यासः |



| | | | |
|---|---|---|---|
| ६) | लिट् | च) | तास् |
| ७) | लोट् | छ) | यासुट् |

लकारवैशिष्ट्ययोः - १)-छ), २)-ग), ३)-ख), ४)-च), ५)-क), ६)-ङ), ७)-घ)

११. स्तम्भयोः स्थितान् युक्त्या मेलयत। क-स्तम्भे रूपं यल्लकारस्यास्ति, ख-स्तम्भे तल्लकारस्य रूपाणि सन्ति। स्वलकारस्य रूपाणि मेलनीयानि।

| क-स्तम्भः | ख-स्तम्भः |
|---|---|
| १) भवतः | क) भूयास्त |
| २) भविता | ख) अभूवन् |
| ३) भविष्यतः | ग) अभवत |
| ४) भवताम् | घ) अभविष्यत् |
| ५) भवेतम् | ङ) बभूविथ |
| ६) भूयात् | च) भवथ |
| ७) अभूत् | छ) भवितासि |
| ८) अभवताम् | ज) भविष्यावः |
| ९) अभविष्यत | झ) भवत |
| १०) बभूव | ञ) भवेत |

रूपयोः - १)-च), २)-छ), ३)-ज), ४)-झ), ५)-ञ), ६)-क), ७)-ख), ८)-ग), ९)-घ), १०)-ङ)



## पाठगतप्रश्नानाम् उत्तरमाला

### उत्तराणि- १

१. वयसा अधिकारेण वर्णेन वा निकृष्टस्य भृत्यादेः प्रवर्तनम् विधिः।

२. अवश्यकर्तव्ये प्रेरणं, नियोगकरणं हि निमन्त्रणम्।



३. कामचारानुज्ञा हि आमन्त्रणम्।

४. सत्कारपूर्वको व्यापारो हि अधीष्टम्। सत्कृत्य प्रवर्तनमित्यर्थः।

५. विचार्य निर्धारणं हि सम्प्रश्नः। संप्रधारणं सम्प्रश्नः।

६. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु अर्थेषु।

७. अतो येयः इति सूत्रेण यास् इत्यस्य स्थाने इय् आदेशो विधीयते।

८. लिङः।

९. २

१०. १

११. १

**उत्तराणि- २**

१२. किदाशिषि।

१३. आशिषि।

१४. अदन्तादङ्गात् परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् अतो येयः इत्यनेन क्रियते। आशीर्लिङि लिङादेशः तिङ् लिङाशिषि इति सूत्रेण आर्धधातुकसंज्ञकः। अतो न प्रवृत्तिः।

१५. लिङाशिषि।

१६. आशिषि लिङादेशः तिङ् लिङाशिषि इति सूत्रेण आर्धधातुकसंज्ञकः भवति।

१७. १

१८. १

१९. ४

२०. १

**उत्तराणि- ३**

२१. भूतार्थे धातोः लुङ् स्यात्।

२२. च्लि।

२३. लुङि।

२४. इचौ।

२५. गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु।

२६. गाति-स्था-घु-पा-भूभ्यः सिचः लुक् क्रियते परस्मैपदेषु परेषु।



२७. भूसुवोस्तिङि इति निषेधात्।

२८. लङ् लुङ् च।

२९. अडाटौ न।

३०. माङ्योगः अस्ति। अतः न माङ्योगे इति निषेधान्नाट्।

३१. क्रियायाः अनिष्पत्तिः असिद्धिः अनभिनिवृत्तिः हि क्रियातिपत्तिः।

३२. ४

३३. ४

३४. २

३५. ४

।।इति भूधातुः।।

॥इति षोडशः पाठः ॥





# १७

# भ्वादिप्रकरणे - लट् लिट् एतयोः सूत्रशेषः

## प्रस्तावना

एकैकस्य धातोः रूपाणां साधनाय यानि अनतिक्रान्तानि नूतनानि सूत्राणि आवश्यकानि तानि आनीय व्याख्याय च धातोः रूपाणि साध्यन्ते इति क्रमः वैयाकरणसिद्धान्तकौमुदी इत्यादिग्रन्थेषु पुरस्कृतः। तेन एकैकस्य धातोः रूपाणि ज्ञायन्ते परन्तु एकस्य लकारस्य सर्वाणि सूत्राणि विकीर्णानि भवन्ति। एवञ्च समग्रस्य समुदितः बोधः अत्यल्पानामेव भवति। अतः इतः परं परस्मैपदप्रकरणे लकारक्रमेण सूत्राणि उपस्थापयिष्यन्ते। अत्र कानिचन बहुत्र प्रयुक्तानि साधारणसूत्राणि दत्तानि सन्ति। कानिचन तिङन्तप्रकरणे अग्रे आवश्यकानि इति धिया दत्तानि सन्ति।

वैयाकरणसिद्धान्तकौमुदी इत्यादिप्रक्रियाग्रन्थेषु धातूनां कश्चित् क्रमः आदृतः। तथापि लघुसिद्धान्तकौमुद्याम् धातवः चिताः सन्ति। एवमेव अत्रापि प्रक्रियासौकर्याय चितानां धातूनां चितानि स्थलानि एव प्रदर्शितानि, न तस्य धातोः सर्वाणि रूपाणि। अन्यानि रूपाणि विद्यार्थिना स्वयं बोद्धव्यानि। एवञ्च यदि एकैकस्य धातोः सर्वाणि रूपाणि सदा दीयन्ते तर्हि ग्रन्थाकारगौरवम् भवति। अतः अनन्यगतिकतया पन्था अयमवलम्बितः।



## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- तिङन्तप्रकरणस्य मुख्यानि सूत्राणि बुध्यात्।
- विभिन्नानां धातूनां रूपाणि साधयितुं प्रभवेत्।
- विविधानि सूत्राणि व्याख्यातुम् समर्थो भवेत्।
- पूर्वपाठेषु कृतानां सार्वधातुकम् आर्धधातुकं संज्ञानां रूपेषु प्रभवं जानीयात्।
- भूधातुरूपाणि साधयित्वा अवशिष्टानि बहुषु लकारे एवञ्च विशिष्य लिटि प्रयुक्तानि सूत्राणि अत्र ज्ञास्यति।
- रहस्यमयम् इडागमप्रकरणम् अस्मिन् पाठे पठिष्यति।



## लकारक्रमः - लिट्

### [१७.१] अत आदेः॥ (७.४.७०)

**सूत्रार्थः** - अभ्यासस्यादेरतो दीर्घः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण दीर्घः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अतः (६/१), आदेः (६/१)। अत्र लोपोऽभ्यासस्य इति सूत्राद् अभ्यासस्य (६/१) पदमनुवर्तते। दीर्घ इणः किति इति सूत्रात् दीर्घः (१/१) पदमायाति। पदयोजना - अभ्यासस्य आदेः अतः दीर्घः। सूत्रार्थो भवति - अभ्यासस्य आदेः अतो दीर्घो भवति। अभ्यासस्य स्वाभाविकः अत् चेत् दीर्घो भवति। ह्रस्वः इति सूत्रेण ह्रस्वीकृतस्य अनेन दीर्घत्वं न क्रियते।

**उदाहरणम्** - आत।

**सूत्रार्थसमन्वयः** - अत सातत्यगमने इति धातोः परोक्षे लिट् इति सूत्रेण लिटि प्रथमपुरुषैकवचनविवक्षायां तिपि तस्य णलि अनुबन्धलोपे अत् अ इति स्थिते लिटि धातोरनभ्यासस्य इति सूत्रेण द्वित्वे अत् अत् अ इति जाते पूर्वोऽभ्यासः इति सूत्रेण पूर्वस्य अत् इत्यस्य अभ्याससंज्ञायां हलादिः शेषः इति आदेः हलः अभावे तकारः लुप्यते। तेन अ अत् अ इति जाते अतो गुणे इत्यनेन पररूपे प्राप्ते अत आदेः इति प्रकृतसूत्रेण अभ्यासस्य अतः दीर्घे आकारे आ अत् अ इति स्थितिर्जायते। तदा -

### [१७.२] अत उपधायाः॥ (७.२.११६)

**सूत्रार्थः** - उपधाया अतो वृद्धिः स्याद् ञिति णिति च प्रत्यये परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण वृद्धिः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अतः उपधायाः इति सूत्रगतपदच्छेदः। अतः (६/१), उपधायाः (६/१)। मृजेर्वृद्धिः इति सूत्रात् वृद्धिः (१/१) पदमायाति। अचो ञ्णिति इति सूत्रात् ञ्णिति (७/१) पदमायाति। ञ् च ण् च ञ्णौ इति इतरेतरयोगद्वन्द्वसमासः। ञ्णौ इतौ यस्य स ञ्णित्, तस्मिन् ञ्णिति इति बहुव्रीहिसमासः। अङ्गस्य इत्यधिकारे पठितत्वात् प्रत्यये परे एव अङ्गसंज्ञायाः उपपन्नत्वात् प्रत्यये (७/१) इति पदम् आक्षिप्यते। पदयोजना - उपधायाः अतः वृद्धिः ञ्णिति प्रत्यये। सूत्रार्थो भवति - उपधा यः अत् तस्य वृद्धिः भवति ञिति णिति च प्रत्यये परे। अतः स्थाने स्थानेऽन्तरतमः इति परिभाषया स्थानत आन्तर्याद् आकारः वृद्धिः स्यात्।

**उदाहरणम्** - आत।





**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण आ अत् अ इति जाते णलः णित्त्वात् उपधायाः अतः वृद्धौ आ आत् अ इति स्थितिः जायते। तदा अकः सवर्णे दीर्घः इति सूत्रेण आकार-आकारयोः दीर्घैकादेशे **आत** इति रूपं सिध्यति।

## [१७.३] द्विर्वचनेऽचि॥ (१.१.५९)

**सूत्रार्थः** - द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये।

**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अनेन सूत्रेण अचः आदेशः निषिध्यते। अस्मिन् सूत्रे द्वे पदे स्तः। द्विर्वचने अचि इति सूत्रगतपदच्छेदः। द्विर्वचने (७/१), अचि (७/१)। अचः परस्मिन् पूर्वविधौ इति सूत्रात् अचः (६/१) इति पदमनुवर्तते। स्थानिवदादेशोऽनल्विधौ इति सूत्रात् आदेशः (१/१) इति पदमायाति। पदान्तद्विर्वचन॰ इति सूत्रात् न इत्यव्ययमनुवर्तते। द्विः उच्यते अस्मिन् इति द्विर्वचनम्। अत्र द्विर्वचने इत्यस्य आवृत्तिः भवति। तेन द्विर्वचने द्विर्वचने इति लभ्यते। पदयोजना - द्विर्वचने अचि अचः आदेशः न द्विर्वचने। सूत्रार्थो भवति - द्वित्वे कर्तव्ये द्वित्वनिमित्ते अचि अचः स्थाने आदेशः न भवति।

अर्थात् द्वित्वविधायकसूत्रेण द्वित्वम् कर्तव्यम् अस्ति। परन्तु अन्येन केनचित् सूत्रेण तत्र अचः स्थाने आदेशः प्राप्तः अस्ति। एवञ्च स आदेशः द्वित्वस्य यन्निमित्तम् अर्थात् लिट् तस्य अचं निमित्तीकृत्य प्रवर्तते। अपि च द्वित्वविधायकसूत्राद् अचः आदेशविधायकं सूत्रं बलवद् अस्ति तदा द्विर्वचनेऽचि इति सूत्रेण स आदेशः द्वित्वार्थं निषिध्यते। कृते च द्वित्वे यथासूत्रम् अचः आदेशादिकं पुनः प्रसज्यते। अर्थात् अचः आदेशात् पूर्वं द्वित्वं कर्तव्यम्। ततः परम् अचः आदेशादिकं कर्तव्यम्।

**उदाहरणे सूत्रार्थसमन्वयः** - क्षयार्थकात् क्षिधातोः परोक्षे लिट् इति सूत्रेण लिटि लस्य स्थाने प्रथमपुरुषैकवचनविवक्षायां तिपि क्षि ति इति स्थिते परस्मैपदानां णलतुसुस्-थलथुस-णल्वमाः इति सूत्रेण तिपः सर्वादेशे णलि अनुबन्धलोपे क्षि अ इति स्थितिर्जायते।

अत्राधुना लिटि धातोरनभ्यासस्य (६.१.८) इति सूत्रेण धातोः द्वित्वम् प्राप्तम्। परन्तु इको यणचि (६.१.७७) इति सूत्रेण इकः यणादेशः प्राप्तः। तत्रापि णलः णित्त्वात् अचो ञ्णिति (७.१.९१) इति सूत्रेण अजन्ताङ्गस्य वृद्धिः प्राप्ता। तत्रापि पुनः सार्वधातुकार्धधातुकयोः (७.३.८४) इति सूत्रेण इगन्ताङ्गस्य गुणः प्राप्तः। किञ्च विप्रतिषेधे परं कार्यम् इति परिभाषया द्वित्वाद् यणादेशः बलीयान्। यणादेशाद् वृद्धिः बलीयसी। वृद्धेरपि गुणो बलीयान्। अतः द्वित्वात् पूर्वं गुणः प्राप्तः। तत्र णलं निमित्तीकृत्य द्वित्वं प्राप्तम्। तस्य अकारः द्वित्वनिमित्तकः अच् अस्ति। द्विर्वचनेऽचि इति सूत्रेण अस्मिन् अचि परतः अचः आदेशः न स्यात् द्वित्वे कर्तव्ये। अर्थात् प्रथमं द्वित्वं भवति। ततः परम् अचः आदेशादिकं भवति। एवम् लिटि धातोरनभ्यासस्य इति सूत्रेण अनभ्यासधात्ववयवस्य एकाचः क्षि इत्यस्य द्वित्वे क्षि क्षि अ इति जाते द्विरुक्तस्य पूर्वभागस्य क्षि इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायां हलादिः शेषः इति सूत्रेण अभ्यासस्य आदेः हलः शेषे कि क्षि अ इति जायते। तदा -

## [१७.४] कुहोश्चुः॥ (७.४.६२)

**सूत्रार्थः -** अभ्यासकवर्गहकारयोः चवर्गादिशः स्यात्।

**सूत्रव्याख्या -** विधिसूत्रमिदम्। अनेन सूत्रेण चवर्गः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। कुहोः चुः इति सूत्रगतपदच्छेदः। कुहोः (६/२), चुः (१/१)। अत्र लोपोऽभ्यासस्य इति सूत्रात् अभ्यासस्य (६/१) इति षष्ठ्यन्तपदमनुवर्तते। कुः च ह् च कुहौ, तयोः इति इतरेतरयोगद्वन्द्वसमासः। सूत्रार्थो भवति - अभ्यासस्य कवर्गस्य हकारस्य च स्थाने चवर्गः आदेशः भवति। कुहोः इति स्थानिनः षट्। चुः इति आदेशाः पञ्च। अतः स्थान्यादेशयोः संख्यावैषम्यात् स्थानेऽन्तरतमः इति सूत्रेण गुणकृदान्तर्येण निर्वाहः भवति।

**[आन्तरतम्यपरीक्षा -** (परीक्षायाः कृते नास्ति)

स्थानेऽन्तरतमः इति परिभाषा यत्र प्रवर्तते तत्र स्थानिना सदृशतमः आदेशः कर्तव्यः। सादृश्यम् स्थानार्थगुणप्रमाणतः चतुर्विधम् अस्ति। सदृशतमस्य आदेशस्य अन्वेषणाय आन्तरतम्यपरीक्षा क्रियते एव। सा च परीक्षा अत्र किञ्चित् प्रदर्श्यते।

**स्थानकृद् आन्तर्यमस्ति न वा -** स्थानिनः कवर्गस्य हकारस्य उच्चारणस्थानम् अकुहविसर्जनीयानां कण्ठाः इति वचनात् कण्ठः। आदेशेषु चवर्गस्य समेषां उच्चारणस्थानं तालु। अतः स्थानिभिः सदृशतमः तेषु विधीयमानेषु आदेशेषु कोऽपि न लभ्यते।

**प्रमाणकृद् आन्तर्यमस्ति न वा -** प्रमाणमत्र उच्चारणकालः। स्थानी कवर्गः हकारश्च अर्धमात्रिकाः, आदेशाः चुः च छ ज झ ञ एते पञ्च समेऽपि अर्धमात्रिकाः। अतः तेषु कश्चिदेकः प्रमाणतः अन्तरतमः नास्ति।

**अर्थकृद् आन्तर्यमस्ति न वा -** वर्णानां न कोऽपि अर्थः अत्र गृह्यते। समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थकः इति न्यायः। अतः अर्थतः आन्तर्यं न विचार्यते।

**गुणकृदान्तर्यमस्ति न वा -** गुणशब्दस्यार्थः अत्र बाह्ययत्नः। स्थानिना कवर्गेण हकारेण आदेशेषु यस्य बाह्ययत्नाः समानाः सन्ति स आदेशः चवर्गः सदृशतमः। बाह्ययत्नाः सविस्तरम् अधः प्रदर्श्यन्ते।

| | **वर्णः** | **बाह्ययत्नाः** | | | |
|---|---|---|---|---|---|
| स्थानी | क | विवारः | श्वासः | अघोषः | अल्पप्राणः |
| | ख | विवारः | श्वासः | अघोषः | महाप्राणः |
| | ग | संवारः | नादः | घोषः | अल्पप्राणः |
| | घ | संवारः | नादः | घोषः | महाप्राणः |



| | | | | | |
|---|---|---|---|---|---|
| | ङ | संवारः | नादः | घोषः | अल्पप्राणः |
| | ह | संवारः | नादः | घोषः | महाप्राणः |
| आदेशाः | च | विवारः | श्वासः | अघोषः | अल्पप्राणः |
| | छ | विवारः | श्वासः | अघोषः | महाप्राणः |
| | ज | संवारः | नादः | घोषः | अल्पप्राणः |
| | झ | संवारः | नादः | घोषः | महाप्राणः |
| | ञ | संवारः | नादः | घोषः | अल्पप्राणः |

प्रकरणे साक्षात् स्थानी कः अस्ति इति दृष्ट्वा आदेशेषु यस्य बाह्यप्रयत्नः स्थानिना सदृशतमः स्यात् स आदेशः भवति।

यथा - स्थानी ककारः चेत् आदेशेषु चकारस्य एव बाह्यप्रयत्नाः ककारतुल्याः सन्ति।

स्थानी खकारः चेत् आदेशेषु छकारस्य एव बाह्यप्रयत्नाः खकारतुल्याः सन्ति।

स्थानी गकारः चेत् आदेशेषु जकारस्य एव बाह्यप्रयत्नाः गकारतुल्याः सन्ति।

स्थानी घकारः चेत् आदेशेषु झकारस्य एव बाह्यप्रयत्नाः घकारतुल्याः सन्ति।

स्थानी ङकारः चेत् आदेशेषु ञकारस्य एव बाह्यप्रयत्नाः ङकारतुल्याः सन्ति। यद्यपि ङकारेण तुल्याः जकारस्यापि सन्ति। तथापि ङकारञकारयोः अनुनासिकत्वमस्ति इति हेतोः ङकारस्य स्थाने ञकार एव भवति।

स्थानी हकारः चेत् आदेशेषु झकारस्य एव बाह्यप्रयत्नाः हकारतुल्याः सन्ति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण कि क्षि अ इति स्थितिः जाता। अत्राधुना कुहोश्चुः इति प्रकृतसूत्रेण अभ्यासस्य कवर्गस्य ककारस्य स्थाने चवर्गः कर्तव्यः अस्ति। ककारस्य स्थाने आदेशेषु चवर्गीयेषु कतमः स्यात् इति आन्तरतम्यपरीक्षा उपरि सूत्रव्याख्यायाम् प्रदर्शिता। तत्राधुना स्थानी ककारः। तस्य बाह्यप्रयत्नाः विवारः श्वासः अघोषः अल्पप्राणः चेति। आदेशेषु चकारस्य एव बाह्यप्रयत्नाः विवारः श्वासः अघोषः अल्पप्राणः इति ककारतुल्याः सन्ति। अतः चकार एव आदेशो भवति। तेन चि क्षि अ इति स्थितिः जायते।

## [१७.५] अचो ञ्णिति॥ (७.१.९१)

**सूत्रार्थः** - अजन्ताङ्गस्य वृद्धिः ञिति णिति च प्रत्यये परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण वृद्धिः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अचः ञ्णिति इति सूत्रगतपदच्छेदः। अचः (६/१) ञ्णिति (७/१)। अङ्गस्य (६/१) इति अधिकृतम्। मृजेर्वृद्धिः इति सूत्रात् वृद्धिः (१/१) पदमनुवर्तते। ञ् च ण् च ञ्णौ इति इतरेतरयोगद्वन्द्वसमासः। ञ्णौ इतौ यस्य स



ञ्णित्, तस्मिन् ञ्णिति इति बहुव्रीहिसमासः। प्रत्यये परे एव अङ्गसंज्ञा उपपन्ना। अतः प्रत्यये इति सप्तम्यन्तम् पदम् आक्षिप्यते। इदम् अङ्गाक्षिप्तम् इति कथ्यते। पदयोजना - अचः अङ्गस्य ञ्णिति प्रत्यये वृद्धिः। अचः अङ्गस्य इति समानविभक्तिकत्वात् अचः इत्यस्य विशेषणत्वाच्च तदन्तविधिः भवति। तदन्तविधिना अजन्तस्य अङ्गस्य इति लभ्यते। अजन्ताङ्गस्य इत्यत्रापि अलोऽन्तस्य इति परिभाषया अन्त्यस्य एव अलः वृद्धिः भवति। अत्र अन्त्यः अल् अच् एव। अतः सूत्रार्थो भवति - अजन्ताङ्गस्य अन्त्यस्य अचः वृद्धिः भवति ञिति णिति च प्रत्यये परे।

**उदाहरणम्** - चिक्षाय।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण चि क्षि अ इति स्थितिः अस्ति। अत्राधुना णलि प्रत्यये परतः चिक्षि इति समुदायस्य अङ्गसंज्ञा भवति। तच्च अङ्गम् अजन्तम् अस्ति। एवञ्च णल् णित् प्रत्ययः अस्ति। अतः अलोऽन्त्यस्य इति परिभाषया अचो ञ्णिति इति सूत्रेण अजन्ताङ्गस्य अन्त्यस्य अलः इकारस्य स्थाने वृद्धौ स्थानत आन्तर्याद् ऐकारे चिक्षै अ इति स्थितिः भवति। ततश्च एचोऽयवायावः इति सूत्रेण आयादेशे **चिक्षाय** इति रूपं सिध्यति।

--

**चिक्षियतुः** - क्षयार्थकात् क्षिधातोः परोक्षे लिट् इति सूत्रेण लिटि लस्य स्थाने प्रथमपुरुषद्विवचनविवक्षायां तसि क्षि तस् इति स्थिते तसः सर्वादेशे अतुसि क्षि अतुस् इति स्थितिर्जायते। ततश्च सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य इकारस्य गुणः प्राप्तः। तदा -

## [१७.६] असंयोगाल्लिट् कित्॥ (१.२.५)

**सूत्रार्थः** - असंयोगात् परोऽपिल्लिट् कित् स्यात्।

**सूत्रव्याख्या** - अतिदेशसूत्रमिदम्। अनेन सूत्रेण कित्त्वम् अतिदिश्यते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। असंयोगात् लिट् कित् इति सूत्रगतपदच्छेदः। असंयोगात् (५/१), लिट् (१/१), कित् (१/१)। सार्वधातुकमपित् इति सूत्रात् अपित् (१/१) इति पदमायाति। न संयोगः असंयोगः, तस्मात् असंयोगात् इति नञ्-तत्पुरुषः समासः। प् इत् यस्य स पित् इतिबहुव्रीहिः समासः। न पित् अपित् इति नञ्तत्पुरुषसमासः। पदयोजना - असंयोगात् अपित् लिट् कित्। सूत्रार्थो भवति - असंयोगात् परः अपित् लिट् कित् भवति। अष्टादशसु तिङ्-प्रत्ययेषु तिप् सिप् मिप् त्रय एव पितः सन्ति। अन्ये १५ प्रत्ययाः अपितः एव सन्ति। एवञ्च तिबादीनां स्थाने विहिताः णलादयोऽपि स्वयम् अपितः एव सन्ति। तत्र तिप् सिप् मिप् एषाम् स्थाने विहिताः णल् थल् अ इति एते त्रयः पितः। अतः तद्भिन्नानाम् अपिताम् कित्त्वं भवति।

**उदाहरणम्** - चिक्षियतुः।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण क्षि अतुस् इति स्थितौ सार्वधातुकार्धधातुकयोः इति सूत्रेण इगन्ताङ्गस्य इकः इकारस्य गुणः प्राप्तः। स च इग्लक्षणः गुणः। अत्र लिटः स्थाने विहितो यः तस्-प्रत्ययः, तस्य स्थाने विहितः अतुस् न स्थानिवद्भावाद् नापि स्वतः पित् अस्ति। अतः अपित् अस्ति



लिट् च अस्ति। एवञ्च क्षि इत्यस्य अन्ते इकारः अस्ति, न तु संयोगः। अतः असंयोगात् परः अपित् लिट् अतुस् अस्ति। अतः प्रकृतसूत्रेण अतुसः कित्त्वम् अतिदिश्यते। तेन क्ङिति च इति सूत्रेण इग्लक्षणः गुणः निषिध्यते।

ततश्च लिटि धातोरनभ्यासस्य इति सूत्रेण अनभ्यासधात्ववयवस्य एकाचः क्षि इत्यस्य द्वित्वे क्षि क्षि अतुस् इति जाते द्विरुक्तस्य पूर्वभागस्य क्षि इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायां हलादिः शेषः इति सूत्रेण अभ्यासस्य आदेः हलः शेषे कि क्षि अतुस् इति जायते। एवञ्च कुहोश्चुः इति सूत्रेण अभ्यासककारस्य स्थाने चकारे कृते चि क्षि अतुस् इति स्थितिः जाता। ततश्च अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इति सूत्रेण षकारोत्तरस्य इकारस्य स्थाने इयङ् इत्यादेशे अनुबन्धलोपे चि क्षिय् अतुस् इति जाते समुदायस्य तिङन्तत्वेन पदत्वात् सस्य रुत्वे विसर्गे च कृते वर्णमेलने **चिक्षियतुः** इति रूपं सिध्यति।

**चिक्षियुः** - क्षिधातोः लिटि प्रथमपुरुषबहुवचनविवक्षायां झिप्रत्यये तस्य स्थाने उस्-प्रत्यये क्षि उस् इति स्थिते सार्वधातुकार्धधातुकयोः इत्यनेन गुणे प्राप्ते उसः असंयोगाल्लिट् कित् इत्यनेन कित्त्वात् क्ङिति च इति सूत्रेण गुणनिषेधे द्वित्वे अभ्यासकार्ये च चि क्षि उस् इति स्थिते अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इति सूत्रेण इकारस्य स्थाने इयङ् इत्यादेशे चि क्षिय् उस् इति जाते समुदायस्य तिङन्तत्वेन पदत्वात् सस्य रुत्वे विसर्गे च कृते वर्णमेलने **चिक्षियुः** इति रूपं सिध्यति।

**चिक्षयिथ, चिक्षेथ** - क्षिधातोः लिटि सिपि परस्मैपदानां णलतुसुस्-थलथुस-णल्वमाः इति सूत्रेण सिपः सर्वादेशे थलि अनुबन्धलोपे क्षि थ इति स्थितिर्जायते। लिट् च इति सूत्रेण लिडादेशस्य सिपः आर्धधातुकत्वात्, तदादेशः थल् अपि आर्धधातुकसंज्ञकः, स्वं वलादिश्च। अतः आर्धधातुकस्येड् वलादेः इति सूत्रेण थलः इडागमः प्राप्तः। तदा -

##  पाठगतप्रश्नाः-१

उपरितनपाठम् अवलम्ब्य अत्र केचित् लघूत्तरीयाः प्रश्नाः दीयन्ते। एतेषाम् उत्तराणि लिखित्वा अन्ते दत्तैः उत्तरैः मेलयत।

१. अभ्यासस्यादेरतो दीर्घः केन सूत्रेण।

२. अतति इत्यत्रत्यस्य अत्-धातोरर्थः कः।

३. उपधाया अतो वृद्धिः ञिति णिति च प्रत्यये परे केन सूत्रेण भवति।

४. द्विर्वचनेऽचि इति सूत्रस्यार्थं लिखत।

५. क्षिधातोः लिटि चिक्षाय इति रूपे ककारस्य चकारः केन सूत्रेण।

६. क्षिधातोः लिटि चिक्षाय इति रूपे इकारस्य वृद्धिः केन सूत्रेण।

७. चिक्षियतुः इति रूपे आर्धधातुकनिबन्धनगुणस्य अभावः कुतः।



८. चिक्षियतुः इति रूपे यकारः कुतः आगतः।

९. क्षिधातोः लिटि चिक्षाय इति रूपे ककारस्य चकारकरणे कीदृशमान्तर्यम्।

१) स्थानकृद् २) गुणकृद् ३) अर्थकृद् ४) प्रमाणकृद्

---

## [१७.७] एकाच उपदेशेऽनुदात्तात्॥ (७.२.१०)

**सूत्रार्थः** - उपदेशे यो धातुः एकाच् अनुदात्तश्च तत आर्धधातुकस्य इट् न भवति।

**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अनेन सूत्रेण इड् निषिध्यते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। एकाचः (५/१), उपदेशे (७/१), अनुदात्तात् (५/१)। ऋत इद्धातोः इति सूत्रात् धातोः (५/१) पदमनुवर्तते। नेड् वशि कृति इति सूत्रात् न इत्यव्ययमनुवर्तते, इट् (१/१) इति पदमनुवर्तते। एकः अच् यस्य यस्मिन् वा असौ एकाच्, तस्माद् एकाचः इति बहुव्रीहिसमासः। अनुदात्तः अस्ति अस्य इति अनुदात्तः धातुः (अर्शआदिभ्योऽच् इति अजन्तम् पदम्)। सूत्रार्थो भवति - उपदेशे यो धातुः एकाच् अनुदात्तः च तस्मात् परस्य आर्धधातुकस्य इट् न भवति। यो धातुः उपदेशावस्थायाम् एकाच् अपि अस्ति, अनुदात्तश्चापि अस्ति तस्मात् परस्य आर्धधातुकस्य इड् निषिध्यते इति विशिष्य अवधेयम्। यदि उपदेशे धातुः एकाच् अस्ति परन्तु अनुदात्तः नास्ति तर्हि निषेधः न प्रवर्तते। यदि धातुः उपदेशे अनुदात्तः अस्ति परन्तु एकाच् नास्ति तर्हि निषेधः न भवति। यस्मात् धातोः परस्य आर्धधातुकस्य इडागमः भवति स धातुः सेट् कथ्यते। यस्मात् धातोः परस्य आर्धधातुकस्य इडागमः विकल्पेन भवति स धातुः वेट् कथ्यते। यस्मात् धातोः परस्य आर्धधातुकस्य इडागमः न भवति स धातुः अनिट् कथ्यते। एवम् सेट् वेट् अनिट् इति धातुः त्रेधा इडागमवशात्।

आर्धधातुकस्येड्वलादेः इति सूत्रेण इडागमो विधीयते। तस्य अनेन सूत्रेण निषेधः क्रियते। अतः सूत्रार्थे उक्तं यद् आर्धधातुकस्य इट् न भवतीति।

उपदेशे धातुषु बहुत्र अधिकस्वरः योज्यते, तस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा च भवति। यस्य धातोः अनुदात्तः स्वरः इत्-संज्ञां लभते स धातुः अनुदात्तेत् कथ्यते। यस्य धातोः स्वकीयः स्वरः, यस्य इत्थम् इत्संज्ञा न भवति स धातुः अनुदात्तः कथ्यते। इत्थम् अनुदात्तः अनुदात्तेत् इति पदयोः अर्थे भेदः अस्ति।

पाणिनीयधातुपाठे पाणिनिना धातुस्वराः निर्दिष्टाः सन्ति। तत्र दर्शनेन तज्ज्ञानं भवितुमर्हति। तत्र परिशीलनेन केचित् धातवः निर्देष्टुं शक्यन्ते। अतः कः धातुः अनुदात्तः कश्च न अनुदात्तः इति ज्ञानाय व्यवसिताः धातवः सन्ति। ते अत्र दीयन्ते।

यस्य धातोः एकः अच् भवति स धातुः अजन्तः हलन्तः चेति भेदेन द्विविधो भवति।

तत्रेयम् अजन्तधातुविषयिणी कारिका - (एतत्कारिकास्था अनुदात्ताः न)

ऊदॄदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः।



वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः॥

अत्र कारिकायाम् अविद्यमानः, अनुल्लिखितः एकाच् अजन्तः च धातुः अनुदात्तः भवति। कारिकायाम् उल्लिखिताः - ऊदन्तः ॠदन्तः (दीर्घः ॠ), यु रु क्ष्णु शीङ् स्नु क्षु श्वि डीङ् श्रि वृङ् वञ् इति एते। एतान् विहाय अन्यः एकाच् अजन्तः च धातुः अनुदात्तः भवति।

हलन्ताः १०३ धातवः- (अत्रत्याः १०३ अनुदात्ताः)

**कान्तेषु** शक्लेकः। चान्तेषु पच् मुच् रिच् वच् विच् सिचः षट्। **छान्तेषु** प्रच्छ्येकः।

**जान्तेषु** त्यज् निजिर् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् यज् युज् रुज् रञ्ज् विजिर् स्वञ्ज् सञ्ज् सृजः पञ्चदश॥

**दान्तेषु** अद् क्षुद् खिद् छिद् तुद् नुद् पद्य भिद् विद्य विनद् विन्द् शद् सद् स्विद्य स्कन्द् हदः षोडश।

**धान्तेषु** क्रुध् क्षुध् बुध्य बन्ध् युध् रुध् राध् व्यध् साध् शुध् सिध्या एकादश।

**नान्तेषु** मन्यहनी द्वौ।

**पान्तेषु** आप् छुप् क्षिप् तप् तिप् तृप्य दृप्य लिप् लुप् वप् शप् स्वप् सृपस्त्रयोदश।

**भान्तेषु** यभ् रभ् लभस्त्रयः। **मान्तेषु** गम् नम् यम् रमश्चत्वारः।

**शान्तेषु** क्रुश् दंश् दिश् दृश् मृश् रिश् रुश् लिश् विश् स्पृशो दश।

**षान्तेषु** कृष् त्विष् तुष् द्विष् दुष् पुष्य पिष् विष् शिष् शुष् श्लिष्या एकादश॥

**सान्तेषु** घस्-वसती द्वौ। **हान्तेषु** दह् दिह् दुह् नह् मिह् रुह् लिह् वहः अष्टौ।

अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम्। १०३ धातवः अनुदात्ताः।

एते एव हलन्ताः अनुदात्ताः धातवः अकारादिक्रमेण अधः चतुरश्रे प्रदत्ताः सन्ति --

| क्र. | धातुः | -- | क्र. | धातुः | -- | क्र. | धातुः | -- | क्र. | धातुः | -- | क्र. | धातुः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | अद् | | २२ | दह् | | ४३ | भिद् | | ६१ | रिश् | | ८५ | शप् |
| २ | आप् | | २३ | दिश् | | ४४ | भुज् | | ६२ | रुज् | | ८६ | शिष् |
| ३ | कृष् | | २४ | दिह् | | ४५ | भ्रस्ज् | | ६३ | रुध् | | ८७ | शुध् |
| ४ | क्रुध् | | २५ | दुष् | | ४६ | मन्य | | ६४ | रुश् | | ८८ | शुष् |
| ५ | क्रुश् | | २६ | दुह् | | ४७ | मस्ज् | | ६५ | रुह् | | ८९ | श्लिष्य |
| ६ | क्षिप् | | २७ | दृप्य | | ४८ | मिह् | | ६६ | लभ् | | ९० | सञ्ज् |
| ७ | क्षुद् | | २८ | दृश् | | ४९ | मुच् | | ६७ | लिप् | | ९१ | सद् |



| क्र. | धातुः | -- | क्र. | धातुः | -- | क्र. | धातुः | -- | क्र. | धातुः | -- | क्र. | धातुः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | क्षुध् | | २९ | द्विष् | | ५० | मृश् | | ६८ | लिश् | | ९२ | साध् |
| ९ | खिद् | | ३० | नम् | | ५१ | यज् | | ६९ | लिह् | | ९३ | सिच् |
| १० | गम् | | ३१ | नह् | | ५२ | यभ् | | ७० | लुप् | | ९४ | सिध्य |
| ११ | घस् | | ३२ | निजिर् | | ५३ | यम् | | ७१ | वच् | | ९५ | सृज् |
| १२ | छिद् | | ३३ | नुद् | | ५४ | युज् | | ७२ | वप् | | ९६ | सृप् |
| १३ | छुप् | | ३४ | पच् | | ५५ | युध् | | ७३ | वस् | | ९७ | स्कन्द् |
| १४ | तप् | | ३५ | पद्य | | ५६ | रञ्ज् | | ७४ | वह् | | ९८ | स्पृश् |
| १५ | तिप् | | ३६ | पिष् | | ५७ | रभ् | | ७५ | विच् | | ९९ | स्वञ्ज् |
| १६ | तुद् | | ३७ | पुष्य | | ५८ | रम् | | ७६ | विजिर् | | १०० | स्वप् |
| १७ | तुष् | | ३८ | प्रच्छि | | ५९ | राध् | | ७७ | विद्य | | १०१ | स्विद्य |
| १८ | तृप् | | ३९ | बन्ध् | | ६० | रिच् | | ८१ | विष् | | १०२ | हद् |
| १९ | त्यज् | | ४० | बुध्य | | ७८ | विनद् | | ८२ | व्यध् | | १०३ | हन् |
| २० | त्विष् | | ४१ | भज् | | ७९ | विन्द् | | ८३ | शकृ | | | |
| २१ | दश् | | ४२ | भञ्ज् | | ८० | विश् | | ८४ | शद् | | | |

हलन्तेषु केषाञ्चिद् धातूनां विषये ईषत् विवरणम् अत्र चतुरश्रे दीयते।

| अनुक्र. | धातुः - अर्थः | गणः, पदम् |
|---|---|---|
| १ | शकॢँ शक्तौ | स्वादि, प.प. |
| २ | पच् डुपचँष् पाके | भ्वादि, उ.प. |
| ३ | मुच् मुचॢँ मोक्षणे | तुदा, उ.प. |
| ४ | रिच् रिचिर् विरेचने,<br>रिचिर् वियोजनसम्पर्चनयोः | रुधा, उ.प.<br>चुरा, उ.प. |
| ५ | वच् वच परिभाषणे ,<br>ब्रुवो वचिः इति वच् अपि | अदा, प.प. |
| ६ | विच् विचिर् पृथग्भावे | रुधा, उ.प. |
| ७ | सिच् षिचँ क्षरणे | तुदा. उ.प. |



३. कृञ् चानुप्रयुज्यते लिटि इति सूत्रं व्याख्यात।

४. आयादय आर्धधातुके वा इति सूत्रं व्याख्यात।

५. कास्यनेकाच आम् वक्तव्यः इति विहितस्य आमः मकारः इत्संज्ञक कुतो न।

६. ससूत्रं रूपाणि साधयत – गोपायति, गोपायामि, गोपायाञ्चकार, गोपायाम्बभूव, गोपायामास, जुगोप, जुगुपुः, जुगोपिथ।

७. आदेच उपदेशेऽशिति इति सूत्रं व्याख्यात।

८. ससूत्रं रूपाणि साधयत – जग्लौ, जग्मतुः, जगम, जगाम।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि- १**

१. अत एकहल्मध्येऽनादेशादेर्लिटि।

२. थलि च सेटि।

३. लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्य असंयुक्तहल्मध्यस्थस्य अतः एत्वम् अभ्यासलोपश्च सेटि थलि।

४. ३

**उत्तराणि- २**

५. गुपूधूपविच्छिपणिपनिभ्य आयः।

६. गोपाय।

७. गुपू रक्षणे इत्यस्य।

८. आर्धधातुकविवक्षायाम् आयादयो विकल्पेन विधीयन्ते।

९. ५

१०. कास्यनेकाच आम् वक्तव्यः।

११. आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके।

१२. कृञ् चानुप्रयुज्यते लिटि।

१३. कृञ् चानुप्रयुज्यते लिटि।

१४. २

१५. १

**उत्तराणि- २**



१६. ग्लै हर्षक्षये।

१७. आत औ णलः इति सूत्रेण णलः औकारः।

१८. गमहनजनखनघसां लोपः क्ङित्यनङि।

१९. जग्मतुः।

॥ इति अष्टदशः पाठः ॥





# १९

# भ्वादिप्रकरणे - लिङ् लुङ् एतयोः सूत्रशेषः

## प्रस्तावना

पूर्वपाठेषु भूधातुम् आदाय रूपाणि साधितानि। ततः धातुक्रमं त्यक्त्वा मुख्यप्रक्रियाम् अवलमब्य सूत्राणि प्रदर्शितानि। अस्मिन् पाठे लिङ्-लकारस्य उदाहरणमादाय अकृत्सार्वधातुकयोर्दीर्घः इति सूत्रम् उपन्यस्तम्। अस्य सूत्रेषु अत्रान्यत्र चापि प्रयोगबाहुल्यम् परिलक्ष्यते। अतः तत्सूत्रमत्र आनीतम्।

लुङ् लकारः सर्वविधभूतकालप्रदर्शनाय प्रयुज्यते। लुङि रूपाणि बहुविधानि भवन्ति। ईडागमः इडागमः सिचः लोपः इत्यादीनि कानिचन कार्याणि अत्र उपात्तानि। एवञ्च लुङि च्लि भवति। च्लेः सिच् अङ् चङ् इत्यादयः आदेशा भवन्ति। एवञ्च सिचि परस्मैपदे परतः वृद्धिः भवति। अस्मिन् पाठे इदं वृद्धिप्रकरणं मुख्यत्वेन उपन्यस्तमस्ति।



## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- तिङन्तप्रकरणस्य लिङि लुङि च सूत्राणि बुध्यात्।
- लुङि कठिनानि धातुरूपाणि साधयितुं क्षमः भविष्यति।
- लुङ्लकारस्य सूत्राणि व्याख्यातुम् जानीयात्।
- लुङि वृद्धिप्रकरणस्य स्पष्टं ज्ञानं प्राप्स्यति।
- वृद्धिप्रकरणे बहूनां सूत्राणां बाध्यबाधकभावं च ज्ञास्यति।
- लुङ्लकारस्य रूपाणि व्यवहारे प्रयोक्तुं शक्तः भविष्यति।





## लिङ्

### [१९.१] अकृत्सार्वधातुकयोर्दीर्घः॥ (७.४.२५)

**सूत्रार्थः** - अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण अजन्ताङ्गस्य दीर्घो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अकृत्सार्वधातुकयोः दीर्घः इति सूत्रगतपदच्छेदः। अकृत्सार्वधातुकयोः (७/२), दीर्घः (१/१)। अयङ् यि क्ङिति इति सूत्रात् यि (७/१) इति पदमायाति। अङ्गस्य (६/१) इति अधिकृतम्। अस्मिन् सूत्रे स्थानी साक्षात् नोल्लिखितः। एवञ्च दीर्घः इति विधेयपरं शब्दम् उच्चार्य अच् विधीयते। अतः अचश्च इति परिभाषयाऽत्र अचः इति षष्ठ्यन्तं पदमुपतिष्ठते। कृत् च सार्वधातुकं च कृत्सार्वधातुके इति इतरेतरयोगद्वन्द्वसमासः। न कृत्सार्वधातुके अकृत्सार्वधातुके, तयोः अकृत्सार्वधातुकयोः इति नञ्-तत्पुरुषः समासः। प्रत्यये परे एव अङ्गसंज्ञा उपपन्ना। अतः प्रत्यये इति सप्तम्यन्तम् पदम् आक्षिप्यते। इदम् अङ्गाक्षिप्तम् इति कथ्यते। पदयोजना - अचः अङ्गस्य दीर्घः यि प्रत्यये अकृत्सार्वधातुकयोः।

अचः अङ्गस्य इत्यत्र अचः इति विशेषणम्। अतः तदन्तविधिना अजन्ताङ्गस्य इति लभ्यते। ततश्च अलोऽन्त्यस्य इति परिभाषया अजन्ताङ्गस्य अन्त्यस्य अलः स्थाने आदेशः भवति।

यि प्रत्यये इति पदद्वयमपि सप्तम्यन्तम्। अतः तदादिविधिः भवति। तेन यादौ प्रत्यये परे इति लभ्यते।

सूत्रार्थो भवति - अजन्ताङ्गस्य अन्त्यस्य दीर्घः भवति यादौ प्रत्यये परे। अयं दीर्घः कृत्प्रत्यये परे, सार्वधातुकप्रत्यये परे च न भवति।

**उदाहरणम्** - क्षीयात्।

**सूत्रार्थसमन्वयः** - क्षयार्थकात् क्षिधातोः आशिषि लिङ्लोटौ इति सूत्रेण आशिषि लिङि तिपि यासुडागमे इतश्च इति तिपः इकारलोपे च क्षि यास् त् इति स्थितिर्जायते। सार्वधातुकार्धधातुकयोः इत्यनेन इग्लक्षणे गुणे प्राप्ते किदाशिषि इत्यनेन कित्त्वात् क्ङिति च इति गुणनिषेधो भवति। तत्राधुना लिङाशिषि इत्यनेन आशिषि लिङः तिङ् आर्धधातुकसंज्ञकः भवति। यासुडागमसहितस्य एव तिपः प्रत्ययत्वात् यास्त् इति प्रत्ययः, स च यादिरपि अस्ति। अतः अकृत्सार्वधातुकयोर्दीर्घः इति प्रकृतसूत्रेण षकारोत्तस्य इकारस्य दीर्घे **क्षीयात्** इति रूपं सिध्यति।

**आशीर्लिङि क्षिधातोः रूपाणि - क्षीयात् क्षीयास्ताम् क्षीयासुः। क्षीयाः क्षीयास्तम् क्षीयास्त। क्षीयासम् क्षीयास्व क्षीयास्म।**

## [१९.२] अस्तिसिचोऽपृक्ते॥ (७.३.९६)

**सूत्रार्थः** - विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण ईट् विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अस्तिसिचः (५/१), अपृक्ते (७/१)। उतो वृद्धिर्लुकि हलि इति सूत्रात् हलि (७/१) इति पदमनुवर्तते। ब्रुव ईट् इति सूत्रात् ईट् (१/१) इति पदमायाति। अस्तिश्च सिच् च अस्तिसिच्, तस्माद् अस्तिसिचः इति समाहारद्वन्द्वसमासः। अत्र अस्तिः इति इक्-श्तिपौ धातुनिर्देशे इत्यनेन अस भुवि इति अदादिगणीयधातोः निर्देशोऽस्ति। अपृक्त एकाल् प्रत्ययः इति सूत्रेण एकालात्मकस्य प्रत्ययस्य अपृक्तसंज्ञा विधीयते। सूत्रार्थो भवति - विद्यमानात् सिचः अस्तेः च परस्य अपृक्तस्य हलः ईडागमः भवति। टित्त्वाद् ईट् आद्यन्तौ टकितौ इति परिभाषया आद्यावयवः भवति।

अस्मिन् सूत्रे अस्तिसिचः इति पञ्चम्यन्तम् पदम्। अपृक्ते इति सप्तम्यन्तं पदम्। अतः परस्य कार्यं वा भवेत् पूर्वस्य वा इति अनियमः जायते। अनियमे नियमकारिणी अस्ति काचित् परिभाषा अत्र। उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् इति सा परिभाषा। तदर्थो हि यथा प्रकृते पञ्चम्यन्तं पदम् सप्तम्यन्तं च पदमस्ति। अयमेव उभयनिर्देशः। तदा अनया परिभाषया पञ्चमीनिर्देशस्य बलीयस्त्वम् उच्यते। अर्थात् पञ्चमीनिर्दिष्टात् परस्य कार्यं भवतीति।

**उदाहरणे सूत्रार्थसमन्वयः** - अत्-धात्वर्थः व्यापारः भूतकालीनः इति विवक्षिते लुङ् इति सूत्रेण कर्तरि लुङि अत् ल् इति स्थिते प्रथमपुरुषैकवचनविवक्षायाम् तिपि अत् ति इति जायते। ततश्च इतश्च इत्यनेन तिपः इलोपे अत् त् इति स्थिते कर्तरि शप् इति सूत्रेण शपि प्राप्ते च्लि लुङि इति सूत्रेण च्लिप्रत्यये अत् च्लि त् इति जाते च्लेः सिच् इति सूत्रेण सिचि अत् स् त् इति जायते। ततश्च आडजादीनाम् इति सूत्रेण अङ्गस्य आडागमे आ अत् स् त् इति आटश्च इति सूत्रेण वृद्धौ आत् स् त् इति जायते। सिचः आर्धधातुकत्वात् वलादित्वात् च आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे आद्यावयवे आत् इस् त् इति स्थितिः जाता। अत्र तिपः तकारः एकाल् प्रत्ययश्च। अतः अपृक्तसंज्ञकः। एवञ्च स विद्यमानात् सिचः परः। अत एव प्रकृतसूत्रेण ईडागमे कृते अनुबन्धलोपे टित्त्वाद् आद्यावयवे आत् इस् ईत् इति स्थितिः जायते। तदा -

## [१९.३] इट ईटि॥ (८.२.२८)

**सूत्रार्थः** - इटः परस्य सस्य लोपः स्याद् ईटि परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण सलोपः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। इटः (५/१), ईटि (७/१)। रात्सस्य इति सूत्रात् सस्य (६/१) इति पदमायाति। संयोगान्तस्य लोपः इति सूत्रात् लोपः (१/१) पदमनुवर्तते। सूत्रार्थो भवति - इटः परस्य सस्य लोपः स्याद् ईटि परे। अर्थात् इट् ईट् इत्यनयोः मध्यगतस्य सकारस्य लोपः भवति।



**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण आत् इस् ईत् इति स्थितौ इटः परः सकारः ईटि परतः अस्ति। अतः इट ईटि इति प्रकृतसूत्रेण सस्य लोपे आत् इ ईत् इति स्थितिः जायते। अत्र इकारात् परम् ईकारः अस्ति। तेन च अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घः कर्तव्यः अस्ति। परन्तु इट ईटि (८.२.२८) इति सूत्रम् असिद्धकाण्डीयमस्ति। तेन अकः सवर्णे दीर्घः इति सपादसप्ताध्यायीस्थं सूत्रम् प्रति इट ईटि इति सूत्रम् असिद्धम्। तेन सलोपं न पश्यति। अत **वार्तिकम् - सिज्लोप एकादेशे सिद्धो वाच्यः।** अर्थात् एकादेशः कर्तव्यः चेत् इट ईटि इति एवं सिचः लोपः सिद्धः इति मन्तव्यम्। एवम् आत् इ ईत् इति स्थितौ अकः सर्वणे दीर्घः इति सूत्रं प्रवर्तते। तेन पूर्वपरयोः इकार-ईकारयोः सवर्णदीर्घैकादेशे ईकारे **आतीत्** इति रूपं सिध्यति।

**आतिष्टाम्** - अत्-धातोः पूर्ववत् लुङि प्रथमपुरुषद्विचनविवक्षायां तस्-प्रत्यये तस्य तामादेशे च्लौ च्लेः सिचि इडागमे अङ्गस्य आडागमे वृद्धौ च आत् इस् ताम् इति स्थितिः भवति। तत्र आदेशप्रत्यययोः इति सूत्रेण इणः इकारात् परस्य अपदान्तस्य आदेशभूतस्य सकारस्य मूर्धन्यादेशे आत् इष् ताम् इति स्थिते ष्टुना ष्टुः इति सूत्रेण तकारस्य ष्टुत्वे टकारे आत् इष् टाम् इति जाते वर्णमेलने **आतिष्टाम्** इति रूपं सिध्यति।

**आतिषुः** - पूर्ववत् अत्-धातोः लुङि प्रथमपुरुषबहुवचनविवक्षायां झि-प्रत्यये, च्लौ च्लेः सिचि इडागमे अङ्गस्य आडागमे वृद्धौ च आत् इस् झि इति जायते। तदा -

## [१९.४] सिजभ्यस्तविदिभ्यश्च॥ (३.४.१०९)

**सूत्रार्थः** - सिचोऽभ्यस्ताद् विदेश्च परस्य ङित्संबन्धिनो झेर्जुस्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण जुस् विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। सिजभ्यस्तविदिभ्यः च इति पदच्छेदः। सिजभ्यस्तविदिभ्यः (५/३), च इत्यव्ययम्। नित्यं ङितः इति सूत्रात् ङितः (६/१) इति पदमनुवर्तते। लस्य (६/१) इति अधिकृतम्। झेर्जुस् इति समग्रं सूत्रमनुवर्तते। तत्र झेः (६/१), जुस् (१/१)। सिच् च अभ्यस्तं च विदिश्च सिजभ्यस्तविदयः, तेभ्यः सिजभ्यस्तविदिभ्यः इति इतरेतरयोगद्वन्द्वसमासः। सूत्रार्थो भवति - सिच् अभ्यस्तसंज्ञकम् विद्-धातुः च एभ्यः परस्य ङिद्-लकाराणां झेः जुस् आदेशः भवति।

विदधातुः धातुपाठे पञ्चसु स्थलेषु विद्यते। यथा -

| | |
|---|---|
| १) विद ज्ञाने (अदादिः परस्मैपदी) | वेत्ति वित्तः विदन्ति |
| २) विद सत्तायाम् (दिवादिः आत्मनेपदी) | विद्यते विद्येते विद्यन्ते |
| ३) विद विचारणे (रुधादिः आत्मनेपदी) | विन्ते विन्दाते विन्दते |
| ४) विदॢ लाभे (तुदादिः उभयपदी) | विन्दति/ विन्दते |

५) विद चेतनाख्यानविवासेषु (चुरादिः, आत्मनेपदी) वेदयते

एषु विद ज्ञाने इत्येव धातुः अत्र ग्राह्यः।



**उदाहरणम् -** आतिषुः।

**सूत्रार्थसमन्वयः -** पूर्वसूत्रोक्तप्रकारेण आत् इस् झि इति स्थितौ झिस्थाने सिजभ्यस्तविदिभ्यश्च इति सूत्रेण जुसादेशे अनेकाल्त्वात् सर्वादेशे अनुबन्धलोपे आत् इस् उस् इति स्थिते आदेशप्रत्यययोः इत्यनेन आदेशात्मकस्य सस्य मूर्धन्यादेशे आतिषुस् इति जाते सस्य रुत्वे विसर्गे च **आतिषुः** इति रूपं सिध्यति।

अत-धातोः अन्यानि रूपाणि स्वयमूह्यानि।

अत्-धातोः लुङि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| **अत्+लुङ्** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमपुरुषः** | आतीत् | आतिष्टाम् | आतिषुः |
| **मध्यमपुरुषः** | आतीः | आतिष्टम् | आतिष्ट |
| **उत्तमपुरुषः** | आतिषम् | आतिष्व | आतिष्म |

##  पाठगतप्रश्नाः-१

उपरितनपाठम् अवलम्ब्य अत्र केचित् लघूत्तरीयाः प्रश्नाः दीयन्ते। एतेषाम् उत्तराणि लिखित्वा अन्ते दत्तैः उत्तरैः मेलयत।

१. क्षीयात् इत्यत्र ईकारः दीर्घः केन सूत्रेण।

२. अस्तिसिचोऽपृक्ते इति सूत्रस्यार्थं लिखत।

३. इडीटोः मध्यपातिनः सिचः लुक् केन सूत्रेण।

४. अत्-धातोः लुङि तिपि अत् इ स् ईत् इति स्थिते सिज्लोपः केन सूत्रेण।

५. आतिषुः इत्यत्र झेर्जुस् केन सूत्रेण।

६. क्षीयात् इति कस्मिन् लकारे रूपम्।

१) विधिलिङ् २) लृट् ३) आशीर्लिङ् ४) लट्

७. अत्-धातोः लुङि इदं रूपं नास्ति।

१) आतिषुः २) आतीत् ३) आतीषुः ४) आतीः

८. कति विद्-धातवः सन्ति।

१) ३ २) ४ ३) ५ ४) ६



## [१९.५] सिचि वृद्धिः परस्मैपदेषु॥ (७.२.१)

**सूत्रार्थः** - इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण वृद्धिः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। सिचि (७/१), वृद्धिः (१/१), परस्मैपदेषु (७/३)। अङ्गस्य (६/१) इति अधिकृतम्। साक्षात् स्थानी न निर्दिष्टः किञ्च वृद्धिः इति विधेयपरं वृद्धिपदम् उच्चार्य वृद्धिः विधीयते। अतः इको गुणवृद्धी इति परिभाषया इकः इति षष्ठ्यन्तं पदमत्रोपस्थाप्यते। प्रत्यये परे एव अङ्गसंज्ञा उपपन्ना। अतः प्रत्यये इति सप्तम्यन्तम् पदम् आक्षिप्यते। इदम् अङ्गाक्षिप्तम् इति कथ्यते। तस्य प्रत्ययेषु इति सप्तमीबहुवचनान्ततया विपरिणामः क्रियते। तदा पदयोजना भवति - इकः अङ्गस्य वृद्धिः सिचि परस्मैपदेषु प्रत्ययेषु इति।

अत्र इकः अङ्गस्य चेति समानविभक्तिकं पदद्वयम् अस्ति। अङ्गस्य इति पदं विशेष्यम् अस्ति, इकः इति पदम् तस्य विशेषणम् अस्ति। अतः येन विधिस्तदन्तस्य इत्यनेन तदन्तविधिना इगन्ताङ्गस्य इत्यर्थः लभ्यते। इगन्ताङ्गस्य इत्यत्र अल्समुदायबोधकात् स्थानषष्ठी श्रूयते। एवञ्च आदेशः वृद्धिः एकाल् अस्ति। अतः अलोऽन्त्यस्य इति परिभाषया इगन्ताङ्गस्य अन्त्यस्य इकः वृद्धिः भवति। ततश्च सूत्रार्थो भवति – परस्मैपदप्रत्यये परतः सिचि परे इगन्ताङ्गस्य अन्त्यस्य अलः स्थाने वृद्धिः स्यात् इति। अत्र इगन्ताङ्गस्य अन्त्यः अल् इक् एव। अतः इकः स्थाने एव वृद्धिः भवति। एवञ्च यदा इगन्ताङ्गम् + सिच् + परस्मैपदम् इति स्थितिः स्यात् तदा इगन्ताङ्गस्य वृद्धिः स्यात्।

**उदाहरणे सूत्रार्थसमन्वयः** - क्षयार्थकात् क्षिधातोः लुङि तिपि इतश्च इति इलोपे च्लिप्रत्यये च्लेः सिचि क्षि स् त् इति स्थितिर्जायते। ततश्च लुङ्-लङ्-लृङ्क्ष्वडुदात्तः इति सूत्रेण अङ्गस्य अडागमे आर्धधातुकस्येड् वलादेः इत्यनेन सिचः इडागमे प्राप्ते क्षिधातोः उपदेशे अनुदात्तत्वात् एकाच उपदेशेऽनुदात्तात् इत्यनेन इडागमनिषेधे अक्षि स् त् इति स्थितिः जायते। अत्र विद्यमानात् सिचः परस्य अपृक्तस्य अस्तिसिचोऽपृक्ते इति सूत्रेण ईडागमे अक्षि स् ईत् इति स्थितिः जायते। तत्र सिचः आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन सूत्रेण इगन्ताङ्गस्य गुणः प्राप्तः। अत्र इगन्ताङ्गम् अक्षि, ततः सिच्, ततः परस्मैपदम् च अस्ति। अतः सिचि वृद्धिः परस्मैपदेषु इति सूत्रेण इगन्ताङ्गस्य अन्त्यस्य इकः इकारस्य वृद्धौ स्थानत आन्तर्याद् ऐकारे अक्षै स् ईत् इति स्थिते आदेशप्रत्यययोः इत्यनेन सस्य मूर्धन्यादेशे **अक्षैषीत्** इति रूपं सिध्यति।

क्षि-धातोः लुङि रूपाणि अधः चतुरश्रे प्रदर्शितानि -

| क्षि+लुङ् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| **प्रथमपुरुषः** | अक्षैषीत् | अक्षैष्टाम् | अक्षैषुः |
| **मध्यमपुरुषः** | अक्षैषीः | अक्षैष्टम् | अक्षैष्ट |
| **उत्तमपुरुषः** | अक्षैषम् | अक्षैष्व | अक्षैष्म |



### [१९.६] वदव्रजहलन्तस्याचः॥ (७.२.३)

**सूत्रार्थः** - वद-व्रज-हलन्तानाम् अचो वृद्धिः सिचि परस्मैपदेषु।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण वृद्धिः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। वद-व्रज-हलन्तस्य (६/१), अचः ६/१)। सिचि वृद्धिः परस्मैपदेषु इति सूत्रात् सिचि (७/१), वृद्धिः (१/१), परस्मैपदेषु (७/३) इति त्रीणि अपि पदानि अनुवर्तन्ते। अङ्गस्य (६/१) इति अधिकृतम्। वदश्च व्रजश्च हलन्तश्च वदव्रजहलन्तम् इति समाहारद्वन्द्वसमासः। तस्य वदव्रजहलन्तस्याचः इति। वद व्रज इत्यनयोः अन्त्यः अकारः मुखसुखार्थः। अङ्गाक्षिप्तम् प्रत्यये इत्यस्य प्रत्ययेषु इति सप्तमीबहुवचनान्ततया विपरिणामः भवति। सूत्रार्थो भवति - वदधातोः व्रजधातोः हलन्तस्य च अङ्गस्य अचः स्थाने वृद्धिः भवति सिचि परस्मैपदेषु प्रत्ययेषु। इयं वृद्धिः हलन्तलक्षणा वृद्धिः कथ्यते।

**वदव्रजयोः सूत्रे उपादानस्य प्रयोजनम्** - वस्तुतस्तु हलन्तस्य अचः वृद्धिः इत्यनेनैव वद् व्रज् इति अनयोः हलन्तधात्वोः अपि वृद्धिः स्यात्। अतः सूत्रे तयोः पृथक् ग्रहणस्य किं कारणम्। तत्रोच्यते - इयं वृद्धिः सिच् इडादिः अस्ति चेत्, इडादिः नास्ति चेदपि भवति। परन्तु अग्रे नेटि इति सूत्रेण इडादौ सिचि हलन्तस्य अचः वृद्धेः निषेधः भवति। वद् व्रज् द्वौ अपि सेटौ। अतः तत्र इडादिः सिच् लभ्यते। तेन नेटि इति सूत्रेण वृद्धिनिषेधः प्रसज्यते। परन्तु वद् व्रज् इत्यनयोः धात्वोः वृद्धिरेव इष्टा न तु वृद्धिनिषेधः। अतः सूत्रे द्वयोः विशेषतया ग्रहणं कृतं पाणिनिना। तेन च तयोः वृद्धिः निर्बाधा भवति। अतः वदव्रजयोः नेटि इत्यनेन वृद्धिनिषेधस्य वारणं तयोः उपादानस्य प्रयोजनम्।

--

**कटेँ वर्षावरणयोः**। अस्य एकारः उपदेशेऽजनुनासिक इत् इत्यनेन इत्संज्ञकः अस्ति। अतः अयम् एदित् धातुः। कट् इति शिष्यते। तथापि मुखसुखार्थः अकारप्रश्लेषः क्रियते। तेन बहुत्र कट इति अकारान्तत्वेन प्रकटितो दृश्येत। कटति। चकाट। कटिता। कटिष्यति। कटतु। अकटत्। कटेत्। कट्यात्। इति पूर्वलकारेषु प्रतीकरूपाणि सन्ति।

**उदाहरणे सूत्रार्थसमन्वयः** - कट्-धातोः लुङि

वर्षावरणयोः विद्यमानाद् कट्-धातोः लुङि तिपि इतश्च इति इलोपे च्लिप्रत्यये च्लेः सिचि कट् स् त् इति स्थितिर्जायते। ततश्च लुङ्-लङ्-लृङ्क्ष्वडुदात्तः इति सूत्रेण अङ्गस्य अडागमे आर्धधातुकस्येड् वलादेः इत्यनेन सिचः इडागमे अकट् इस् त् इति स्थितिः जायते। अत्र विद्यमानात् सिचः परस्य अपृक्तस्य हलः तिपः तकारस्य अस्तिसिचोऽपृक्ते इति सूत्रेण ईडागमे अकट् इस् ईत् इति स्थितिः जायते। अत्र हलन्तम् अकट् इति, ततः इट्सहितः सिच्, ततः परस्मैपदम् च अस्ति। अतः वदव्रजहलन्तस्याचः इति सूत्रेण अचः ककारोत्तरस्य अकारस्य स्थाने वृद्धिः प्राप्ता। तदा -



## [१९.७] नेटि॥ (७.२.४)

**सूत्रार्थः** - इडादौ सिचि हलन्तस्य वृद्धिर्न।

**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अनेन सूत्रेण वृद्धिः निषिध्यते। अस्मिन् सूत्रे द्वे पदे स्तः। न इत्यव्ययम्, इटि (७/१)। वदव्रजहलन्तस्याचः इति सूत्रात् हलन्तस्य (६/१) इति पदमायाति। सिचि वृद्धिः परस्मैपदेषु इति सूत्रात् सिचि (७/१), वृद्धिः (१/१), परस्मैपदेषु (७/३) इति त्रीणि अपि पदानि अनुवर्तन्ते। अङ्गस्य (६/१) इति अधिकृतम्। अङ्गाक्षिप्तम् प्रत्यये इत्यस्य प्रत्ययेषु इति सप्तमीबहुवचनान्ततया विपरिणामः भवति। पदयोजना - इटि सिचि परस्मैपदेषु प्रत्ययेषु हलन्तस्य अङ्गस्य वृद्धिः न। इटि सिचि इति सप्तम्यन्तं पदद्वयम्। एवञ्च इट् इति अल्बोधकात् शब्दात् सप्तमी श्रूयते। तेन तदादिविधिः भवति। एवञ्च इडादौ सिचि इत्यर्थो लभ्यते। ततश्च सूत्रार्थो भवति - इडादौ सिचि परस्मैपदेषु प्रत्ययेषु हलन्तस्य अङ्गस्य वृद्धिः न भवति। अर्थात् एवं स्थितौ हलन्तलक्षणा वृद्धिः निषिध्यते।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण अकट् इस् ईत् इति स्थितौ हलन्तलक्षणा वृद्धिः प्राप्ता। परन्तु अत्र सिच् इडादिः अस्ति। अत एव नेटि इति सूत्रेण वृद्धिनिषेधः प्राप्तः। तदा -

## [१९.८] अतो हलादेर्लघोः॥ (७.२.७)

**सूत्रार्थः** - हलादेः लघोः अकारस्य वृद्धिर्वा इडादौ परस्मैपदे सिचि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण विकल्पेन वृद्धिः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अतः (६/१) हलादेः (६/१), लघोः (६/१)। नेटि इति सूत्रात् नेटि (७/१) इति पदमनुवर्तते। सिचि वृद्धिः परस्मैपदेषु इति सूत्रात् सिचि (७/१), वृद्धिः (१/१), परस्मैपदेषु (७/३) इति त्रीणि अपि पदानि अनुवर्तन्ते। ऊर्णोतेर्विभाषा इति सूत्रात् विभाषा (१/१) इति पदमायाति। अङ्गस्य (६/१) इति अधिकृतम्। अङ्गाक्षिप्तम् प्रत्यये इत्यस्य प्रत्ययेषु इति सप्तमीबहुवचनान्ततया विपरिणामः भवति। पदयोजना - इटि सिचि परस्मैपदेषु प्रत्ययेषु हलादेः अङ्गस्य लघोः अतः वृद्धिः विभाषा। इटि सिचि इत्यत्र तदादिविधिना इडादौ सिचि इत्यर्थो लभ्यते। ततश्च सूत्रार्थो भवति - इडादौ सिचि परस्मैपदेषु प्रत्ययेषु हलादेः अङ्गस्य लघोः अकारस्य स्थाने विकल्पेन वृद्धिः भवति।

ह्रस्वं लघु इति सूत्रेण लघुसंज्ञा विधीयते। एवञ्च संयोगे परे असति पूर्वः ह्रस्वः लघुसंज्ञकः भवतीति सारः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण अकट् इस् ईत् इति स्थितौ हलन्तलक्षणा वृद्धिः प्राप्ता। परन्तु नेटि इति सूत्रेण वृद्धिनिषेधः प्राप्तः। अत्र हलादि अङ्गम् अस्ति, ककारोत्तरः अकारः लघुसंज्ञकः अस्ति। इडादिः सिच् च परे अस्ति। अतः अतो हलादेर्लघोः इति सूत्रेण लघोरकारस्य विकल्पेन वृद्धिः प्राप्ता। तदा -



## [१९.९] हम्यन्त-क्षणश्वसजागृ-णिश्व्येदिताम्॥ (७.२.५)

**सूत्रार्थः** - हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि।

**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अनेन सूत्रेण वृद्धिनिषेधो विधीयते। अस्मिन् सूत्रे हम्यन्त-क्षणश्वसजागृ-णिश्व्येदिताम् ६/३) इति एकम् पदम्। ह् च म् च य् च इति हम्यः इति इतरेतरयोगद्वन्द्वसमासः। हम्यन्तो येषां ते हम्यन्ताः इति बहुव्रीहिसमासः। एत् इत् यस्य स एदित् इति बहुव्रीहिसमासः। हम्यन्ताः च क्षण् च श्वस् च जागृ च णिश्च श्विश्च एदित् चेति हम्यन्तक्षणश्वसजागृणिश्व्येदितः, तेषाम् इति इतरेतरयोगद्वन्द्वसमासः। अत्र णि इति प्रत्ययग्रहणेन प्रत्ययग्रहणे तदन्तग्रहणम् इति परिभाषया तदन्तविधिना ण्यन्तस्य ग्रहणं भवति। सिचि वृद्धिः परस्मैपदेषु इति सूत्रात् सिचि (७/१), वृद्धिः (१/१), परस्मैपदेषु (७/३) इति त्रीणि अपि पदानि अनुवर्तन्ते। अङ्गस्य (६/१) इति अधिकृतम्। तस्य षष्ठीबहुवचनान्ततया विपरिणामो भवति। अङ्गाक्षिप्तम् प्रत्यये इत्यस्य प्रत्ययेषु इति सप्तमीबहुवचनान्ततया विपरिणामः भवति। तदा सूत्रार्थो भवति - हमयान्तस्य क्षणधतोः श्वसधातोः जागृधातोः ण्यन्तस्य श्वयतेः एदितश्च अङ्गस्य वृद्धिः न इडादौ सिचि परस्मैपदेषु प्रत्ययेषु परेषु। अर्थात् येषाम् अङ्गानाम् अन्ते हकारः मकारः यकारः क्षण् श्वस् जागृ ण्यन्तधातुः श्विधातुः एदित् धातुः चास्ति तस्य अङ्गस्य वृद्धिः न भवति यदि परतः इडादिः सिच् परस्मैपदे परे स्यात्।

**उदाहरणम्** - अकटीत्।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण अकट् इस् ईत् इति स्थितौ अतो हलादेर्लघोः इति सूत्रेण लघोरकारस्य विकल्पेन वृद्धिः प्राप्ता। तत्र कटेँ इति धातुः एदित्। अतः हम्यन्त-क्षणश्वसजागृ-णिश्व्येदिताम् इति सूत्रेण वृद्धिः निषिध्यते। तत्र इट ईटि इति सूत्रेण इटः परस्य ईटि परतः सस्य लोपे सिज्लोप एकादेशे सिद्धो वाच्यः इति वार्तिकेन सिज्लोपस्य सिद्धत्वात् अकट् इ ईत् इति स्थितौ अकः सवर्णे दीर्घः इति सूत्रेण ईकारैकारयोः स्थाने ईकाररूपसवर्णदीर्घैकादेशे **अकटीत्** इति रूपं सिध्यति।

कट्-धातोः लुङि रूपाणि अधः तालिकायां सन्ति।

| कट्+लुङ् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| **प्रथमपुरुषः** | अकटीत् | अकटिष्टाम् | अकटिषुः |
| **मध्यमपुरुषः** | अकटीः | अकटिष्टम् | अकटिष्ट |
| **उत्तमपुरुषः** | अकटिषम् | अकटिष्व | अकटिष्म |

### अयमत्र वृद्धिसंग्रहः -

इडादिः सिच् अनिडादिः वा सिच् भवतु - सिचि वृद्धिः परस्मैपदेषु इत्यनेन इगन्ताङ्गस्य वृद्धिः विधीयते।



तथैव हलन्तानामपि धातूनाम् अचः वृद्धिः वदव्रजहलन्तस्याचः इति सूत्रेण विधीयते। तत्रापि इडादिः सिच् अनिडादिः वा सिच् भवतु - हलन्तलक्षणा वृद्धिः विहिता।

इडादौ सिचि परस्मैपदेषु हलन्तलक्षणा वृद्धिः नेटि इति सूत्रेण निषिध्यते। हलादेः लघोः अकारस्य विकल्पेन वृद्धि अतो हलादेर्लघोः इति सूत्रेण भवति। नेटि इत्यनेन सस्य निषेधः प्राप्तः तद् यदि हलादि लघ्वकारवत् स्यात् तर्हि तस्य वृद्धिविकल्पः अतो हलादेर्लघोः इति सूत्रेण विधीयते।

एवम् केषाञ्चित् इगन्तलक्षणा, हलन्तलक्षणा च वृद्धिः विधीयते। पुनः इडादौ सिचि हलन्तलक्षणा वृद्धिः निषिध्यते। केषाञ्चिद् विकल्पेन वृद्धिः फलति। एतेष्वपि येषाम् अङ्गानाम् अन्ते हकारः मकारः यकारः क्षण् श्वस् जागृ ण्यन्तधातुः श्विधातुः एदित् धातुः चास्ति तेषाम् अङ्गानाम् वृद्धिः ह्म्यन्त-क्षणश्वसजागृ-णिश्व्येदिताम् इति सूत्रेण निषिध्यते।

तत्र 'हलन्तस्य अचः' इत्यनेनैव वदव्रजयोः धात्वोः वृद्धिः सिद्ध्यति। तथापि पृथग् उपादानम् सप्रयोजनम्। नेटि इति सूत्रेण इडादौ सिचि हलन्तस्य वृद्धिः निषिद्ध्यते। तेन वदव्रजयोः अपि सेट्त्वात् वृद्धिनिषेधः प्राप्तः। अतो हलादेर्लघोः इत्यनेन विकल्पेन हलादेः लघोः अतः वृद्धिः भवति। तेन वदव्रजयोः अपि विकल्पेन वृद्धौ प्राप्तायां वदव्रजहलन्तस्याचः इति सूत्रे उपादानम्। तेन तयोः नित्यं वृद्धिर्भवति।

## [१९.१०] पुषादिद्युताद्यॢदितः परस्मैपदेषु॥ (३.१.५५)

**सूत्रार्थः** - श्यन्विकरणपुषादेः द्युतादेः ॢदितश्च च्लेः अङ् परस्मैपदेषु।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण अङ् विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। पुषादिद्युताद्यॢदितः (५/१), परस्मैपदेषु (७/१)। पुष आदिः येषां ते पुषादयः इति बहुव्रीहिसमासः। द्युत् आदिः येषां ते द्युतादयः इति बहुव्रीहिसमासः। ॡत् इत् यस्य स ॢदित् इति बहुव्रीहिसमासः। पुषादयश्च द्युतादयश्च ॢदित् च एषां समाहारः पुषादिद्युताद्यॢदित् इति समाहारद्वन्द्वसमासः। तस्मात् पुषादिद्युताद्यॢदितः। च्लेः सिच् इति सूत्रात् च्लेः (६/१) इति पदमनुवर्तते। अस्यतिवक्तिख्यातिभ्योऽङ् इति सूत्रात् अङ् (१/१) इति पदमनुवर्तते। सूत्रार्थो भवति - पुषादेः द्युतादेः ॢदितः च धातोः परे च्लिस्थाने अङ् आदेशः स्यात् परस्मैपदे परे।

पुषादयः धातवः भ्वादिगणे दिवादिगणे क्र्यादिगणे चुरादिगणे च पठिताः सन्ति। परन्तु व्याख्यानाधारणे केवलं श्यन्विकरणाः दिवादिगणीयाः धातव एव गृह्यन्ते।

**उदाहरणम्** - अगमत्।

**सूत्रार्थसमन्वयः** - गमॢ गतौ इति ॢदितः गत्यर्थकाद् गम्धातोः लुङि एकवचनविवक्षायाम् तिपि च्लि लुङि इति शबपवादत्वेन च्लिप्रत्यये च्लेः सिच् इति सिचि प्राप्ते गम्-धातोः ॢदित्त्वात् पुषादिद्युताद्यॢदितः परस्मैपदेषु इति सूत्रेण सिजपवादत्वेन अङ्-प्रत्यये ङकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति लोपे च कृते गम् अ ति इति स्थिते इतश्च इति इकारलोपे लुङ्-लङ्-

लृङ्क्ष्वड्डुदात्तः इति सूत्रेण अङ्गस्य अडागमे आद्यवयवे अगम् अ त् इति स्थिते वर्णमेलने **अगमत्** इति रूपं सिध्यति।

**गम्-धातोः लुङि रूपाणि - अगमत् अगमताम् अगमन्। अगमः अगमतम् अगमत। अगमम् अगमाव अगमाव।**

अधः केचिद् धातवः दीयन्ते। तेषां रूपाणि एतावता अतिक्रान्तानि कानिचन सूत्राणि प्रयुज्य कर्तुं शक्यानि। तानि रूपाणि अभ्यासाय छात्रेण साधनीयानि।

१) **पठ** व्यक्तायां वाचि -

(वृद्ध्यभावपक्षे) **अपठीत् अपठिष्टाम् अपठिषुः। अपठीः अपठिष्टम् अपठिष्ट। अपठीषम् अपठिष्व अपठिष्म।**

(वृद्धिपक्षे) **अपाठीत् अपाठिष्टाम् अपाठिषुः। अपाठीः अपाठिष्टम् अपाठिष्ट। अपठीषम् अपाठिष्व अपाठिष्म।**

२) **जप** व्यक्तायां वाचि - (वृद्ध्यभावपक्षे) **अजपीत् अजपिष्टाम् अजपिषुः। अजपीः अजपिष्टम् अजपिष्ट। अजपीषम् अजपिष्व अजपिष्म।**

(वृद्धिपक्षे) **अजापीत् अजापिष्टाम् अजापिषुः। अजापीः अजापिष्टम् अजापिष्ट। अजपीषम् अजापिष्व अजापिष्म।**

३) **गद** व्यक्तायां वाचि - (वृद्ध्यभावपक्षे) **अगदीत् अगदिष्टाम् अगदिषुः। अगदीः अगदिष्टम् अगदिष्ट। अगदिषम् अगदिष्व अगदिष्म।**

(वृद्धिपक्षे) **अगादीत् अगादिष्टाम् अगादिषुः। अगादीः अगादिष्टम् अगादिष्ट। अगदीषम् अगादिष्व अगादिष्म।**

४) **टु नदिँ** समृद्धौ - **अनन्दीत् अनन्दिष्टाम् अनन्दिषुः। अनन्दीः अनन्दिष्टम् अनन्दिष्ट। अनन्दिषम् अनन्दिष्व अनन्दिष्म।**

५) **व्रज** गतौ - **अव्राजीत् अव्राजिष्टाम् अव्राजिषुः। अव्राजीः अव्राजिष्टम् अव्राजिष्ट। अव्राजीषम् अव्राजिष्व अव्राजिष्म।**



## पाठगतप्रश्नाः-२

उपरितनपाठम् अवलम्ब्य अत्र केचित् लघूत्तरीयाः प्रश्नाः दीयन्ते। एतेषाम् उत्तराणि लिखित्वा अन्ते दत्तैः उत्तरैः मेलयत।

९. इडादौ सिचि परस्मैपदपरे इगन्ताङ्गस्य वृद्धिः केन सूत्रेण।

१०. अनिडादौ सिचि परस्मैपदपरे इगन्ताङ्गस्य वृद्धिः केन सूत्रेण।





११. अनिडादौ सिचि परस्मैपदपरे अदन्ताङ्गस्य वृद्धिः केन सूत्रेण।

१२. इडादौ सिचि परस्मैपदपरे हलन्तस्य अचः वृद्धिः कस्य धातोः।

१३. सिचि वृद्धिः परस्मैपदेषु इत्यस्य अपवादः कः।

१४. इडादौ सिचि परस्मैपदपरे हलन्तस्य अचः वृद्धिः केन सूत्रेण निषिध्यते।

१५. नेटि इत्यनेन कृतस्य वृद्धिनिषेधस्य नित्यापवादः किं सूत्रम्।

१६. कट्-धातोः अर्थं लिखत।

१७. अगमत् इत्यत्र च्लेः अङ् केन सूत्रेण।

१८. अगमत् इति रूपं गम्-धातोः कस्मिन् लकारे।

१) लङ् २) लुङ् ३) लृङ् ४) लुट्

१९. अगमत् इति रूपे च्लेः स्थाने किं भवति।

१) अङ् २) चङ् ३) सिच् ४) सक्

२०. अकटीत् इति रूपे च्लेः स्थाने किं भवति।

१) अङ् २) चङ् ३) सिच् ४) सक्



## पाठसारः

अस्मिन् पाठे लिङ्-लकारस्य लुङ्-लकारस्य च चितानि सूत्राणि एव उपन्यस्तानि। तत्रादौ अकृत्सार्वधातुकयोर्दीर्घः इति सूत्रं यादौ प्रत्यये परे अजन्ताङ्गस्य अन्त्यस्य दीर्घं विदधाति। अयं दीर्घः कृत्प्रत्यये परे, सार्वधातुकप्रत्यये परे च न भवति। तेन क्षीयात् इत्यादिरूपं सिध्यति।

लुङि लकारे परतः विद्यमानात् सिचः परस्य, अस्-धातोश्च परस्य अपृक्तस्य हलः ईडागमः अस्तिसिचोऽपृक्ते इति सूत्रेण विधीयते। इडीटोः मध्ये यदि सिच् स्यात् तस्य लोपः इट ईटि इति सूत्रेण भवति। सिज्लोप एकादेशे सिद्धो वाच्यः इति वार्तिकेन सिज्लोपस्य सिद्धत्वात् अकः सवर्णे दीर्घः इति सूत्रं प्रवर्तते। लुङि सिचः परस्य झेर्जुस् सिजभ्यस्तविदिभ्यश्च इति सूत्रेण विधीयते। एवं विविधानि कार्याणि अस्मिन् पाठे प्रदर्शितानि।



## पाठान्तप्रश्नाः

१. अकृत्सार्वधातुकयोर्दीर्घः इति सूत्रं व्याख्यात।

२. अस्तिसिचोऽपृक्ते इति सूत्रं व्याख्यात।

३. ससूत्रं रूपाणि साधयत – क्षीयात्, क्षीयास्ताम्,क्षीयासुः। आतीः, आतीत्, आतिषुः, आतिष्टाम्।

४. सिचि वृद्धिः परस्मैपदेषु इति सूत्रं व्याख्यात।

५. वदव्रजहलन्तस्याचः इति सूत्रं व्याख्यात।

६. अतो हलादेर्लघोः इति सूत्रं व्याख्यात।

७. लिङि सिचि वृद्धिप्रकरणस्य सारं संगृह्णीत।

८. ससूत्रं रूपाणि साधयत – अकटीत्, कटिष्टाम्, कटीः, अकटीष्म ।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि- १**

१. अकृत्सार्वधातुकयोर्दीर्घः।

२. विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः।

३. इट ईटि।

४. इट ईटि।

५. सिजभ्यस्तविदिभ्यश्च।

६. ३

७. ३

८. ३

**उत्तराणि- २**

९. सिचि वृद्धिः परस्मैपदेषु।

१०. सिचि वृद्धिः परस्मैपदेषु।

११. न केनापि सूत्रेण।

१२. वद् व्रज् हान्तः मान्तः यान्तः क्षण् श्वस् एदित् एषां धातूनाम्।

१३. ह्म्यन्त-क्षणश्वसजागृ-णिश्व्येदिताम् इत्यत्रस्थः जागृधातुः ण्यन्तधातुः श्विश्च।



१४. नेटि।

१५. ह्म्यन्त-क्षणश्वसजागृ-णिश्व्येदिताम्।

१६. वर्षावरणयोः कट् धातुः वर्तते।

१७. पुषादिद्युताद्यॢदितः परस्मैपदेषु।

१८. २

१९. १

२०. ३

॥इति नवदशः पाठः॥





# २०

# भ्वादिप्रकरणे आत्मनेपदप्रकरणम्

## प्रस्तावना

धातुः परस्मैपदात्मनेपदभेदेन द्विविध इति पूर्वस्मिन् पाठे अस्माभिः आलोचितम्। परस्मैपदिनां केषाञ्चिद् धातूनां पाठः पूर्वं कृतः। अस्मिन् पाठे अस्माभिः आत्मनेपदिनः एध्-धातोः पाठः उपादीयते। अयं नायकधातुरस्ति। अस्य सर्वेषु लकारेषु रूपाणि प्रदर्शयिष्यन्ते। तज्ज्ञाने आत्मनेपदिनां बहूनां धातूनां रूपाणि साधयितुं शक्यन्ते। आत्मनेपदत्वात् पूर्वप्रकरणपठितानि सूत्राणि विहाय अपि भिन्नानां केषाञ्चन सूत्राणाम् आवश्यकता भवति। अत्र पाठान्तर्भावितानि एतान्येव सूत्राणि सर्वत्र आत्मनेपदधातुषु उपयोगाय कल्पन्ते। अत्रापि पूर्ववत् सूत्रव्याख्यायां प्रत्येकं पदानां किं विभक्तिसमासादिकम् अस्ति। अत्र (१/१) इति प्रकारेण प्रदत्तमस्ति। एतस्यार्थः प्रथमायाम् एकवचने अस्तीति तत्र तत्र बोद्धव्यम्।



## उद्देश्यानि

एतं पाठं पठित्वा भवान् -

- तिङन्तप्रकरणस्य आत्मनेपदप्रकरणस्थानि सूत्राणि बुध्यात्।
- धातोः परम् आत्मनेपदप्रत्ययस्य प्रयोगे क्षमः भवेत्।
- एध्-धातुवत् अन्यधातुरूपाणि साधयितुं योग्यः भवेत्।
- सूत्राणि व्याख्यातुम् अर्हः भवेत्।
- आत्मनेपदधातूनां रूपाणि वैशिष्ट्यानि च जानीयात्।
- आत्मनेपदधातूनां रूपाणि स्वस्य भाषायाम् प्रक्रियाज्ञानपुरःसरं व्यवहर्तुं कुशलः भवेत्।

## एध्-धातोः लटि रूपाणि

एधँ वृद्धौ इत्याकारेण धातुरयं धातुप्रकरणे पठितोऽस्ति। तेन वृद्ध्यर्थकः अयं धातुः इति। अयं धातुः अनुदात्तेत्। अत एव अनुदात्तङित आत्मनेपदम् इत्यनेन सूत्रेण आत्मनेपदी। अस्य धातोः वैशिष्ट्यानि तावत् अयं धातुः भ्वादिगणपठितः वृद्ध्यर्थवाची आत्मनेपदी अकर्मकः अनुदात्तेत् सेट् इति।



## [२०.१] टित आत्मनेपदानां टेरे॥ (३.४.७९)

**सूत्रार्थः** - टितो लस्य आत्मनेपदानां टेरेत्वम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सूत्रेऽस्मिन् चत्वारि पदानि सन्ति। टितः(६/१), आत्मनेपदानाम् (६/३), टेः(६/१), ए (१/१) इति पदच्छेदः। लस्य इति अधिकृतम्। अचोऽन्त्यादि टि इति सूत्रेण टिसंज्ञा विधीयते। सूत्रार्थो भवति - टित्-लकाराणां स्थाने विहितानाम् आत्मनेपदसंज्ञकानां टेः स्थाने एकारः भवति। दशलकारेषु टित्-लकाराः षट् सन्ति। ते हि लट् लिट् लुट् लृट् लेट् लोट्। एतेषु लकारेषु यदा रूपाणि भवन्ति तदा अनेन सूत्रेण टेः एकारो भवति।

**उदाहरणम्** - एधते।

**सूत्रार्थसमन्वयः** - वृद्ध्यर्थकाद् एध्-धातोः वर्तमाने लट् इति सूत्रेण लटि एध्-धातोः अनुदात्तेत्त्वात् अनुदात्तङित आत्मनेपदम् इत्यनेन आत्मनेपदसंज्ञकेषु प्रत्ययेषु प्राप्तेषु प्रथमपुरुषैकवचनविवक्षायाम् एध् त इति स्थिते तप्रत्ययस्य तिङ्त्वेन धातोरिति विहितत्वाच्च कर्तरि शप् इत्यनेन धातोः शपि अनुबन्धलोपे एध् अ त इति स्थितिः जायते। अत्र त इति आत्मनेपदम् टितः लकारस्य स्थाने विहितम् अस्ति। अतः प्रकृतसूत्रेण तप्रत्ययस्य टेः अकारस्य स्थाने एकारो भवति तेन **एधते** इति रूपं सिध्यति।

**एधेते** - एध्- धातोः लटि प्रथमद्विवचनविवक्षायाम् आत्मनेपदसंज्ञके आताम्-प्रत्यये कर्तरि शपि अनुबन्धलोपे एध् अ आताम् इति स्थितिः जाता। तदा -

## [२०.२] आतो ङितः॥ (७.२.८१)

**सूत्रार्थः** - अतः परस्य ङितामाकारस्य इय् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। आतः (६/१), ङितः (६/१) इति पदद्वयात्मकं सूत्रमिदम्। अतः (५/१), इयः (१/१) इति पदद्वयम् अतो येयः इति सूत्रादनुवर्तते। ङकारः इत् यस्य स ङित्। अङ्गस्य इति सूत्रस्य अधिकार आयाति। अङ्गस्य इति पदम् पञ्चम्यन्ततया विपरिणमते। पदयोजना - अतः अङ्गात् ङितः आतः इय्। अतः इति पदम् अङ्गात् इत्यस्य विशेषणम्। तेन अदन्तात् अङ्गात् इत्यर्थो लभ्यते। सूत्रार्थो भवति - अदन्ताद् अङ्गात् परस्य ङिताम् आकारस्य स्थाने इय् भवति। अत्र आताम् इत्यादिप्रत्ययानाम् स्वयं ङित्त्वं नास्ति। तथापि सार्वधातुकमपित् इत्यनेन सूत्रेण तेषां ङित्त्वम् विधीयते।

**उदाहरणम्** - एधेते।

**सूत्रार्थसमन्वयः** - एध् अ आताम् इति स्थिते सार्वधातुकमपित् इत्यनेन सूत्रेण आतामः ङित्त्वे आतो ङितः इति सूत्रेण आतामः आकारस्य इय् इत्यादेशे एध् अ इय् ताम् इति स्थिते लोपो व्योर्वलि इति सूत्रेण इयः अवयवस्य यकारस्य लोपो भवति। ततः अकारस्य इकारस्य च स्थाने गुणैकादेशे एकारे एधेताम् इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण टेः एत्वे **एधेते** इति रूपं सिध्यति।



**एधन्ते** - एध्-धातोः लटि प्रथमपुरुषबहुवचने झ-प्रत्यये झोऽन्तः इत्यनेन अन्तादेशे कर्तरि शप् इति शपि एध् अ अन्त इति स्थिते अतो गुणे इत्यनेन अकाराकारयोः स्थाने पररूपैकादेशे अकारे टित आत्मनेपदानां टेरे इति सूत्रे टेः अन्त इत्यस्य तकारोत्तरस्य अकारस्य एत्वे **एधन्ते** इति रूपं सिध्यति।

**एधसे** - एध्-धातोः लटि मध्यमपुरुषैकवचने थास्-प्रत्यये एध् थास् इति स्थितिः जाता। तदा -

## [२०.३] थासः से॥ (३.४.८०)

**सूत्रार्थः** - टितो लस्य थासः से स्यात्।

**सूत्रव्याख्या** - विधिसूत्रम्। सूत्रेऽस्मिन् थासः (६/१) इति से (१/१) इति द्वे पदे स्तः। टित आत्मनेपदानां टेरे इति सूत्रात् टितः (६/१) इति पदमनुवर्तते। लस्य इत्यधिकृतम्। सूत्रार्थो भवति - टिल्लकारस्य स्थाने आदिष्टः यः थास् तस्य स्थाने से इति आदेशः स्यादिति। से इत्यादेशस्य अनेकाल्त्वात् से सर्वादेशो भवति।

**उदाहरणम्** - एधसे।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण एध् थास् इति स्थिते थासः से इत्यनेन सूत्रेण थासः स्थाने से अनेकाल्त्वात् सर्वादेशे कर्तरि शप् इति शपि एध् अ से इति स्थिते वर्णमेलने **एधसे** इति रूपं सिध्यति।

**एधेथे** - एध्- धातोः लटि मध्यमपुरुषद्विवचनविवक्षायाम् आत्मनेपदसंज्ञके आथाम्-प्रत्यये कर्तरि शपि अनुबन्धलोपे एध् अ आथाम् इति स्थितिः जाता। तत्र सार्वधातुकमपित् इत्यनेन सूत्रेण आथामः ङित्त्वे आतो ङितः इति सूत्रेण आथामः आकारस्य इय् इत्यादेशे एध् अ इय् थाम् इति स्थिते लोपो व्योर्वलि इति सूत्रेण इयः अवयवस्य यकारस्य लोपो भवति। ततः अकारस्य इकारस्य च स्थाने गुणैकादेशे एकारे एधेथाम् इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण टेः एत्वे **एधेथे** इति रूपं सिध्यति।

**एधध्वे** - एध्-धातोः लटि मध्यमपुरुषबहुवचने ध्वम्-प्रत्यये कर्तरि शप् इति शपि एध् अ ध्वम् स्थिते टित आत्मनेपदानां टेरे इति सूत्रे ध्वमः टेः अम् इत्यस्य एत्वे **एधध्वे** इति रूपं सिध्यति।

**एधे** - एध्-धातोः लटि उत्तमपुरुषैकवचने इट्-प्रत्यये एध् इ इति जाते कर्तरि शप् इति शपि एध् अ इ इति जाते टित आत्मनेपदानां टेरे इति सूत्रेण इ इत्यस्य टेः इकारस्य स्थाने एत्वे एध् अ ए इति स्थिते अतो गुणे इति सूत्रेण अकारैकारयोः स्थाने पररूपैकादेशे एकारे **एधे** इति रूपं सिध्यति।

**एधावहे** - एध्-धातोः लटि उत्तमपुरुषद्विवचने वहि-प्रत्यये कर्तरि शप् इति शपि एध् अ वहि इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण वहेः टेः इकारस्य एत्वे एध् अ वहे इति स्थिते अतो दीर्घो यञि इति सूत्रेण दीर्घे **एधावहे** इति रूपं सिध्यति।

**एधामहे** - एध्-धातोः लटि उत्तमपुरुषबहुवचने महि-प्रत्यये कर्तरि शप् इति शपि एध् अ महि इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण महेः टेः इकारस्य एत्वे एध् अ महे इति स्थिते अतो दीर्घो यञि इति सूत्रेण दीर्घे **एधामहे** इति रूपं सिध्यति।





एवं प्रकारेण अन्येषामपि आत्मनेपदिनां धातूनां लट्लकारे रूपाणि अपि साधयितुं शक्यन्ते।

एध्-धातोः लट्लकारे रूपाणि तावत् -

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमपुरुषे | एधते | एधेते | एधन्ते |
| मध्यमपुरुषे | एधसे | एधेथे | एधध्वे |
| उत्तमपुरुषे | एधे | एधावहे | एधामहे |



## पाठगतप्रश्नाः-१

१. एध्-धातोः अर्थः कः।

२. एध्-धातोः धातुपाठे कीदृशः पाठः।

३. एध्-धातुः उदात्तोऽनुदात्तः स्वरितो वा।

४. एध्-धातुः आत्मनेपदी परस्मैपदी वा। उत्तरं समर्थयत।

५. एध्-धातोः आत्मनेपदित्वे किं सूत्रं प्रमाणम्।

६. एध्-धातोः तिबादयो नव प्रत्ययाः कुतो न उत्पद्यन्ते।

७. एध्-धातुः सेट् अनिट् वा।

८. एध्-धातुः सकर्मको वा अकर्मको वा।

९. एध्-धातो लटि तप्रत्यये शपि प्रक्रियाकार्ये एधत इति स्थिते एकारविधायकं सूत्रं किम्।

१०. टिसंज्ञा कस्य।

११. एध्-धातोः लटि रूपाणि लिखत।

१२. आताम्-प्रत्ययः केन सूत्रेण ङित्।

१३. आतामः आकारस्य इय् केन सूत्रेण विधीयते।

१४. आतो ङितः इति सूत्रस्य कोऽर्थः।



## एध्-धातोः लिटि रूपाणि

### [२०.४] इजादेश्च गुरुमतोऽनृच्छः॥ (३.१.३६)

**सूत्रार्थः** - इजादिर्यो धातुः गुरुमान् ऋच्छत्यन्यः तत आम् स्याल्लिटि।

**सूत्रावतरणम्** - एध्-धातोः भूतानद्यतनपरोक्षार्थक्रियावृत्तेः लिट्-लकारे अनुबन्धलोपे लस्य स्थाने प्रथमैकवचनविवक्षायां तप्रत्यये एध त इति स्थिते इदं सूत्रं प्रवर्तते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सूत्रेऽस्मिन् इजादेः (५/१), च (अव्ययम्), गुरुमतः (५/१), अनृच्छः (५/१) इति चत्वारि पदानि सन्ति। धातोः इति पञ्चम्यन्तं पदं धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ् इति सूत्रात् अनुवर्तते। आम् (१/१) इति विधेयबोधकं पदं लिटि (७/१) इति च पदं कास्प्रत्ययादामन्त्रणे लिटि इति सूत्रात् अनुवर्तते। प्रत्ययः परश्च इति द्वयोः सूत्रयोः अधिकारे सूत्रमिदं पठितम् अस्ति। इच् आदिर्यस्य स इजादिः, तस्माद् इजादेः इति बहुव्रीहिसमासः। गुरुः अस्ति अस्मिन् इति गुरुमान्, तस्माद् गुरुमतः। न ऋच्छ् अनृच्छ्, तस्माद् अनृच्छः। पदयोजना - इजादेः च गुरुमतः अनृच्छः धातोः आम् प्रत्ययः परः च लिटि। सूत्रार्थो भवति - इजादिः यो धातुः गुरुमान् ऋच्छतिभिन्नः, तस्माद् धातोः लिटि परे आम् प्रत्ययः भवति। यो धातुः इजादिरपि अस्ति, गुरुमान् चापि अस्ति तस्माद् धातोः आम् भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - एध्-धातोः भूतानद्यतनपरोक्षार्थक्रियावृत्तेः परोक्षे लिट् इति लिट्-लकारे एध् लिट् इति स्थिते एध्-धातोः एकारादित्वात् इजादित्वमस्ति। दीर्घं चेति सूत्रेण एकारः गुरुसंज्ञकः। अतः एध्-धातुः गुरुमान् अपि अस्ति। अत एव तस्माद्धातोः प्रकृतसूत्रेण आम्प्रत्ययः भवति। तेन एध् आम् लिट् इति स्थिते वर्णमेलने एधाम् लिट् इति आयाति। तदा आमः इति सूत्रेण लिटः लुक् भवति। लिट् कृदतिङ् इति कृत्संज्ञकः अस्ति। एधाम् इत्यस्मात् लिटः लुकि प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रेण प्रत्ययलक्षणं कृत्वा एधाम् इति कृदन्तम् अस्ति। तस्य च कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञा भवति। ततश्च स्वौजसमौट्० इति सूत्रेण सुबुत्पत्तौ एधाम् सु इति स्थिते आमः इति सूत्रेण सोर्लुकि एधाम् इति अवशिष्यते। अस्य च पुनः प्रत्ययलक्षणं कृत्वा सुबन्तत्वम्। अतः सुप्तिङन्तं पदमित्यनेन पदसंज्ञापि सिध्यति।

एधाम् इत्यस्य आमन्तत्वात् कृञ्चानुप्रयुज्यते लिटि इति सूत्रेण एधाम् इत्यस्मात् परं लिट्परकाणां कृ भू अस् एषां धातूनां प्रयोगो भवति। अत्र आदौ कृधातोः अनुप्रयोगं कृत्वा एधाम् कृ लिट् इति स्थितिः आयाति।

**सूत्रावतरणम्** - एधाम् कृ लिट् इति स्थिते लस्य स्थाने आत्मनेपदं वा परस्मैपदं वा भवेत् इति शंका समुदेति। तत्र आत्मनेपदविधायकम् इदं सूत्रं प्रवर्तते।



## [२०.५] आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य॥ (१.३.६३)

**सूत्रार्थः** - आमप्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सूत्रेऽस्मिन् चत्वारि पदानि सन्ति। तत्र आम्प्रत्ययवत् इति अव्ययपदम्, कृञः इति षष्ठ्यन्तं पदम्, अनुप्रयोगस्य इति षष्ठ्यन्तं पदम्। आत्मनेपदम् इति प्रथमान्तं पदम् अनुदात्तङित आत्मनेपदम् इति सूत्रात् अनुवर्तते। आम् प्रत्ययो यस्मात् (विहितः) स आम्प्रत्ययः। आम्प्रत्ययेन तुल्यम् आम्प्रत्ययवत् इति। अत्र अतद्गुणसंविज्ञानबहुव्रीहिः अस्ति। अर्थात् आम्प्रत्ययः इति शब्देन यस्माद् आम् प्रत्ययः विधीयते तस्यैव ग्रहणं कर्तव्यं न तु आम्-प्रत्ययसहितस्य। सूत्रार्थो भवति - आम्प्रत्ययः यस्मात् ततः आमः प्रकृत्या इव अनुप्रयुज्यमानात् कृञः अपि आत्मनेपदं भवतीति। अत्र एध्-धातोः आम्-प्रत्ययो विहितः। तेन एधाम् इति लभ्यते। आम्प्रत्ययः इति पदेन एध् इति आमः प्रकृतिरेव गृह्यते। आमः प्रकृतितः यदि आत्मनेपदं भवति तर्हि आमन्तात् परो यः अनुप्रयुक्तः कृधातुः, तस्माद् परम् लिटः स्थाने आत्मनेपदं भवति। मूलधातुतः यदि आत्मनेपदं भवति तर्हि अनुप्रयुक्ताद् कृधातोः अपि आत्मनेपदं भवतीति सरलार्थः।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण एधाम् कृ लिट् इति स्थितिः। अत्र एधाम् इत्यत्र आम् प्रत्ययः एध्-धातोः विहितः। अतः आमः प्रकृतिः एध्-धातुः। एध्-धातुतः आत्मनेपदं भवति। अतः अनुप्रयुक्तात् कृधातोः प्रकृतसूत्रेण आत्मनेपदस्य विधानात् प्रथमपुरुषैकवचनविवक्षया एधाम् कृ त इति स्थितिः समापन्ना। तदा -

## [२०.६] लिटस्तझयोरेशिरेच्॥ (३.४.८१)

**सूत्रार्थः** - लिडादेशयोः तझयोः एश् इरेच् एतौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। तत्र लिटः (६/१), तझयोः (६/२), एशिरेच् (१/१) इति त्रीणि पदानि सन्ति। तश्च झश्च तझौ तयोः तझयोः, इतरेतरयोगद्वन्द्वः। एश् च इरेच् इति एशिरेच् इति समाहारद्वन्द्वसमासः। अत्र यथासंख्यमनुदेशः समानाम् इति परिभाषासूत्रं प्रवर्तते। तेन तस्य स्थाने एश् तथा च झस्य स्थाने इरेच् इति विधीयेते। एशः शित्त्वात् तथा इरेचः अनेकाल्त्वात् अनेकाल्शित् सर्वस्य इति परिभाषाबलेन सर्वस्य स्थाने आदेशो भवति। सूत्रार्थो भवति - लिटः स्थाने विहितौ यो त झ इति एतौ तयोः स्थाने एश् इरेच् एतौ क्रमात् स्तः। इरेच् इत्यस्य चस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति। ततश्च लोपो भवति।

**उदाहरणम्** - एधाञ्चक्रे।

**सूत्रार्थसमन्वयः** - एधाम् कृ त इति स्थिते प्रकृतसूत्रेण त-प्रत्ययस्य स्थाने एशादेशे अनुबन्धलोपे एधाम् कृ ए इति स्थिते लिटि धातोरनभ्यासस्य इति सूत्रेण द्वित्वे अभ्यासकार्ये (उरत् इति सूत्रेण अ, उरण् रपरः इति रपरः, हलादिः शेषः इति हलादिशेषे, कुहोश्चुः इति अभ्यासककारस्य चकारः) एधाम् च कृ ए इति स्थिते इको यणचि इति यणि कृते एधाम् चक्रे इति स्थितिः समायाति। ततः मोऽनुस्वारः इति सूत्रेण पदान्तमकारस्य अनुस्वारे वा पदान्तस्य इति सूत्रेण अनुस्वारस्य विकल्पेन



परसवर्णे स्थानत आन्तर्यात् ञकारे एधाञ्चक्रे इति रूपं सिध्यति। परसवर्णाभावे एधांचक्रे इति च रूपं सिध्यति।

**एधांचक्राते -** एध्-धातोः भूतानद्यतनपरोक्षार्थक्रियावृत्तेः परोक्षे लिट् इति लिट्-लकारे एध् लिट् इति स्थिते एध्-धातोः इजादेश्च गुरुमतोऽनृच्छः इति सूत्रेण आमि एधाम् लिट् इति स्थिते आमः इति सूत्रेण आमः परस्य लुकि एधाम् इति स्थितिः जायते। एधाम् इत्यस्य आमन्तत्वात् कृञ्चानुप्रयुज्यते लिटि इति सूत्रेण एधाम् इत्यस्मात् लिट्परस्य कृञः अनुप्रयोगे एधाम् कृ लिट् इति स्थिते आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य इति सूत्रेण एध्-धातुतः आत्मनेपदे प्रथमपुरुषद्विवचनविवक्षया एधाम् कृ आताम् इति स्थितिः जाता। तदा लिटि धातोरनभ्यासस्य इति सूत्रेण द्वित्वे अभ्यासकार्ये एधाम् च कृ आताम् इति स्थिते इको यणचि इति यणि कृते एधाम् चक्राताम् इति स्थितिः समायाति। टित आत्मनेपदानां टेरे इति सूत्रेण आतामः टेः आमः एत्वे एधाम् चक्राते इति स्थिते ततः मोऽनुस्वारः इति सूत्रेण पदान्तमकारस्य अनुस्वारे वा पदान्तस्य इति सूत्रेण अनुस्वारस्य विकल्पेन परसवर्णे स्थानत आन्तर्यात् ञकारे एधाञ्चक्राते इति रूपं सिध्यति। परसवर्णाभावे एधांचक्राते इति च रूपं सिध्यति।

**एधांचक्रिरे -** एध्-धातोः भूतानद्यतनपरोक्षार्थक्रियावृत्तेः परोक्षे लिट् इति लिट्-लकारे एध् लिट् इति स्थिते एध्-धातोः एकारादित्वात् इजादित्त्वमस्ति अतः इजादेश्च गुरुमतोऽनृच्छः इति सूत्रेण आमि एधाम् लिट् इति स्थिते आमः इति सूत्रेण आमः परस्य लुकि एधाम् इति स्थितिः जायते। एधाम् इत्यस्य आमन्तत्वात् कृञ्चानुप्रयुज्यते लिटि इति सूत्रेण एधाम् इत्यस्मात् लिट्परस्य कृञः अनुप्रयोगे एधाम् कृ लिट् इति स्थिते आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य इति सूत्रेण एध्-धातुतः आत्मनेपदे प्रथमपुरुषबहुवचनविवक्षया एधाम् कृ झ इति स्थितिः जाता।

तत्र झस्य स्थाने लिटस्तझयोरेशिरेच् इति सूत्रेण इरेच् इत्यादेशे अनुबन्धलोपे एधाम् कृ इरे इति स्थिते लिटि धातोरनभ्यासस्य इति सूत्रेण द्वित्वे अभ्यासकार्ये एधाम् च कृ इरे इति स्थिते इको यणचि इति यणि कृते एधाम् चक्रिरे इति स्थितिः समायाति। ततः मोऽनुस्वारः इति सूत्रेण पदान्तमकारस्य अनुस्वारे वा पदान्तस्य इति सूत्रेण अनुस्वारस्य विकल्पेन परसवर्णे स्थानत आन्तर्यात् ञकारे **एधाञ्चक्रिरे** इति रूपं सिध्यति। परसवर्णाभावे **एधांचक्रिरे** इति च रूपं सिध्यति।

**एधांचकृषे -** एध्-धातोः पूर्ववत् लिटि आमि कृञः अनुप्रयोगे एधाम् कृ लिट् इति स्थिते आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य इति सूत्रेण एध्-धातुतः आत्मनेपदे मध्यमपुरुषैकवचनविवक्षया एधाम् कृ थास् इति स्थितिः जाता। थासः से इति सूत्रेण थासः स्थाने से इति सर्वादिशे आर्धधातुकस्येड् वलादेः इति सूत्रेण से इति प्रत्ययस्य इडागमः प्राप्तः। कृधातोः उपदेशे एकाच्त्वात् अनुदात्तत्वाच्च एकाच उपदेशेऽनुदात्तात् इति सूत्रेण इडागमस्य निषेधो भवति। ततः लिटि धातोरनभ्यासस्य इति सूत्रेण द्वित्वे अभ्यासकार्ये एधाम् च कृ से इति स्थिते आदेशप्रत्यययोः इत्यनेन सकारस्य षकारे एधाम् चकृषे इति स्थिते मोऽनुस्वारः इति सूत्रेण पदान्तमकारस्य अनुस्वारे वा पदान्तस्य इति सूत्रेण अनुस्वारस्य विकल्पेन परसवर्णे स्थानत आन्तर्यात् ञकारे **एधाञ्चकृषे** इति रूपं सिध्यति। परसवर्णाभावे **एधांचकृषे** इति च रूपं सिध्यति।



**एधांचक्राथे** - एध्-धातोः पूर्ववत् लिटि आमि कृञः अनुप्रयोगे एधाम् कृ लिट् इति स्थिते मध्यमपुरुषद्विवचनविवक्षया एधाम् कृ आथाम् इति स्थितिः जाता। ततश्च द्वित्वे अभ्यासकार्ये एधाम् च कृ आथाम् इति स्थिते इको यणचि इति यणि कृते एधाम् चक्राथाम् इति स्थितिः समायाति। टित आत्मनेपदानां टेरे इति सूत्रेण आथामः टेः आमः एत्वे एधाम् चक्राथे इति स्थिते ततः मोऽनुस्वारे अनुस्वारस्य विकल्पेन परसवर्णे **एधाञ्चक्राथे** इति परसवर्णाभावे **एधांचक्राथे** इति च रूपे सिध्यतः।

**एधांचकृढ्वे** - एध्-धातोः पूर्ववत् लिटि आमि कृञः अनुप्रयोगे एधाम् कृ लिट् इति स्थिते मध्यमपुरुषबहुवचनविवक्षया एधाम् कृ ध्वम् इति स्थितिः जाता। ततश्च द्वित्वे अभ्यासकार्ये एधाम् च कृ ध्वम् इति स्थितिः जाता। तदा -

## [२०.७] इणः षीध्वंलुङ्लिटां धोऽङ्गात्॥ (८.३.७८)

**सूत्रार्थः** - इण्णन्तादङ्गात् परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। इणः (५/१), षीध्वम्-लुङ्-लिटाम् (६/३), धः (६/१), अङ्गात् (५/१) इति चत्वारि पदानि सन्ति। अपदान्तस्य मूर्धनस्य इति सूत्रात् मूर्धन्यः इति प्रथमान्तं पदमनुवर्तते। षीध्वं लुङ् च लिट् इति षीध्वंलुङ्लिटः, तेषां षीध्वंलुङ्लिटाम् इति इतरेतरयोगद्वन्द्वसमासः। अपदान्तस्य मूर्धन्यः इति सूत्रात् मूर्धन्यः (१/१) इति पदमायाति। पदयोजना - इणः अङ्गात् षीध्वंलुङ्लिटां धः मूर्धन्यः। अत्र इणः इति विशेषणमतः। तदन्तविधिना इण्णन्तात् अङ्गात् इति अर्थः आयाति। सूत्रार्थो भवति - इण्णन्तात् अङ्गात् परेषां षीध्वम् लुङ् लिट् एषां स्थाने मूर्धन्यः आदेशो भवति इति।

**उदाहरणम्** - एधाञ्चकृढ्वे।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण एधाम् चकृ ध्वम् इति स्थितौ इण्-अन्तम् अङ्गम् चकृ इति, ततश्च लिटः धकारः अस्ति। अतः प्रकृतसूत्रेण धस्य मूर्धन्यादेशे गुणतः आन्तर्याद् ढकारे एधाम् चकृढ्वम् इति जाते टित आत्मनेपदानां टेरे इति सूत्रेण टेः अमः एत्वे एधाम् चकृढ्वे इति स्थिते ततः मोऽनुस्वारे अनुस्वारस्य विकल्पेन परसवर्णे **एधाञ्चकृढ्वे** इति परसवर्णाभावे **एधांचकृढ्वे** इति च रूपे सिध्यतः।

**एधांचक्रे** - एध्-धातोः पूर्ववत् लिटि आमि कृञः अनुप्रयोगे एधाम् कृ लिट् इति स्थिते उत्तमपुरुषैकवचनविवक्षया एधाम् कृ इ इति स्थितिः जाता। ततश्च द्वित्वे अभ्यासकार्ये एधाम् च कृ इ इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण आथामः टेः इकारस्य एत्वे एधाम् चकृ ए इति जाते इको यणचि इति यणि कृते एधाम् चक्रे इति स्थिते ततः मोऽनुस्वारे अनुस्वारस्य विकल्पेन परसवर्णे **एधाञ्चक्रे** इति परसवर्णाभावे **एधांचक्रे** इति च रूपे सिध्यतः।

**एधांचकृवहे, एधांचकृमहे** - एध्-धातोः पूर्ववत् लिटि आमि कृञः अनुप्रयोगे एधाम् कृ लिट् इति स्थिते उत्तमपुरुषद्विवचनविवक्षया एधाम् कृ वहि इति स्थितिः जाता। पूर्ववत् द्वित्वे अभ्यासकार्ये एधाम् च कृ वहि इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण आथामः टेः इकारस्य एत्वे एधाम् चकृ



वहे इति जाते मोऽनुस्वारे अनुस्वारस्य विकल्पेन परसवर्णे **एधाञ्चकृवहे** इति परसवर्णाभावे **एधांचकृवहे** इति च रूपे सिध्यतः। एवमेव उत्तमबहुवचने प्रक्रिया भवति। तेन **एधाञ्चकृमहे, एधांचकृमहे** द्वे रूपे सिध्यतः।

एध्-धातोः आमि ततश्च भूधातोः अनुप्रयोगे भूधातोः परं लिटः स्थाने परस्मैपदमेव भवति। अनुप्रयुक्तात् परस्मैपदं वा आत्मनेपदं वा इति विचारस्तु केवलं कृधातोरेव वर्तते। भूधातोः लिटि रूपसाधनप्रक्रिया तु पूर्ववदेव भवति। अतः विस्तरवारणाय नात्र प्रदर्श्यते। एवम् अस्-धातोः अनुप्रयोगविषयेऽपि।

कृ भू अस् एषाम् अनुप्रयोगेण निष्पन्नानि रूपाणि अधः प्रदत्तानि सन्ति।

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमपुरुषे** | एधाञ्चक्रे | एधाञ्चक्राते | एधाञ्चक्रिरे |
| **मध्यमपुरुषे** | एधाञ्चकृषे | एधाञ्चक्राथे | एधाञ्चकृढ्वे |
| **उत्तमपुरुषे** | एधाञ्चक्रे | एधाञ्चकृवहे | एधाञ्चकृमहे |

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमपुरुषे** | एधाम्बभूव | एधाम्बभूवतुः | एधाम्बभूवुः |
| **मध्यमपुरुषे** | एधाम्बभूविथ | एधाम्बभूवथुः | एधाम्बभूव |
| **उत्तमपुरुषे** | एधाम्बभूव | एधाम्बभूविव | एधाम्बभूविम |

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमपुरुषे** | एधामास | एधामासतुः | एधामासुः |
| **मध्यमपुरुषे** | एधामासिथ | एधामासथुः | एधामास |
| **उत्तमपुरुषे** | एधामास | एधामासिव | एधामासिम |



## पाठगतप्रश्नाः

१५. इजादेश्च गुरुमतोऽनृच्छ इति सूत्रस्य वृत्तिं लिखत।

१६. इजादेश्च गुरुमतोऽनृच्छ इति सूत्रेण किं विधीयते।



१७. आम्प्रत्ययः इत्यत्र कीदृशो बहुव्रीहिः।

१८. एध्-धातोः लिटि भूधातोः अनुप्रयोगे भूधातोः परं परस्मैपदम् आत्मनेपदं वा विधीयते।

१९. आमः इति सूत्रेण कस्य लुक् विधीयते।

२०. लिटस्तझयोरेशिरेच् इत्यत्र तस्य स्थाने एश् झस्य स्थाने च इरेच् इति किं सूत्रं नियमयति।

२१. एध्-धातोः लिटि प्रथमैकवचने कानि रूपाणि भवन्ति।

२२. एध्-धातोः लिटि अस्-धातुम् अनुप्रयुज्य रूपाणि लिखत।

२३. एधाञ्चकृढ्वे इत्यत्र ध्वमः धस्य ढविधायकं सूत्रं किम्।

## एध्-धातोः लुटि रुपाणि

एध्-धातोः लुटि प्रथमपुरुषाणां रूपेषु न कोऽपि विशेषः अस्ति। तानि रूपाणि पूर्वसूत्रैरेव भवन्ति। तत्र स्यतासी लृलुटोः, लुटः प्रथमस्य डारौरसः, तासस्त्योर्लोपः रि च इति सूत्राणि प्रयुज्यन्ते। यथा -

**एधिता** - एध्-धातोः लुटि प्रथमपुरुषैकवचनविवक्षायां त-प्रत्यये एध् त इति स्थिते कर्तरि शप् इत्यनेन शपि प्रसक्ते स्यतासी लृलुटोः इत्यनेन शपं प्रबाध्य तास्-प्रत्यये एध् तास् त इति स्थिते तासः आर्धधातुकत्वाद् वलादित्वाच्च आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे आद्यावयवे एध् इतास् त इति स्थिते लुटः प्रथमस्य डा-रौ-रसः इति सूत्रेण तप्रत्ययस्य स्थाने डा इति सर्वादेशे अनुबन्धलोपे एध् इतास् आ इति स्थिते डित्त्वसामर्थ्याद् अभस्यापि टेर्लोपे एध् इत् आ इति स्थिते वर्णमेलने **एधिता** इति रूपं सिध्यति।

एवम् अन्येषु रूपेषु अपि ऊह्यम्। तत्र मध्यमपुरुषबहुवचने ध्वम्-प्रत्यये रूपे विशेषो विद्यते।

पूर्ववत् एध्-धातोः लुटि मध्यमपुरुषबहुवचने एध् इतास् ध्वम् इति स्थितिः जायते। तदा -

### [२०.८] धि च॥ (८.२.२५)

**सूत्रार्थः** - धादौ प्रत्यये पर सस्य लोपः।

**सूत्रव्याख्या** - विधिसूत्रम् इदम्। सूत्रेऽस्मिन् द्वे पदे स्तः। धि इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। रात्सस्य इति सूत्रात् सस्य इति षष्ठ्यन्तं पदमायाति। संयोगान्तस्य लोपः इत्यस्मात् लोपः इति प्रथमान्तं पदमनुवर्तते। अत्र प्रत्यये इति अध्याहार्यम्। पदयोजना - सस्य लोपः धि प्रत्यये। धि प्रत्यये इत्यत्र तदादिविधिना धकारादौ प्रत्यये इत्यर्थः आयाति। सूत्रार्थो भवति - धादौ प्रत्यये सस्य लोपः भवति।



**उदाहरणम्** - एधिताध्वे।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण एधितास् ध्वम् इति स्थितौ ध्वमिति धादिप्रत्ययः परः अस्ति। अतः धि च इति सूत्रेण तासः अवयवस्य सकारस्य लोपे एधिताध्वम् इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण टेः एत्वे **एधिताध्वे** इति रूपं सिध्यति।

--

पूर्ववत् एध्-धातोः लुटि उत्तमपुरुषबहुवचने एध् इतास् इ इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण टेः एत्वे एधितास् ए इति स्थितिः जायते। तदा -

## [२०.९] ह एति॥ (७.४.५२)

**सूत्रार्थः** - तासस्त्योः सस्य हः स्यादेति परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। ह (१/१) इति एति (७/१) इति द्वे पदे स्तः। तासस्त्योः इति षष्ठ्यन्तं पदं तासस्त्योर्लोपः इति सूत्रात् अनुवर्तते। सः इति षष्ठ्यन्तं पदं सः स्यार्धधातुके इति सूत्रात् अनुवर्तते। पदयोजना - तासस्त्योः सः ह एति। तासस्त्योः सः इति अवयवषष्ठी वर्तते। तेन तासस्त्योरवयवस्य इति अर्थः समायाति। सूत्रार्थो भवति - तासः अस्-धातोः अवयवः यः सः, तस्य एति परे हकारः स्यादिति।

**उदाहरणम्** - एधिताहे।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण एधितास् ए इति स्थितौ सकारस्य ह एति इति हकारे कृते **एधिताहे** इति रूपं सिद्धम्।

अन्येषु रूपेषु अपि प्रक्रिया स्वयमूह्या।

**एधितास्वहे, एधितास्महे** - एध्-धातोः पूर्ववत् प्रक्रियया उत्तमपुरुषद्विवचने वहि-प्रत्यये एधितास् वहि इति स्थिते टित आत्मनेपदानां टेरे इति सूत्रेण टेः एत्वे एधितास् वहे इति वर्णमेलने **एधितास्वहे** इति रूपं सिध्यति। एवमेव उत्तमबहुवचने **एधितास्महे** इति रूपं सिध्यति।

अस्य धातोः लुटि रूपाणि तावत् -

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमपुरुषे** | एधिता | एधितारौ | एधितारः |
| **मध्यमपुरुषे** | एधितासे | एधितासाथे | एधिताध्वे |
| **उत्तमपुरुषे** | एधिताहे | एधितास्वहे | एधितास्महे |



## एध्-धातोः लृटि रूपाणि

एध्-धातोः लृटि रूपेषु नूतनं किमपि सूत्रं नावश्यकम्। तानि रूपाणि पूर्वसूत्राणि आश्रित्य भवन्ति। अस्मिन् लकारे अत्र कानिचन कार्याणि यथा - लृटि स्यतासी लृलुटोः इति सूत्रेण स्यप्रत्ययः, आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमः, आदेशप्रत्यययोः इत्यनेन स्यस्य षकारः, टित आत्मनेपदानां टेरे इति एत्वम् इति भवति।

**एधिष्यते** - एध्-धातोः वर्धनरूपव्यापारः भविष्यत्काले विवक्षितः तदा एध्-धातोः लृटि त-प्रत्यये शपं प्रबाध्य स्यप्रत्यये इडागमे स्यस्य सकारस्य मूर्धन्यादेशे एधिष्यत इति स्थिते टित आत्मनेपदानां टेरे इत्यनेन एत्वे **एधिष्यते** इति रूपं सिध्यति। एवमन्यानि रूपाणि ऊह्यानि।

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमपुरुषे** | एधिष्यते | एधिष्येते | एधिष्यन्ते |
| **मध्यमपुरुषे** | एधिष्यसे | एधिष्येथे | एधिष्यध्वे |
| **उत्तमपुरुषे** | एधिष्ये | एधिष्यावहे | एधिष्यामहे |

## एध्-धातोः लोटि रूपाणि

**सूत्रावतरणम्** - एध्-धातोः लोटि लोटः स्थाने प्रथमैकवचनविवक्षायां त-प्रत्यये शपि कृते अनुबन्धलोपे टित आत्मनेपदानां टेरे इत्यनेन एत्वे एधते इति स्थितिः जायते। तदा - एकारस्य स्थाने आम्-विधानार्थं सूत्रमिदमारभ्यते।

### [२०.१०] आमेतः॥ (३.४.९०)

**सूत्रार्थः** - लोट एकारस्य आम् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। आम् (१/१) एतः (६/१) इति पदद्वयमस्ति अस्मिन् सूत्रे। लोटो लङ्वत् इति सूत्रात् लोटः इति षष्ठ्यन्तं पदमनुवर्तते। लोटः इति एतः इति अवयवषष्ठी। सूत्रार्थो भवति - लोटः अवयवस्य एकारस्य आम् स्यात्।

**उदाहरणम्** - एधताम् एधेताम् एधन्ताम् एधेथाम्।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तरूपेण एधते इति स्थिते आमेतः इति सूत्रेण ते इति लोटः अवयवस्य एकारस्य स्थाने आम् इत्यादेशे एधताम् इति रूपं सिध्यति। प्रथमद्विवचने एधेते इति स्थिते एकारस्य आम्-विधानेन एधेताम् इति रूपम् सिध्यति। प्रथमबहुवचने एधन्ते इति स्थिते आमि विहिते

एधन्ताम् इति रूपं सिध्यति। तथैव मध्यमपुरुषद्विवचने एधेथे इति स्थिते आमि कृते एधेथाम् इति रूपं सिध्यति।

**एधस्व** - एध्-धातोः मध्यमपुरुषैकवचने थासि थासः से इत्यादेशे शपि एधसे इति स्थिते आमेतः इति सूत्रेण एकारस्य स्थाने आमादेशः प्राप्तः। तदा -

## [२०.११] सवाभ्यां वामौ॥ (३.४.९१)

**सूत्रार्थः** - सवाभ्यां परस्य लोडेतः क्रमाद् वामौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सवाभ्याम् (५/२), वामौ (१/२) इति पदद्वयं सूत्रेऽस्मिन् वर्तते। लोटो लङ्वत् इति सूत्रात् लोटः इति षष्ठ्यन्तं पदमनुवर्तते। आमेतः इति सूत्रात् एतः इति षष्ठ्यन्तं पदमनुवर्तते। वश्च अम् च वामौ इति इतरेतरयोगद्वन्द्वः। ताभ्याम् सवाभ्याम्। सूत्रार्थो भवति - सकारात् वकाराच्च परस्य लोटः एकारस्य स्थाने क्रमेण व इति अम् इति आदेशः भवति।

**उदाहरणम्** - एधस्व, एधध्वम्।

**सूत्रार्थसमन्वयः** - पूर्वोक्तरूपेण एधसे इति स्थितौ से इत्यस्मिन् सकारात् परस्य एकारस्य स्थाने प्राप्तम् आम्-आदेशम् प्रबाध्य अनेन प्रकृतसूत्रेण एकारस्य स्थाने व इत्यादेशे कृते **एधस्व** इति रूपं भवति।

**एधध्वम्** - एध्-धातोः मध्यमपुरुषबहुवचने ध्वमि शपि टेरेत्वे एधध्वे इति स्थिते आमेतः इति सूत्रेण एकारस्य स्थाने आमादेशः प्राप्तः। तत्र ध्वे इत्यस्मिन् वकारात् परस्य एकारस्य स्थाने प्राप्तम् आम्-आदेशम् प्रबाध्य अनेन प्रकृतसूत्रेण एकारस्य स्थाने अम् इत्यादेशे कृते **एधध्वम्** इति रूपं भवति।

**एधै** - एध्-धातोः उत्तमपुरुषैकवचने इ-प्रत्यये शपि टेरेत्वे एध ए इति स्थिते आमेतः इति सूत्रेण एकारस्य स्थाने आमादेशः प्राप्तः। तदा -

## [२०.१२] एत ऐ॥ (३.४.९३)

**सूत्रार्थः** -लोडुत्तमस्य एतः ऐ स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। एतः (६/१), ऐ (१/१) इति पदद्वयं सूत्रेऽस्मिन् विद्यते। लोटो लङ्वत् इति सूत्रात् लोटः इति षष्ठ्यन्तं पदमनुवर्तते। आडुत्तमस्य पिच्च इति सूत्रात् उत्तमस्य इति षष्ठ्यन्तं पदमनुवर्तते। सूत्रार्थो भवति - लोडवयवस्य एत ऐ स्यादिति।

**उदाहरणम्** - एधै एधावहै एधामहै।

**सूत्रार्थसमन्वयः** - ऊर्ध्वमुक्तरूपेण एध ए इति स्थिते एत ऐ इति सूत्रेण प्रत्ययस्य एकारस्य स्थाने ऐकारादेशे एध ऐ इति स्थितिः जायते। ततश्च आडुत्तमस्य पिच्च इति सूत्रेण आडागमे एध आ ऐ इति जाते आटश्च इति सूत्रेण आ+ऐ इति अनयोः स्थाने वृद्धौ एकादेशे ऐकारे एध ऐ इति जाते वृद्धिरेचि इति सूत्रेण अकार-ऐकारयोः स्थाने वृद्धौ एकादेशे ऐकारे **एधै** इति रूपं सिध्यति। उत्तमपुरुषद्विवचने एध्



अ वहि इत्यत्र एत्वे एत ऐ इत्यनेन ऐत्वे आडागमे एध् अ आवहै इति स्थिते अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घैकादेशे **एधावहै** इति रूपं सिध्यति। एवमेव **एधामहै** इति रूपमपि भवति।

एध्-धातोः लोटि रूपाणि -

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमपुरुषे** | एधताम् | एधेताम् | एधन्ताम् |
| **मध्यमपुरुषे** | एधस्व | एधेथाम | एधध्वम् |
| **उत्तमपुरुषे** | एधै | एधावहै | एधामहै |

## एध्-धातोः लङि रूपाणि

एध्-धातोः लङि रूपाणि साधयितुम् किमपि नूतनं सूत्रं नावश्यकम्। एकं नायकरूपम् अधः प्रदर्श्यते। अन्यानि रूपाणि स्वयमूह्यानि। लङि कार्याणि तावत् लङः ङित्वात् टित्त्वाभावात् टित आत्मनेपदानां टेरे इति नैव प्रवर्तते। आत्मनेपदविधानं शप् इत्यादीनि एव कार्याणि। एध्-धातोः अजादित्वात् लुङ्लृङ्लङ्क्ष्वडुदात्तः इत्यस्य बाधकतया आडजादीनामिति सूत्रं प्रवर्तते।

**ऐधत** - एध्-धातोः अनद्यतनभूतार्थे लङि एध् ल् इति स्थिते प्रथमपुरुषैकवचनविवक्षायां त-प्रत्यये एध् त इति स्थिते कर्तरि शप् इति शपि एध् अ त इति स्थिते लुङ्लङ्लृङ्क्ष्वडुदात्तः इति सूत्रेण अटि प्राप्ते अस्य धातोः अजादित्वात् अटं प्रबाध्य आडजादीनामित्यनेन सूत्रेण आटि आद्यावयवे आ ए आटश्च इत्यनेन आकार-एकारयोः स्थाने वृद्धौ एकादेशे **ऐधत** इति रूपं सिध्यति। अन्येषु रूपेषु विशेषः तावद् यथा - उत्तमपुरुषे एकवचने इट् शप् आट् भवति, तदा आ एध् अ इ इति स्थितिः। अ इ इत्यनयोः गुणः। आ ए इत्यनयोः आटश्च इति वृद्धिः। द्विवचने आ एध् अ वहि इति स्थिते अतो दीर्घो यञि इति विशेषकार्यमत्र भवति। तेन ऐधावहि ऐधामहि इति रूपे भवतः।

एध्-धातोः अनद्यतनभूतार्थे लङि रूपाणि तावत् -

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमपुरुषे** | ऐधत | ऐधेताम् | ऐधन्त |
| **मध्यमपुरुषे** | ऐधथाः | ऐधेथाम् | ऐधध्वम् |
| **उत्तमपुरुषे** | ऐधे | ऐधावहि | ऐधामहि |



## एध्-धातोः विधिलिङि रूपाणि

अधुना धातोरस्य लिङि रूपाणि प्रदर्श्यन्ते। लिङ् विधिलिङ् आशीर्लिङ् इति भेदेन द्विविधमिति ज्ञायते एव। तत्रादौ विधिलिङि रूपाणि दर्श्यन्ते।

### [२०.१३] लिङः सीयुट्॥ (३.४.१०२)

**सूत्रार्थः** - लिङः सीयुडागमः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सूत्रेऽस्मिन् द्वे पदे स्तः। लिङः इति षष्ठ्यन्तं पदम्, सीयुट् इति प्रथमान्तं पदम्। सीयुटि उकारः उच्चारणार्थकः तथा टकारः इत्संज्ञकः। आद्यन्तौ टकितौ इति नियमेन सीयुट् लिङः आद्यावयवो भवति। यासुट् परस्मैपदेषूदात्तो ङिच्च इति सूत्रेण यासुट् परस्मैपदस्य विहितः अस्ति। अतः पारिशेष्यात् सीयुट् आत्मनेपदस्य लिङः भवति।

**उदाहरणम्** - एधेत। एधेयाताम्।

**सूत्रार्थसमन्वयः** - एध्-धातोः विधिलिङि प्रथमपुरुषैकवचने तप्रत्यये एध् त इति स्थिते लिङः सीयुट् इति सूत्रेण तप्रत्ययस्य सीयुडागमे टित्त्वात् आद्यावयवे एध् सीय् त इति स्थिते कर्तरि शप् इति शपि अनुबन्धलोपे एध् अ सीय् त इति स्थितिः निष्पन्ना। इदानीं लिङः सलोपोऽनन्त्यस्य इति सूत्रेण अनन्त्यस्य सीयुडवयवस्य सकारस्य लोपे एध् अ ईय् त इति स्थिते लोपो व्योर्वलि इति सूत्रेण तकाररूपे वलि परे यकारस्य लोपे अकारस्य ईकारस्य च स्थाने गुणैकादेशे एकारे कृते **एधेत** इति रूपं सिद्धम्।

एध्-धातोः विधिलिङि प्रथमपुरुषद्विवचने आताम्-प्रत्यये एध् आताम् इति स्थिते लिङः सीयुट् इति सूत्रेण आतामः सीयुडागमे टित्त्वात् आद्यावयवे एध् सीय् आताम् इति स्थिते कर्तरि शप् इति शपि अनुबन्धलोपे एध् अ सीय् आताम् इति स्थितिः निष्पन्ना। तत्र लिङः सलोपोऽनन्त्यस्य इति सूत्रेण अनन्त्यस्य सीयुडवयवस्य सकारस्य लोपे एध् अ ईय् आताम् इति स्थिते अकारस्य ईकारस्य स्थाने गुणैकादेशे एकारे कृते **एधेयाताम्** इति रूपं सिद्धम्।

एध्-धातोः विधिलिङि प्रथमपुरुषबहुवचने झ-प्रत्यये एध् झ इति स्थितिः जाता। तदा -

### [२०.१४] झस्य रन्॥ (३.४.१०५)

**सूत्रार्थः** - लिङो झस्य रन् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। झस्य (६/१) इति रन् (१/१) इति पदद्वयं सूत्रेऽस्मिन् विद्यते। लिङः सीयुट् इति सूत्रात् लिङः इति षष्ठ्यन्तं पदमनुवर्तते। झस्य इति स्थानषष्ठी। रन् हि अनेकाल्। अत एव अनेकाल्शित् सर्वस्य इति परिभाषया सम्पूर्णस्य झस्य स्थाने भवति। सूत्रार्थो भवति - लिङः स्थाने विहितस्य झस्य स्थाने रन् इत्यादेशो भवति।

**उदाहरणम्** - एधेरन्।



**सूत्रार्थसमन्वयः** - ऊर्ध्वमुक्तप्रकारेण एध् झ इति स्थितिः। तत्र झस्य रन् इति सूत्रेण रन्प्रत्यये नस्य इत्संज्ञायां कर्तव्यायां न विभक्तौ तुस्माः इति सूत्रनियमात् नस्य इत्संज्ञालोपयोरभावे एध् रन् इति स्थिते लिङः सीयुट् इति सूत्रेण रनः सीयुडागमे टित्त्वात् आद्यावयवे एध् सीय् रन् इति स्थिते कर्तरि शप् इति शपि अनुबन्धलोपे एध् अ सीय् रन् इति स्थितिः निष्पन्ना। तत्र लिङः सलोपोऽनन्त्यस्य इति सूत्रेण अनन्त्यस्य सीयुडवयवस्य सकारस्य लोपे एध् अ ईय् रन् इति स्थिते अकारस्य ईकारस्य स्थाने गुणैकादेशे एकारे कृते लोपो व्योर्वलि इति यलोपे **एधेरन्** इति रूपं सिद्धम्।

**एधेथाः** - एध्-धातोः मध्यमपुरुषैकवचने थास्-प्रत्यये एध् थास् इति स्थिते पूर्ववत् थासः सीयुट्, शप्, सीयुटः सययोः लोपः, अ+ई इत्यनयोः गुणः, पदान्तस्य सस्य रुत्वम् विसर्गः च इति कार्याणि भवन्ति। तदा **एधेथाः** इति रूपं निष्पद्यते।

**एधेयाथाम्** - एध्-धातोः मध्यमपुरुषद्विवचने आथाम्-प्रत्यये एध् आथाम् इति स्थिते पूर्ववत् आथामः सीयुट्, शप्, सीयुटः सलोपः, अ+ई इत्यनयोः गुणः च इति कार्याणि भवन्ति। तदा **एधेयाथाम्** इति रूपं निष्पद्यते।

**एधेध्वम्** - एध्-धातोः मध्यमपुरुषबहुवचने ध्वम्-प्रत्यये एध् ध्वम् इति स्थिते पूर्ववत् ध्वमः सीयुट्, शप्, सीयुटः सययोर्लोपः, अ+ई इत्यनयोः गुणः च इति कार्याणि भवन्ति। तदा **एधेध्वम्** इति रूपं निष्पद्यते।

**एधेय** - एध्-धातोः उत्तमपुरुषैकवचने इट्-प्रत्यये एध् इ इति स्थितिः जायते। तदा -

## [२०.१५] इटोऽत्॥ (३.४.१०६)

**सूत्रार्थः** - लिङादेशस्य इटः अत् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। इटः (६/१), अत् (१/१) इति पदद्वयमस्ति अस्मिन् सूत्रे। लिङः सीयुट् इति सूत्रात् लिङः इति षष्ठ्यन्तं पदमनुवर्तते। अत्र तकार उच्चारणार्थः। अत्र इटः इति स्थानषष्ठी वर्तते। अत एव तस्य स्थाने इट् इति समायाति। सूत्रार्थो भवति - लिङः स्थाने विहितस्य इटः अ इत्यादेशः स्यात्।

**उदाहरणम्** - एधेय।

**सूत्रार्थसमन्वयः** - उपरि उक्तरूपेण एध् इ इति स्थिते लिङः स्थाने विहितस्य इटः स्थाने अ इत्यादेशे एध् अ इति स्थितिः जायते। ततश्च पूर्ववत् अप्रत्ययस्य सीयुट्, शप्, सीयुटः सलोपः, अ+ई इत्यनयोः गुणः च इति कार्याणि भवन्ति। तदा **एधेय** इति रूपं निष्पद्यते।

**एधेवहि** - एध्-धातोः उत्तमपुरुषद्विवचने वहि-प्रत्यये एध् वहि इति स्थिते पूर्ववत् वहेः सीयुट्, शप्, सीयुटः सययोर्लोपः, अ+ई इत्यनयोः गुणः च इति कार्याणि भवन्ति। तदा **एधेवहि** इति रूपं निष्पद्यते। तथैव उत्तमबहुवचने **एधेमहि** इति रूपं सिध्यति।



| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमपुरुषे** | एधेत | एधेयाताम् | एधेरन् |
| **मध्यमपुरुषे** | एधेथाः | एधेयाथाम् | एधेध्वम् |
| **उत्तमपुरुषे** | एधेय | एधेवहि | एधेमहि |

## एध्-धातोः आशीर्लिङि रूपाणि

इदानीम् आशीर्लिङि रूपाणि साध्यते। अत्र बहूनि कार्याणि विधिलिङि यथा तथा एव। तथापि अस्य लिङाशिषि इति सूत्रेण लकारस्य अस्य आर्धधातुकत्वात् विशेषाः केचन सन्ति।

एध्-धातोः आशिषि लिङ्लोटौ इति सूत्रेण आशिषि लिङि प्रथमपुरुषैकवचने तप्रत्यये एध् त इति स्थिते लिङः सीयुट् इति सूत्रेण तप्रत्ययस्य सीयुडागमे टित्त्वात् आद्यावयवे एध् सीय् त इति स्थितिः जाता। तदा -

## [२०.१६] सुट् तिथोः॥ (३.४.१०७)

**सूत्रार्थः** - लिङ्ङवयवयोः तथयोः सुट् स्यात्।

**सूत्रव्याख्या** - विधिसुत्रमिदम्। सूत्रेऽस्मिन् द्वे पदे स्तः। तत्र सुट् इति विधेयबोधकं प्रथमान्तं पदम्। तिथोः इति षष्ठीद्विवचनान्तं पदम्। तिश्च थ् च इति तिथौ, तयोः तिथोः इति इतरेतरयोगद्वन्द्वसमासः। तकारथकारयोरिति तदर्थः। अत्र अवयवषष्ठी विद्यते। अतः लिङः अवयवस्य तकारस्य थकारस्य इत्यर्थो लभ्यते। सूत्रार्थो भवति - लिङः अवयवस्य तकारस्य थकारस्य च सुट् आगमः भवति। सुट् टित्करणात् लिङ्गात् तिथोः आद्यावयवः इति सिध्यति।

**उदाहरणम्** - एधिषीष्ट।

**सूत्रार्थसमन्वयः** - एध्-धातोः आशीर्लिङि तप्रत्यये एध् सीय् त इति स्थितिः निष्पन्ना। अत्र लिङवयवस्य तकारस्य अनेन सूत्रेण सुटि आद्यावयवत्वे च एध् सीय् स् त इति स्थितिः भवति। यदागमपरिभाषया अत्र सीय्+स्+त इति समुदायः तिङ्-प्रत्ययः। लिङाशिषि इति सूत्रेण लिङादेशस्य तिङः आर्धधातुकसंज्ञा भवति। अतः सीय्+स्+त इति समुदायस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे आद्यावयवे एध् इ सीय् स् त इति स्थितिः जायते। तदा लोपो व्योर्वलि इत्यनेन सीयुटः यकारस्य लोपे एधि सी स् त इति स्थिते सीयुटः सकारस्य तथा सुटः सकारस्य यथाक्रम् इकाररूपात् ईकाररूपाच्च इणः परत्वात् अपदान्तत्वात् प्रत्ययावयवत्वात् आदेशप्रत्यययोः इति सूत्रेण मूर्धन्यादेशे षकारे एधिषीष् त इति स्थिते ष्टुना ष्टुः इत्यनेन तकारस्य ष्टुत्वे टकारे **एधिषीष्ट** इति रूपं सिध्यति। अस्मिन् लकारे लिङादेशस्य आर्धधातुकत्वात् कर्तरि शप् इति शप् न भवति। सकारः सार्वधातुकावयवः नास्ति, अतः लिङः सलोपोऽनन्त्यस्य इति सलोपो न भवति।



**एधिषीयास्ताम्** - एध्-धातोः आशीर्लिङि प्रथमपुरुषद्विवचने आताम्-प्रत्यये एध् आताम् इति स्थितिः। ततः सीयुडागमे सुडागमे च एध् सीय् आस्ताम् इति स्थिते सीय्+आस्ताम् इति समुदायस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे आद्यावयवे एध् इ सीय् आस्ताम् इति स्थितिः जायते। ततश्च सीयुटः सकारस्य मूर्धन्यादेशे षकारे एधिषीय् आस्ताम् इति स्थिते वर्णमेलने **एधिषीयास्ताम्** इति रूपं सिध्यति।

**एधिषीरन्** - एध्-धातोः आशीर्लिङि प्रथमपुरुषबहुवचने झ-प्रत्यये एध् झ इति स्थितिः। ततः झस्य रन्, लिङः सीयुट् , इडागमः भवन्ति। तदा एध् इसीय् रन् इति स्थिते यलोपे कृते सीयुटः सकारस्य मूर्धन्यादेशे षकारे एधिषी रन् इति स्थिते वर्णमेलने **एधिषीरन्** इति रूपं सिध्यति।

**एधिषीष्ठाः** - एध्-धातोः मध्यमपुरुषैकवचने थास्-प्रत्यये एध् थास् इति स्थितिः। ततः थासः सीयुट्, इडागमः च भवतः। तदा एध् इसीय् थास् इति स्थिते सुट् तिथोः इति सुटि एध् इसीय् स् थास् इति जाते यलोपे कृते सीयुटः सकारस्य, सुटः सस्य च मूर्धन्यादेशे षकारे एधिषीष् थास् इति स्थिते ष्टुना ष्टुः इत्यनेन थासः थस्य ष्टुत्वे ठकारे एधिषीष्ठास् इति स्थिते रुत्वे विसर्गे च कृते **एधिषीष्ठाः** इति रूपं सिध्यति।

**एधिषीयास्थाम्** - एध्-धातोः आशीर्लिङि मध्यमपुरुषद्विवचने आथाम्-प्रत्यये एध् आथाम् इति स्थितिः। पूर्ववत् सीयुट् इट् सुट् सीयुटः सकारस्य षकारः इति कार्याणि भवन्ति। तदा **एधिषीयास्थाम्** इति रूपं सिध्यति।

**एधिषीढ्वम्** - एध्-धातोः आशीर्लिङि मध्यमपुरुषबहुवचने ध्वम्-प्रत्यये एध् ध्वम् इति स्थितिः। पूर्ववत् सीयुट् इट् सीयुटः सकारस्य षकारः इति कार्याणि भवन्ति। तदा एधिषीध्वम् इति स्थिते इणः षीध्वंलुङ्लिटां धोऽङ्गात् इति सूत्रेण धस्य ढत्वे **एधिषीढ्वम्** इति रूपं सिध्यति।

**एधिषीय** - एध्-धातोः उत्तमपुरुषैकवचने इट्-प्रत्यये एध् इ इति स्थितिः। ततः इटोऽत् इति इटः अत् , तस्य सीयुट्, इडागमः, सीयुटः सस्य मूर्धन्यः षकारः इति कार्याणि भवन्ति। तदा **एधिषीय** इति रूपं सिध्यति।

**एधिषीवहि, एधिषीमहि** - एध्-धातोः उत्तमपुरुषद्विवचने वहि-प्रत्यये एध् वहि इति स्थितिः। ततः वहेः सीयुट्, इडागमः, सीयुटः सस्य मूर्धन्यः षकारः इति कार्याणि भवन्ति। तदा **एधिषीवहि** इति रूपं सिध्यति। बहुवचने च एवमेव **एधिषीमहि** इति रूपं सिध्यति।

एध्-धातोः आशीर्लिङि नव रूपाणि तावत् निम्नलिखितानि -

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमपुरुषे** | एधिषीष्ट | एधिषीयास्ताम् | एधिषीरन् |
| **मध्यमपुरुषे** | एधिषीष्ठाः | एधिषीयास्थाम् | एधिषीढ्वम् |
| **उत्तमपुरुषे** | एधिषीय | एधिषीवहि | एधिषीमहि |



## एध्-धातोः लुङि रूपाणि

**ऐधिष्ट** - भूते एध्-धात्वर्थव्यापारः इति विवक्षायां लुङ् इति सूत्रेण लुङि लुङः स्थाने प्रथमैकवचनविवक्षायां तप्रत्यये एध् त इति स्थिते च्लि लुङि इति च्लिप्रत्यये च्लेः च्लेः सिच् इति सिचि अनुबन्धलोपे एध् स् त इति स्थितिः भवति। सिचः आर्धधातुकत्वात् स्वयं वलादित्वात् आर्धधातुकस्येड् वलादेः इति इटि आद्यावयवे एध् इस् त इति जायते। एधः अजादित्वात् आडजादीनाम् इत्यनेन आडागमे अनुबन्धलोपे आ एध् इस् त इति जाते आकार-एकारयोः स्थाने आटश्च इति वृद्धौ एकादेशे ऐधिस् त इति स्थिते सकारस्य आदेशप्रत्यययोः इति सूत्रेण मूर्धन्यादेशे षकारे तकारस्य च ष्टुना ष्टुः इति सूत्रेण ष्टुत्वे टकारे **ऐधिष्ट** इति रूपं सिध्यति। एवमेव प्रथमपुरुषद्विवचने आताम्-प्रत्यये प्रक्रियाकार्ये **ऐधिषाताम्** इति रूपं सिध्यति।

**ऐधिषत** - एध्-धातोः लुङि प्रथमपुरुषबहुवचनविवक्षायाम् झप्रत्यये एध् झ इति स्थिते च्लौ च्लेः सिचि सिचः इडागमे एध् इस् झ इति स्थिते झोऽन्तः इत्यनेन झस्य स्थाने अन्तादेशः प्राप्तः। तदा -

### [२०.१७] आत्मनेपदेष्वनतः॥ (७.१.५)

**सूत्रार्थः** - अनकारात् परस्य आत्मनेपदेषु झस्य अत् इत्यादेशः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। आत्मनेपदेषु (७/३), अनतः (५/१) इति च पदद्वयम् अस्मिन् सूत्रे विराजते। झः इति षष्ठ्यन्तं पदं झोऽन्तः इति सूत्रादायाति। अत् इति प्रथमान्तं पदम् अदभ्यस्तात् इति सूत्रात् अनुवर्तते। अनतः इति न अत् अनत् तस्मात् अनतः इति नञ्-तत्पुरुषसमासः। सूत्रार्थो भवति - अद्भिन्नात् वर्णात् परस्य आत्मनेपदसंज्ञकस्य झकारस्य स्थाने अत् इति आदेशो भवतीति। सूत्रमिदम् झोऽन्तः इत्यस्य अपवादः। तेन अकारः केवलस्य झकारस्य स्थाने भवति। तेन झकारोत्तरः अकारः यथायथं श्रूयते एव।

**उदाहरणम्** - ऐधिषत।

**सूत्रार्थसमन्वयः** - ऊर्ध्वमुक्तरूपेण एध् इस् झ इति स्थिते झोऽन्तः इत्यनेन झस्य स्थाने अन्तादेशः प्राप्तः। तत्र झकारस्य अनकारात् सकारात् परोऽस्ति। अतः प्रकृतसूत्रेण झकारस्य स्थाने अत् इत्यादेशे एध् इस् अत् अ इति स्थितिः भवति। ततश्च सस्य आदेशप्रत्यययोः इत्यनेन मूर्धन्यादेशे एध् इष् अत् इति स्थिते आडजादीनाम् इति आडागमे आटश्च इति वृद्धौ **ऐधिषत** इति रूपं सिध्यति।

**ऐधिष्ठाः** - एध्-धातोः लुङि मध्यमपुरुषैकवचनविवक्षायाम् थास्-प्रत्यये एध् थास् इति स्थिते च्लौ च्लेः सिचि सिचः इडागमे एध् इस् थास् इति स्थिते अङ्गस्य आडागमे आटश्चेति वृद्धौ सिचः सस्य मूर्धन्यादेशे षकारे ऐधिष् थास् इति स्थिते ष्टुना ष्टुः इति सूत्रेण थासः थकारस्य ष्टुत्वे ठकारे पदान्तस्य सस्य रुत्वे विसर्गे एधिष्ठाः इति रूपं सिध्यति।



एध्-धातोः लुङ्लकारे अधोरूपाणि -

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमपुरुषे** | ऐधिष्ट | ऐधिषाताम् | ऐधिषत |
| **मध्यमपुरुषे** | ऐधिष्ठाः | ऐधिषाथाम् | ऐधिढ्वम् |
| **उत्तमपुरुषे** | ऐधिषि | ऐधिष्वहि | ऐधिष्महि |

## एध्-धातोः लृङि रूपाणि

लृङि साधनार्थं न किमपि इतोऽपि नूतनं सूत्रमपेक्षितम्। अत्र धातोः अजादित्वात् लुङ्लङ्लृङ्क्ष्वडुदात्तः इति सूत्रं बाधित्वा आडजादीनाम् इति सूत्रं प्रवर्तते। तथा च स्यतासी लृलुटोः इति सूत्रेण स्यप्रत्ययः भवति।

एध्-धातोः लृङि तप्रत्यये स्यतासी लृलुटोः इति स्यप्रत्यये तस्य आर्धधातुकत्वात् इडागमे एध् इस्य त इति स्थिते अङ्गस्य आडजादीनाम् इति सूत्रेण आडागमे आटश्च इति वृद्धौ ऐध् इस्यत इति स्थिते स्यस्य सस्य आदेशप्रत्यययोः इत्यनेन मूर्धन्यादेशे ऐध् इष्यत इति स्थिते वर्णमेलने ऐधिष्यत इति रूपं भवति।

अस्य धातोः लृङि रूपाणि तावत् -

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमपुरुषे** | ऐधिष्यत | ऐधिष्येताम् | ऐधिष्यन्त |
| **मध्यमपुरुषे** | ऐधिष्यथाः | ऐधिष्येथाम् | ऐधिष्यध्वम् |
| **उत्तमपुरुषे** | ऐधिष्ये | ऐधिष्यावहि | ऐधिष्यामहि |



## पाठगतप्रश्नाः ३

२४. एधिता इत्यत्र इड्विधायकं सूत्रं किम्।

२५. धि च इत्यत्र धादौ प्रत्यये इत्यर्थः कथम् आगच्छति।

२६. धि च इत्यत्र प्रत्यये इति कस्मात् सूत्रात् आगच्छति।



२७. एधिताहे इत्यत्र तासः सस्य हकारः केन विधीयते।

२८. लोटः एकारस्य आम्विधायकं सूत्रं किम्।

२९. एधताम् इत्यत्र केन सूत्रेण आम् विधीयते।

३०. एधस्व इत्यत्र एकारस्य वविधायकं सूत्रं किम्।

३१. एध्-धातोः लोटि उत्तमपुरुषैकवचने एधे इति स्थिते किं सूत्रं प्रवर्तते।

३२. एध्-धातोः आडागमः केन सूत्रेण विधीयते।

३३. आ एध् ल् इति स्थिते वृद्धिविधायकं सूत्रम् किम्।

३४. लिङि झस्य रन्-विधायकं सूत्रं किम्।

३५. एधेरन् इत्यत्र झेर्जुस् कथं न भवति।

३६. एधिषीष्ट इत्यत्र सस्य षकारः केन सूत्रेण विधीयते।

३७. एध्-धातोः लुङि ध्वमि किं रूपं भवति।

३८. आत्मनेपदेष्वनतः इति सूत्रेण किं विधीयते।



## पाठसारः

अस्मिन् पाठे मुख्यः विषयः हि आत्मनेपदिनां धातूनां रूपाणि तथा आत्मनेपदिधातूनां रूपाणां साधनार्थं यानि सूत्राणि अपेक्षितानि तानि च सूत्राणि। अत्र एध्-धातुः अत्र प्रतीकरूपेण उपस्थापितः। अस्य ज्ञानेन बहूनां तादृशानाम् आत्मनेपदिधातूनां रूपाणि साधयितुं शक्यन्ते।

एध्-धातुः एधँ वृद्धौ इत्याकारेण अयं धातुपाठे पठितः अस्ति। वृद्ध्यर्थकः अयं धातुः अनुदात्तेत्, तेन अनुदात्तङित आत्मनेपदम् इति सूत्रेण तस्मात् धातोः आत्मनेपदसंज्ञकाः प्रत्ययाः विधीयन्ते। अकर्मकोऽयं धातुः। कर्तरि भावे च प्रत्यया विधीयन्ते न तु कर्मणि। अयं धातुः सेट्।

अत्र आदितः लडादीनां दशलकाराणां रूपाणि एव साधितानि सन्ति। तत्र लटि त्रीणि नूतनानि सूत्राणि सन्ति। तत्र टित आत्मनेपदानां टेरे इति सूत्रं टिल्लकारेषु प्रवर्तते। आतो ङितः इति सूत्रेण ङिताम् आकारस्य इय् इति आदेशो भवति। तृतीयं सूत्रं थासः से इति टिल्लकारेषु विधीयमानोऽयं से। तस्य अनेकाल्त्वात् अनेकाल्शित्सर्वस्य इति सूत्रेण सर्वस्य स्थाने आदेशो विधीयते।

एध्-धातुः गुरुमान् इजादिश्च। अतः अस्माद् धातोः लिटि वैशिष्ट्यम् यद् एध् धातोः आम्-प्रत्ययः भवति। तेन कृभ्वस्धातूनाम् अनुप्रयोगो भवति। आमः प्रकृतिभूताद् धातोः यदि आत्मनेपदं विधीयते तर्हि अनुप्रयुज्यमानात् कृधातोः परमपि आत्मनेपदमेव विधीयते। तत्र आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य इति सूत्रं विधायकम्। लिटः स्थाने विहितस्य तप्रत्ययस्य एश् इति



झप्रत्ययस्य इरेच् इति आदेशौ लिटस्तझयोरेशिरेच् इति सूत्रेण भवतः। लिटि मध्यमबहुवचने इणः षीध्वंलुङ्लिटां धोऽङ्गात् इति सूत्रेण धस्य मूर्धन्यादेशो विधीयते।

लुटि रूपेषु स्यतासी लृलुटोः इति तास्प्रत्ययो भवति। तथा च आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमो भवतीति सर्वेषु रूपेषु साधारणम्। धादौ प्रत्यये पर सस्य लोपः धि च इति सूत्रेण भवति। एति परे तासस्त्योः सस्य हकारो ह एति इति सूत्रेण विधीयते।

लृटि रूपेषु स्यतासी लृलुटोः इति स्यप्रत्ययो भवति। अत्रापि आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमो भवतीति सर्वेषु रूपेषु साधारणम्। अन्यः कोऽपि विशेषो न विद्यते।

लोटि रूपाणां साधनार्थं त्रीणि सूत्राणि अत्र आगतानि। तत्र आमेतः इति एकारस्य आम्-विधानार्थम् सूत्रम्। सवाभ्यां वामौ इति सूत्रेण लोटः स्थाने विहितस्य सकारात् परस्य एकारस्य स्थाने व इति वकारात् परस्य एकारस्य स्थाने अम् इति विधयेते। उत्तमपुरुषे एकारस्य ऐकारविधानार्थम् एत ऐ इति सूत्रमायाति।

लङि तु लुङ्लङ्लृङ्क्ष्वड्उदात्त इति सूत्रं बाधित्वा एध्-धातोः अजादित्वात् आडजादीनाम् इति सूत्रं प्रवर्तते। ततश्च आटश्च इति विशेषसूत्रेण वृद्धिर्विधीयते।

विधिलिङि सीयुडागमो विशेषो विद्यते। तत्र अनन्त्यस्य सकारस्य लिङः सलोपोऽनन्त्यस्य इति सूत्रेण सकारस्य लोपो भवति। झप्रत्यये च झेर्जुस् इत्यस्य अपवादतया झस्य रन् इति सूत्रं प्रवर्तते। इटोऽत् इति सूत्रेण लिङादेशस्य इटः अ विधीयते।

आशीर्लिङि सुट् तिथोः इति सूत्रेण तकारस्य थकारस्य च सुट् इति आगमो भवति।

लुङ्लकारस्य झस्य स्थाने अत् विधीयते। सर्वत्र आडागमः च्लिः च्लेः स्थाने सिच् सिचश्च इडागमः सिचः मूर्धन्यादेशः इत्यादीनि कार्याणि भवन्ति।

लृङि रूपसाधनेषु स्यतासी लृलुटोः इत्यनेन स्यप्रत्ययः, अङ्गस्य अट् आट् इति विधानम्, स्यस्य इडागमः, स्यस्य सस्य षकारः इति कार्याणि भवन्ति।



## योग्यतावर्धनम्

अत्र पाठे केचन विशेषविषयाः सूत्रगताः प्रक्रियागता वा सन्ति। ते च अत्र आलोच्यन्ते।

अचोऽन्त्यादि टि इति टिसंज्ञाविधायकं सूत्रम्। एकस्मिन् पदे बहूनि अचः भवन्ति। तत्र अच्सु यः अन्तिमः सः आदिः यस्य भागस्य स टिसंज्ञको भवति। यथा एधत इत्यत्र तकारोत्तरः अकारः अन्तिमः अच् सः टिसंज्ञको भवति। तस्मात् परं कोऽपि हल्वर्णः भवति चेत् स एको वा भवतु एकाधिको वा भवतु सर्वं मिलित्वा टिसंज्ञां प्राप्नोति।

सार्वधातुकमपित् इति अतिदेशसूत्रम्। अपित् अर्थात् पिद्भिन्नः यः सार्वधातुकः सः ङिद्वत् भवति। अर्थात् वस्तुतः अपित् सार्वधातुकः ङित् नास्ति। तथापि अनेन सूत्रेण विशेषेण आदिष्टत्वात् सः ङित् भवति।

तद्गुणसंविज्ञानबहुव्रीहिः अतद्गुणसंविज्ञानबहुव्रीहिः इति बहुव्रीहिसमासस्य भागद्वयम् अवश्यं ज्ञातव्यम्। तच्च समासप्रकरणे अस्माभिः अवश्यं द्रष्टुं शक्यते। बहुव्रीहिः अन्यपदार्थप्रधानः। तथापि यत्र समस्यमानपदानाम् अन्वयः सम्बन्धो वा अर्थो प्राप्यते तत्र तद्गुणसंविज्ञानबहुव्रीहिः। यत्र स सम्बन्धः न प्राप्यते तत्र अतद्गुणसंविज्ञानबहुव्रीहिः भवति।

अनेकाल्शित्सर्वस्य इत्येतत् सूत्रं परिभाषा सूत्रम्। अनेन सूत्रेण यः अनेकाल् शित् च आदेशः स सर्वस्य स्थाने भवतीति इदं सूत्रं नियमयति। अत्र लिटस्तझयोरेशिरेच् इत्यत्र तस्य सम्पूर्णस्य स्थाने एश् इति आदेशो भवति यतः एश् इति पदम् अनेकाल्।



## पाठान्तप्रश्नाः

१. टित आत्मनेपदानां टेरे इति सूत्रं व्याख्यात।

२. आतो ङितः इति सूत्रं व्याख्यात।

३. आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य इति सूत्रं व्याख्यात।

४. आमेतः इति सूत्रं व्याख्यात।

५. इटोऽत् इति सूत्रं व्याख्यात।

६. सुट् तिथोः इति सूत्रं व्याख्यात।

७. आत्मनेपदेष्वनतः इति सूत्रं व्याख्यात।

८. आत्मनेपदप्रकरणस्य सारं संगृह्णीत।

९. ससूत्रं रूपाणि साधयत – एधते एधाते एधन्ते एधसे एधे एधामहे। एधाञ्चक्रे एधाञ्चकृषे एधांचकढ्वे एधाञ्चकृमहे। एधाम्बभूव। एधामास। एधिता एधिताध्वे। एधिताहे। एधिष्यते। एधताम् एधस्व एधध्वम् एधै। ऐधत ऐधे ऐधामहि। एधेत एधेरन् एधेय। एधिषीष्ट एधिषीष्ठाः एधिषीय। ऐधिष्ट एधिषत एधिषि।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि- १**

१. एध्-धातोः अर्थः वृद्धिः।

२. एधँ वृद्धौ इत्याकारेण धातुरयं धातुप्रकरणे पठितोऽस्ति।



३. एध्-धातुः अनुदात्तः।

४. एध्-धातुः आत्मनेपदी। तस्य धातोः अनुदात्तेत्वात् आत्मनेपदत्वम्।

५. एध्-धातोः आत्मनेपदत्वे अनुदात्तङित आत्मनेपदम् इति सूत्रं प्रमाणम्

६. एध्-धातुः आत्मनेपदी। अतः तस्मात् धातोः तिबादि नव प्रत्यया नोत्पद्यन्ते।

७. एध्-धातुः सेट्।

८. एध्-धातुः अकर्मकः।

९. एध्-धातो लटि तप्रत्यये शपि प्रक्रियाकार्ये एधत इति स्थिते एकारविधायकं सूत्रं टित आत्मनेपदानां टेरे इति।

१०. अचां मध्ये यः अन्त्यः स आदिर्यस्य तस्य सम्पूर्णस्य टिसंज्ञा भवति।

११. (पुस्तकं द्रष्टव्यम्।)

१२. आताम्-प्रत्ययः सार्वधातुकमपित् इति सूत्रेण ङित्।

१३. आतामः आकारस्य इय् आतो ङित इति सूत्रेण विधीयते।

१४. आतोः ङितः इति सूत्रस्य अतः परस्य ङितामाकारस्य इय् स्यादिति अर्थः।

**उत्तराणि- २**

१५. इजादेश्च गुरुमतोऽनृच्छ इति सुत्रस्य वृत्तिः हि इजादिर्यो धातुः गुरुमान् ऋच्छत्यन्यस्तत आम् स्याल्लिटि।

१६. इजादेश्च गुरुमतोऽनृच्छ इति सूत्रेण आम् विधीयते।

१७. आम्प्रत्ययः इत्यत्र कीदृशो आम्प्रत्ययः यस्मात् इति अतद्गुणसंविज्ञानबहुव्रीहिः।

१८. परस्मैपदम्।

१९. आमः इति सूत्रेण आमः परस्य विद्यमानस्य लुक् विधीयते।

२०. लिटस्तझयोरेशिरेच् इत्यत्र तस्य स्थाने एश् झस्य स्थाने च इरेच् इति यथासंख्यमनुदेशः समानाम् इति सूत्रं नियमयति।

२१. (पुस्तकं द्रष्टव्यम्।)

२२. (पुस्तकं द्रष्टव्यम्।)

२३. एधाञ्चकृढ्वे इत्यत्र ध्वमः धस्य ढविधायकं सूत्रं हि इणः षीध्वं लुङ्लिटां धोऽङ्गात्।

**उत्तराणि- ३**

२४. एधिता इत्यत्र इड्विधायकं सूत्रं हि आर्धधातुकस्येड् वलादेः इति।



२५. धि च इत्यत्र धादौ प्रत्यये इत्यर्थः यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधिना आगच्छति।

२६. धि च इत्यत्र प्रत्यये इति प्रत्यये इति अधिकारस्थत्वात् आगच्छति।

२७. एधिताहे इत्यत्र तासः सस्य हकारः ह एति इति सूत्रेण विधीयते।

२८. लोटः एकारस्य आम्विधायकं सूत्रं हि सवाभ्यां वामौ इति।

२९. एधताम् इत्यत्र आमेतः इति सूत्रेण आम् विधीयते।

३०. एधस्व इत्यत्र एकारस्य वविधायकं सूत्रं सवाभ्यां वामौ इति।

३१. एध्-धातोः लोटि उत्तमपुरुषैकवचने एधे इति स्थिते एत ऐ इति सूत्रं प्रवर्तते।

३२. एध्-धातोः आडागमः आडजादीनाम् इति सूत्रेण विधीयते।

३३. आ एध् ल् इति स्थिते वृद्धिविधायकं सूत्रं हि आटश्च इति।

३४. लिङि झस्य रन्-विधायकं सूत्रं झस्य रन्।

३५. एधेरन् इत्यत्र झस्य रन् इत्यस्य अपवादसूत्रस्य सत्त्वात् झेर्जुस् न प्रवर्तते।

३६. एधिषीष्ट इत्यत्र सस्य षकारः आदेशप्रत्यययोः इति सूत्रेण विधीयते।

३७. एध्-धातोः लुङि ध्वमि ऐधिढ्वम् इति रूपं भवति।

३८. आत्मनेपदेष्वनतः इति सूत्रेण झस्य अदादेश विधीयते।

॥ इति विंशः पाठः ॥



# २१

# अदादितः दिवादिपर्यन्तम् - अद् हु दिव् धातवः

## प्रस्तावना

भवन्तः पूर्वं भ्वादिप्रकरणस्य परिचयं प्राप्तवन्तः। भ्वादिप्रकरणमेव तिङन्तप्रकरणस्य हृदयम्। यतो हि धातुरूपप्रक्रियायां यानि मूलस्थानीयानि सूत्राणि सन्ति तानि तस्मिन् आलोचितानि सन्ति। भवन्तः जानन्ति एव यत् व्याकरणं ससोपानक्रमं पठनीयं शास्त्रम्। अतः यदि मूलभूतम् इदं प्रकरणं सम्यक् अधिगतं भवति तर्हि अन्यगणीयधातुरूपप्रक्रियायां न क्लेशः। अस्मिन् पाठे अदादिगणः, जुहोत्यादिगणः, दिवादिगणः चेति गणत्रयस्य आलोचना विधास्यते। तिङ्प्रत्यये परे सति धातोः ये शबादयः प्रत्ययाः विधीयन्ते तेषां विकरणसंज्ञा भवतीति प्राचीनाचार्याणां मतम्। अतः शप्, श्यन्, श इत्यादीनि विकरणानि। प्रतिगणं विकरणभेदोऽस्तीति भवन्तो जानन्ति एव। विकरणभेदात् कथं रूपभेदो भवति इति भवन्तः अग्रे द्रक्ष्यन्ति। यथा अद् + शप् (लुक्) + ति = अत्ति, हु + शप् (श्लु) + ति = जुहोति, दिव् + श्यन् + ति = दिव्यति। बहुत्र धातुरूपाणि विना प्रक्रियां लेखिष्यन्ते। तत्र कारणमिदमस्ति यत् भवन्तः भ्वादिप्रकरणकज्ञानमादाय तत्प्रक्रियां लेखितुम् शक्नुयुः इति भावयामि। भवतां बोधसौकर्याय प्रतिगणं प्रथमधातोः सर्वाणि रूपाणि प्रदत्तानि सन्ति, तानि च कण्ठस्थीयानि येन गणपरिचयः सुष्ठु स्यात्। धात्वन्तराणि ग्रन्थान्तरे द्रष्टव्यानि। यद्यपि प्राक्तनेषु नवसु भ्वादिप्रकरणकपाठेषु यानि सूत्राणि चर्चितानि सन्ति, तेषु केषाञ्चित् साधारणसूत्रत्वात् अग्रिमेषु अदाद्यादिपाठेषु अपेक्षास्ति। तथापि तेषां व्याख्यानं नैव करिष्यते पाठविस्तरभयात्। किञ्च प्रति धातुं सर्वाणि रूपाणि अपि न प्रदर्शयिष्यन्ते। अप्रदर्शितानि रूपाणि स्वयं साधनीयानि।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- प्रतिगणं कीदृशं विकरणं भवति तज्ज्ञास्यति।
- विकरणविधायकसूत्रार्थं ज्ञास्यति।
- तत्र तत्र व्याख्यातानि विशेषसूत्राणि अवगमिष्यति।



- अद्-धातुरूपाणि साधयितुं शक्नुयात्।
- हु-धातुरूपाणि साधयितुं पारयेत्।
- दिव्-धातुरूपाणि साधयितुम् अर्हेत्।
- एतज्ज्ञात्वा च अन्यानि अपि धातुरूपाणि साधयितुं प्रभवेत्।
- तत्र तत्र प्रदर्शितानि वैकल्पिकरूपाणि अपि ज्ञास्यति।

## अदादिगणः

भक्षणार्थे वर्तमानात् अदादिगणे पठितत्वात् भूवादयो धातवः इत्यनेन धातुसंज्ञकात् सकर्मकात् अनिटः अन्ताकारोदात्तेतः अद्-धातोः लः कर्मणि च भावे चाकर्मकेभ्यः इत्यनेन कर्तरि दश लकाराः पर्यायेण प्राप्ताः। एषु कतमेनात्र भाव्यमित्याकाङ्क्षायां वर्तमानक्रियावृत्तित्वविवक्षायां वर्तमाने लट् इति अद्धातोः **लटि** उपदेशेऽजनुनासिक इत् इत्यनेन अकारस्य, हलन्त्यम् इत्यनेन च टकारस्य इत्संज्ञायां तस्य लोपः इति तयोर्लोपे च कृते लशक्वतद्धिते इत्यनेन लस्य इत्संज्ञायां प्राप्तायाम् उच्चारणसामर्थ्यात् लस्य इत्त्वाभावे अद् ल् इति स्थिते लस्य इत्यधिकृत्य तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्वम्-इड्वहिमहिङ् इत्येते अष्टादश लादेशाः प्राप्ताः। तेषां समेषां लः परस्मैपदम् इत्यनेन परस्मैपदसंज्ञायां प्राप्तायां तङानावात्मनेपदम् इत्यनेन अपवादत्वेन तङ्प्रत्याहारान्तःपातिनां नवानाम् आत्मनेपदसंज्ञा सञ्जाता। एषु सर्वेषु तिङ्प्रत्ययेषु प्राप्तेषु परस्मैपदसंज्ञका आहोस्वित् आत्मनेपदसंज्ञकाः प्रत्ययाः स्युरिति सन्देहे अद्धातोः आत्मनेपदनिमित्तहीनत्वात् शेषात् कर्तरि परस्मैपदम् इत्यनेन कर्तरि परस्मैपदसंज्ञकाः नव प्राप्ताः। तत्र च तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः इत्यनेन क्रमात् त्रयाणां त्रिकाणां प्रथममध्यमोत्तमसंज्ञासु जातासु मध्यमोत्तमयोः अविषयत्वात् शेषे प्रथमः इत्यनेन प्रथमसंज्ञकाः त्रयः प्राप्ताः। तत्रापि तान्येकवचनद्विवचनबहुवचनान्येकशः इत्यनेन लब्धप्रथमादिसंज्ञानां तिङां त्रयाणाम् एकशः एकवचनद्विवचनबहुवचनसंज्ञाः विहिताः। तत्रापि कर्तुः एकत्वविवक्षायां द्व्येकयोर्द्विवचनैकवचने इत्यनेन एकवचनसंज्ञके तिप्-प्रत्यये हलन्त्यम् इत्यनेन पकारस्य इत्संज्ञायां तस्य लोप इति तल्लोपे अद् ति इति जाते तिपः तिङ्त्वात् धात्वधिकारोक्तत्वाच्च तिङ्शित्सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञायां कर्तरि शप् इत्यनेन शपि अद् शप् ति इति स्थिते सूत्रमिदमारभ्यते -

### [२१.१] अदिप्रभृतिभ्यः शपः॥ (२.४.७२)

**सूत्रार्थः** - अदिप्रभृतिभ्यः शपः लुक् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। अदिप्रभृतिभ्यः (५/३) शपः (६/१) इति सूत्रगतपदच्छेदः। अदिः प्रभृतिः (आदिः) येषां ते अदिप्रभृतयः इति तद्गुणसंविज्ञानबहुव्रीहिसमासः, तेभ्यः अदिप्रभृतिभ्यः। ण्यक्षत्रियार्षञितो यूनि लुगणिञोः इत्यतः लुक् (१/१) इति पदम् अनुवर्तते। दशसु धातुगणेषु अदादिः द्वितीयः धातुगणः। सूत्रार्थस्तावत् - अदादिगणपठितधातुभ्यः विहितस्य शपः लुक्



स्यात् इति। प्रत्ययस्य लुक्-श्लु-लुपः इति सूत्रेण प्रत्ययादर्शनस्य लुक् भवति।लुक्-लोपयोः प्रत्ययादर्शनरूपसमानफलकत्वेऽपि लोप इति तु नोक्तम् सूत्रकृता पाणिनिना। लोपो भवति इति उच्यते चेत् प्रत्ययलोपे प्रत्ययलक्षणम् (१.१.६२) इति प्रत्ययलक्षणेन इतः वित्तः इत्यादौ शब्निमित्तकगुणः प्राप्तः स्यात्। अतः तद्वारणाय लुक् इत्येव उक्तम्। तथा सति न लुमताङ्गस्य (१.१.६३) इत्यनेन प्रत्ययलक्षणनिषेधे न शब्निमित्तकगुणः।

**उदाहरणे सूत्रार्थसमन्वयः -** उपरि उक्तप्रकारेण अद्-धातोः तिपि शपि अदिप्रभृतिभ्यः शपः इत्यनेन शपः लुकि अद् ति इति जाते खरि च इत्यनेन दकारस्य स्थाने चर्त्वे तकारादेशे **अत्ति** इति रूपं सिध्यति। एवमेव प्रथमपुरुषद्विवचने तसि शपि तस्य च लुकि अत् तस् इति जाते समुदायस्य तिङन्तत्वेन पदसंज्ञायां ससजुषो रुः इत्यनेन पदान्तसकारस्य रुत्वे अनुबन्धलोपे रेफस्य खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गे वर्णसम्मेलने च **अत्तः** इति रूपम्। बहुवचने झप्रत्यये झकारस्य स्थाने अन्त् इत्यादेशे अद् अन्त् इ इति जाते सर्वर्णसम्मेलने च **अदन्ति** इति रूपम्। सिपि, थसि, थे च प्रत्यये चर्त्वं भवत्येव। उत्तमपुरुषे खर्-परत्वाभावात् नैव चर्त्वम्।

तथा हि **लटि** परस्मैपदे रूपाणि - **अत्ति, अत्तः, अदन्ति। अत्सि, अत्थः, अत्थ। अद्मि, अद्वः, अद्मः।**

{सूत्रम्. **खरि च** (८.४.५५) = खरि झलां चरः स्युः।}

**लिटि** अद् लिट् इति दशायाम् अग्रिमसूत्रमारभ्यते -

## [२१.२] लिट्यन्यतरस्याम्॥ (२.४.४०)

**सूत्रार्थः** - अदः घसॢ वा स्यात् लिटि।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। लिटि अन्यतरस्याम् इति सूत्रगतपदच्छेदः। लिटि इति सप्तम्येकवचनान्तम्। अन्यतरस्यामिति सप्तमीविभक्तिप्रतिरूपकमव्ययम्। अदो जग्धिर्ल्यप्ति किति इति सूत्रतः अदः (६/१) इत्यस्य, लुङ्सनोर्घसॢ इत्यतः घसॢ (१/१) इत्यस्य चानुवृत्तिर्भवति। ऌकारः इत्संज्ञकः, अनुनासिकत्वात्। अतः घस्मात्रमवशिष्यते। ऌदित्करणस्य प्रयोजनं पुषादिद्युताद्यॢदितः इति सूत्रेण च्लेः अङादेशविधानम्। घसॢ इत्यादेशः अनेकाल् अस्ति। अनेकाल्त्वात् च अनेकाल्शित्सर्वस्य इति परिभाषया अयं सर्वादेशो भवति।

**उदाहरणे सूत्रार्थसमन्वयः -** अद्-धातोः भूतानद्यतनपरोक्षार्थवृत्तित्वविवक्षायाम् परोक्षे लिटि इति कर्तरि **लिटि** प्रथमपुरुषैकवचनविवक्षायाम् तिपि अनुबन्धलोपे अद् ति इति जाते परस्मैपदानां णलतुसुस्-थलथुस-णल्वमाः इति सूत्रेण तिपो सर्वादेशे णलि अनुबन्धलोपे अद् अ इति स्थिते अनेकाल्शित्सर्वस्य इति परिभाषासहयोगेन अदः सम्पूर्णस्य स्थाने लिट्यन्यतरस्याम् इति प्रकृतसूत्रेण घसॢ-इत्यादेशो भवति। ततः घस् अ इति जाते लिटि धातोरनभ्यासस्य इत्यनेन द्वित्वे घस् घस् अ इति जायते। ततः द्विरुक्तस्य पूर्वभागस्य घस् इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायां हलादिः शेषः इति सूत्रेण अभ्यासस्य आदेः हलः शेषे घ घस् अ इति जाते कुहोश्चुः इत्यनेन चुत्वे अभ्यासस्य



घकारस्य स्थाने झकारादेशे अभ्यासे चर्च इत्यनेन जश्त्वे जकारे जघस् अ इति जायते। ततः अत उपधायाः इत्यनेन उपधासंज्ञकस्य घकारोत्तरवर्तिनः अकारस्य वृद्धौ जघास् अ इति जाते वर्णसम्मेलने च **जघास** इति रूपं सिध्यति।

लिटि प्रथमपुरुषद्विवचने तसि तसः स्थाने अतुसि अदः घसॢ-इत्यादेशे लिटि धातोनभ्यासस्य (६.१.८) इत्यनेन द्वित्वस्य तथा गमहनजनखनघसां लोपः क्ङित्यनङि (६.४.९८) इत्यनेन उपधालोपस्य च युगपत् प्राप्तौ परत्वात् प्राप्तस्य उपधालोपस्य द्विर्वचनेऽचि इत्यनेन निषेधे द्वित्वमेव आदौ भवति। ततः कुहोश्चुः इत्यनेन अभ्यासघकारस्य झकारे झकास्य जश्त्वे जकारे हलादिशेषे जघस् अतुस् इत्यवस्थायाम् उपधालोपे ज घ् स् अतुस् इति जायते। ततः सकारः न प्रत्यययावयवः न वा आदेशरूप इति कृत्वा आदेशप्रत्यययोः इत्यनेन घकारोत्तरवर्तिनः सकारस्य षत्वे अप्राप्ते आरभ्यते -

## [२१.३] शासिवसिघसीनां च॥ (८.३.६०)

**सूत्रार्थः** - शासिवसिघसीनाम् इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। शासिवसिघसीनाम् (६/३) च इति सूत्रगतपदच्छेदः। इण्कोः (५/१) इत्यधिक्रियते। सहेः साडः सः इत्यतः सः (६/१) इत्यस्य, अपदान्तस्य मूर्धन्यः इत्यतः मूर्धन्यः (१/१) इत्यस्य चानुवृत्तिर्भवति। इण् इति प्रत्याहारः। तत्र णकारः लण् इति परसूत्रस्थः न तु अइउण् इति पूर्वसूत्रस्थः। कुः इत्यनेन कवर्गस्य ग्रहणम्। सूत्रार्थो हि शासिवसिघसीनाम् इण्प्रत्याहारस्थवर्णात् अथवा कवर्गस्थवर्णात् परस्य सस्य षकारः भवति इति। ईषद्विवृतयत्नवतः सकारस्य स्थाने ईषद्विवृतयत्नवान् षकार एव मूर्धन्यादेशो भवति नान्यः।

**उदाहरणे सूत्रार्थसमन्वयः** - उपरि उक्तप्रकारेण अद्-धातोः लिटि तसि अतुसि ज घ् स् अतुस् इति जाते घसः सकारस्य प्रकृतसूत्रेण षकारे ज घ् ष् अतुस् इति जायते। ततः खरि च इत्यनेन घकारस्य स्थाने चर्त्वे ककारादेशे ज क् ष् अतुस् इति जाते अतुसः सकारस्य रुत्वे रेफस्य च विसर्गे **जक्षतुः** इति रूपं सिध्यति। एवमेव जक्षुः इत्यत्र प्रक्रिया।

लिटि मध्यमपुरुषैकवचनविवक्षायाम् सिपि थलि घस् थ इति जाते आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः प्राप्तः। परन्तु क्रादिनियमानुसारं नित्यम् इडागमे द्वित्वादिकार्ये जघसिथ इति रूपं भवति। एवम् वसि (वे) मसि (मे)च इडागमो बोध्यः।

तिप्-सिप्-मिप् इत्येतान् प्रत्ययान् विहाय अन्यत्र असंयोगाल्लिट् कित् इत्यनेन किद्वद्भावो भवति। अतः तत्र गमहनजनखनघसां लोपः क्ङित्यनङि इत्यनेन उपधालोपे जक्ष् इति भवति। उत्तमपुरुषैकवचने मिपि णलि णलः विकल्पेन णित्त्वात् णित्त्वपक्षे अत उपधायाः इति वृद्धौ **जघास** इति रूपम्, णित्त्वाभावपक्षे न वृद्धिः। तेन **जघस** इति रूपम्।

एवञ्च **लिटि** परस्मैपदे घसॢ-इत्यादेशपक्षे रूपाणि - **जघास, जक्षतुः, जक्षुः। जघसिथ, जक्षथुः, जक्ष। जघास-जघस, जक्षिव, जक्षिम।**





घस्लृ-आदेशाभावपक्षे अत आदेः इत्यनेन अभ्यासस्य अकारस्य दीर्घे आकारे अकः सवर्णे दीर्घः इति सवर्णदीर्घे च **आद, आदतुः, आदुः** इत्येवं रूपाणि सिध्यन्ति।

{सूत्रम्. **अत आदेः** (७.४.७०) = अभ्यासस्यादेरतो दीर्घः स्यात्।}

सिपि थलि अद् थ इति स्थिते अदः दकारान्तानुदात्तेषु पाठात् इण्निषेधो भवति। किन्तु क्रादिनियमेन पुनः इट् प्राप्तः। ततः उपदेशेऽत्वतः इत्यनेन थलि इण्निषेधे ऋतो भारद्वाजस्य इत्यनेन विकल्पेन इट् प्राप्तः। किन्तु थलि नित्यम् इड्विधानमभीष्टमस्ति। अतः सूत्रमिदमारभ्यते -

## [२१.४] इडत्त्यर्तिव्ययतीनाम्॥ (७.२.६६)

**सूत्रार्थः** - अद् ,ऋ, व्येञ् एभ्यस्थलः नित्यम् इट् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। इट् अत्त्यर्तिव्ययतीनाम् इति सूत्रगतपदच्छेदः। इट् इति प्रथमैकवचनान्तम्। अत्त्यर्तिव्ययतीनाम् इति षष्ठीबहुवचनान्तम्। अचस्तास्वत्थल्यनिटो नित्यम् इति योगात् थलि इत्यनुवर्तते। तस्य च षष्ठ्येकवचनान्ततया विभक्तविपरिणामः। अद् , ऋ, व्येञ् इत्येतेभ्यः इक्श्तिपौ धातुनिर्देशे इत्यनेन श्तिप्प्रत्ययः। तेन अत्तिश्च अर्तिश्च व्ययतिश्च तेषाम् अत्त्यर्तिव्ययतीनाम् इति इतरेतरयोगद्वन्द्वः। इटः टकारः इत्संज्ञकः। तेन आद्यन्तौ टकितौ इति परिभाषया इट् थलः आद्यावयवो भवति। सूत्रार्थः - अद् ,ऋ, व्येञ् इत्येतेभ्यः धातुभ्यः परस्य थलः नित्यम् इडागमो भवति।

**उदाहरणम्** - ऋधातोः उदाहरणम् - आरिथ। व्येञः उदाहरणम्- विव्ययिथ। अदः उदाहरणम् - **आदिथ**। प्रसङ्गवशात् एतदेव उदाहरणम् अधुना आलोच्यते।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण अद् थ इति स्थिते अदः परं थल्प्रत्ययोऽस्ति। अतः प्रकृतसूत्रेण नित्यम् इडागमे द्वित्वे हलादिशेषे अत आदेः इत्यनेन अभ्यासस्याकारस्य दीर्घे सवर्णदीर्घे वर्णसम्मेलने **आदिथ** इति रूपं सिध्यति।

एवञ्च **लिटि** घस्लृ इत्यादेशाभावपक्षे - **आद, आदतुः, आदुः। आदिथ, आदथुः, आद। आद, आदिव, आदिम** इत्येवं रूपाणि भवन्ति। पाठविस्तरभयात् न सर्वाणि सूत्राणि प्रयज्य रूपसिद्धिः प्रदर्श्यते।

भविष्यत्यनद्यतनार्थक्रियावृत्तित्वविवक्षायाम् अनद्यतने लुट् इति कर्तरि **लुटि** प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे तिङ्शित्सार्वधातुकम् इति तिपः सार्वधातुकसंज्ञायां तस्मिन् परे कर्तरि शप् इति सूत्रेण प्राप्तम् शपम् अपवादत्वेन प्रबाध्य स्यतासी लृलुटोः इति सूत्रेण धातोः तासिप्रत्यये अद् तास् ति इति जाते यथासंख्यमनुदेशः समानाम् इति परिभाषया परिष्कृतेन लुटः प्रथमस्य डारौरसः इति सूत्रेण तिपः स्थाने डादेशे अनुबन्धलोपे टेः इति सूत्रेण अद् तास् इत्यस्य अभस्यापि टेः आसः लोपे अद् त् आ इति जाते खरि च इत्यनेन चर्त्वे दकारस्य तकारे **अत्ता** इति रूपं सिध्यति। अत्र लुटि शप्प्रत्ययापवादस्य तासः आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधः। एवमग्रेऽपि बोध्यम्।



तथा च **लुटि** परस्मैपदे रूपाणि - **अत्ता, अत्तारौ, अत्तारः। अत्तासि, अत्तास्थः, अत्तास्थ। अत्तास्मि, अत्तास्वः, अत्तास्मः।** लुटि सर्वत्रैव एकाच उपदेशेऽनुदात्तात् इत्यनेन इण्निषेधः।

भविष्यदर्थात् अत्तेः क्रियार्थायां क्रियायाम् असत्याम् लृट् शेषे च इति कर्तरि **लृटि** प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे तिङ्शित्सार्वधातुकम् इति तिपः सार्वधातुकसंज्ञायां तस्मिन् परे कर्तरि शप् इति सूत्रेण प्राप्तम् शपम् अपवादत्वेन प्रबाध्य स्यतासी लृलुटोः इति सूत्रेण धातोः स्यप्रत्यये अद् स्य ति इति जाते शप्प्रत्ययापवादस्य स्यस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधः। ततः खरि च इति चर्त्वे दकारस्य तकारे **अत्स्यति** इति रूपम्। अग्रेऽपि इत्थं प्रक्रिया।

तथा च लृटि परस्मैपदे रूपाणि - **अत्स्यति, अत्स्यतः, अत्स्यन्ति। अत्स्यसि, अत्स्यथः, अत्स्यथ। अत्स्यामि, अत्स्यावः, अत्स्यामः।**

विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु अर्थेषु वृत्तित्वविवक्षायां लोट् च इति सूत्रेण कर्तरि **लोटि** प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे शपि शपः लुकि अत् ति इति जाते तेः इकारस्य उत्वे खरि च इति अतः तकारस्य चर्त्वे तकारे वर्णसम्मेलने **अत्तु** इति रूपं, पक्षे 'ङिच्च' इति सूत्रापेक्षया परत्वेन अनेकाल्शित् सर्वस्य इति सूत्रेण परिभाषारूपेण परिष्कृतेन तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् इति सूत्रेण तोः तातङि सर्वादेशे अनुबन्धलोपे संयोगे **अत्तात्** इत्यपि रूपम्। तसि - लोटो लङ्वत् इति सूत्रेण लोटो लङ इव कार्यातिदेशेन तस्थस्थमिपां तान्तन्तामः इति सूत्रेण तसः स्थाने यथाक्रमं ताम् इति सर्वादेशे वर्णसम्मेलने **अत्ताम्** इति रूपम्। झिप्रत्यये झकारस्य स्थाने अन्त् इत्यादेशे **अदन्तु** इति रूपं भवति। ततः मध्यमपुरुषैकवचने सिपि अनुबन्धलोपे सेर्ह्यपिच्च इत्यनेन सिपः हि इत्यादेशे शपो लुकि अद् हि इति स्थिते अग्रिमसूत्रमिदं प्रवर्तते -

## [२१.५] हु-झल्भ्यो हेर्धिः॥ (६.४.१०१)

**सूत्रार्थः** - होः झलन्तेभ्यश्च हेः धिः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदत्रयमस्ति। हुझल्भ्यः हेः धिः इति सूत्रगतपदच्छेदः। हुश्च झलश्च तेषाम् इतरेतरयोगद्वन्द्वः हुझलः, तेभ्यो हुझल्भ्यः इति पञ्चमीबहुवचनान्तम्। हेः इति षष्ठ्येकवचनान्तम्। धिः इति प्रथमैकवचनान्तम्। अङ्गस्य (६/१) इत्यधिक्रियते। तस्य च झल्भ्यः इति विशेषणम् अतः तदन्तविधौ झलन्तेभ्य इत्यर्थलाभः। धि इत्यनेकाल् अस्ति। अतः अनेकाल्शित्सर्वस्य इति परिभाषया हेः स्थाने धि इति सर्वादेशः। हु इति जुहोत्यादिगणीयः प्रथमः धातुः। सूत्रार्थस्तावत् - हुधातोः परस्य झलन्तेभ्यश्च परस्य हेः स्थाने धि इत्यादेशो भवति इति।

**उदाहरणम्** - हुधातोः उदाहरणम् अग्रे वक्ष्यते। अत्र झलन्तस्य उदाहरणम् आलोच्यते। पूर्वोक्तप्रकारेण अद् हि इति स्थिते अद्-धातुः झलन्तः। ततः परम् हि इत्यपि अस्ति। अतः प्रकृतसूत्रेण हेः धि इति सर्वादेशे **अद्धि** इति रूपं सिध्यति, पक्षे तातङि **अत्तात्** इत्यपि। एवञ्च मध्यमपुरुषे **अद्धि-अत्तात्, अत्तम्, अत्त** इति रूपाणि।





उत्तमपुरुषप्रथमैकवचने मिपि अनुबन्धलोपे शपि शपो लुकि मेर्निः इत्यनेन मेः नि इत्यादेशे आडुत्तमस्य पिच्च इत्यनेन आडागमे **अदानि** इति रूपं सिध्यति। वसि **अदाव**, मसि **अदाम**। नित्यं ङितः इति सकारलोपः।भूतानद्यतनक्रियावृत्तित्वविवक्षायाम् अनद्यतने लङ् इति कर्तरि लङि आडजादीनाम् इत्यनेन आडागमे प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे शपि शपो लुकि इतश्च इत्यनेन इकारलोपे आ अद् त् इति स्थिते अग्रिमसूत्रं प्रवर्तते -

## [२१.६] अदः सर्वेषाम्॥ (३.४.१११)

**सूत्रार्थः** - अदः परस्य अपृक्तसार्वधातुकस्य अट् स्यात् सर्वमतेन।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। अदः इति पञ्चम्येकवचनान्तम्। सर्वेषाम् इति षष्ठीबहुवचनान्तम्। अस्तिसिचोऽपृक्ते इत्यतः अपृक्ते इति पदम् अनुवर्तते। तस्य च विभक्तविपरिणामेन अपृक्तस्य इति षष्ठ्येकवचनान्ततया विपरिणामः। तुरुस्तुशम्यमः सार्वधातुके इत्यतः सार्वधातके इति पदमनुवर्तते। तस्य च विभक्तिविपरिणामेन सार्वधातुकस्य इति षष्ठ्येकवचनान्ततया विपरिणामः। अड् गार्ग्यगालवयोः इत्यस्मात् अट् (१/१) इत्यस्यानुवृत्तिर्भवति। अदः इति पञ्चम्यन्तम् पदम् । अतः तस्मादित्युत्तरस्य इति परिभाषा प्रवर्तते। तेन च उत्तरस्य इत्यर्थलाभः। तथा च अद्-धातोः उत्तरस्य अपृक्तस्य सार्वधातुकप्रत्ययस्य अडागमो भवति इत्यस्मिन् विषये सर्वेषाम् आचार्याणाम् ऐकमत्यम् अस्ति इति सूत्रार्थः। टित्करणात् अट् आद्यन्तौ टकितौ इति परिभाषया अपृक्तसार्वधातुकस्य आद्यावयवो भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण आ अद् त् इति जाते त् इति अपृक्तोऽस्ति अपृक्त एकाल्प्रत्ययः इत्यनेन। किञ्च तिङ्शित्सार्वधातुकम् इति सार्वधातुकमपि अस्ति। अतः प्रकृतसूत्रेण अडागमे आद्यन्तौ टकितौ इति परिभाषासहयोगेन च अनुबन्धलोपे आ अद् अ त् इति जायते। ततः आटश्च इत्यनेन वृद्धौ वर्णसम्मेलने च **आदत्** इति रूपं सिध्यति। तसि झौ थसि थे वसि मसि च न अट् एकाल्प्रत्ययाभावात्। अद्धातोः झौ प्रक्रियया आदन्त् इति समुदायस्य तिङन्तत्वात् पदसंज्ञायाम् संयोगान्तस्य लोपः इति सूत्रेण अन्त्यस्य तकारस्य लोपे **आदन्**। अदः सिपि प्रक्रियया आद् अ स् इति जाते सिपः सस्य रुत्वे रेफस्य च विसर्गे कृते **आदः** इति रूपम्। इति। वसि मसि च सकारलोपः नित्यं ङितः इति योगेन।

तथा च लुङि परस्मैपदे रूपाणि - **आदत्, आत्ताम्, आदन्। आदः, आत्तम्, आत्त। आदम्, आद्व, आद्म।**

विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनार्थवृत्तित्वविवक्षायाम् विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् इति योगेन अद्-धातोः कर्तरि **विधिलिङि** प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे शपि शपो लुकि अद् ति इति जाते यासुट् परस्मैपदेषूदात्तो ङिच्च इत्यनेन तेः यासुडागमे अनुबन्धलोपे अद् यास् ति इति जाते सुट्तिथोः इति तिपः तकारस्य सुडागमे अनुबन्धलोपे अद् यास् स् ति इति जाते लिङः सार्वधातुकत्वात् लिङः सलोपोऽनन्त्यस्य इत्यनेन



अनन्त्यस्य सकारद्वयस्य लोपे इतश्च इति तेः इकारलोपे वर्णसम्मेलने च **अद्यात्** इति रूपं भवति। झौ अद् या उस् इत्यवस्थायाम् उस्यपदान्तात् इत्यनेन पररूपम्। लोटो लङ्वत् इति सूत्रेण लोटो लङ इव कार्यातिदेशेन तस्थस्थमिपां तान्तन्तामः इति सूत्रेण तसः स्थाने तामादेशः, थसः स्थाने तमादेशः, थस्य स्थाने च तादेशः। वसि मसि च नित्यं ङितः इति सकारलोपः। तथा च लिङि रूपाणि - **अद्यात्, अद्याताम्, अद्युः। अद्याः, अद्यातम्, अद्यात। अद्याम्, अद्याव, अद्याम।**

आशीर्वादार्थे आशिषि लिङ्लोटौ इति कर्तरि **आशीर्लिङि** तिपि यासुटि सुटि इतश्च इति इकारलोपे अद् यास् स् त् इति स्थिते (लिङाशिषि इत्यनेन आशीर्लिङः आर्धधातुकत्वात् लिङः सलोपोऽनन्त्यस्य इत्यनेन सकारस्य लोपो न भवति।) स्त् इत्यस्य हलोऽनन्तराः संयोगः इति संयोगसंज्ञायाम् स्कोः संयोगाद्योरन्ते च इत्यनेन संयोगादिसकारलोपे अद् यास् त् इति जाते पुनः संयोगादिसकारलोपे अद्यात् इति रूपं सिध्यति। तसि तसः तामि अद् यास् स् ताम् इति जाते स्स् इत्यस्य संयोगसंज्ञायाम् स्कोः संयोगाद्योरन्ते च इत्यनेन झल्परत्वात् संयोगादिसकारलोपे अद्यास्ताम् इति रूपम्। एवम् अग्रेऽपि। आशीर्लिङि रूपाणि तावत् - **अद्यात्, अद्यास्ताम्, अद्यासुः। अद्याः, अद्यास्तम्, अद्यास्त। अद्यासम्, अद्यास्व, अद्यास्म।**

**लुङि** घसॢ इत्यादेशविधानाय सूत्रमिदमारभ्यते -

## [२१.७] लुङ्सनोर्घसॢ॥ (२.४.३७)

**सूत्रार्थः** - अदः घसॢ स्यात् लुङि सनि च।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। लुङ्सनोः घसॢ इति सूत्रगतपदच्छेदः। लुङ् च सन् च तयोरितरेतरयोगद्वन्द्वे लुङ्सनौ, तयोः लुङ्सनोः। लुङ्सनोः इति सप्तमीद्विवचनान्तम्। घसॢ इति प्रथमैकवचनान्तम् (अविभक्तिको निर्देशः)। अदो जग्धिर्ल्यप्ति किति इत्यतः अदः (६/१) इत्यस्यानुवृत्तिर्भवति। घसॢ इत्यत्र ॡकारस्य अनुनासिकत्वात् घस्मात्रं शिष्यते। घसॢ इति अनेकाल् अस्ति। अतः अनेकाल्शित्सर्वस्य इति परिभाषया घसॢ इति सर्वादिशो भवति। सूत्रार्थो हि अदः स्थाने घसॢ इत्यादेशः स्यात् लुङि सनि च परतः। ॡदित्करणस्य फलं तु उक्तमेव अस्ति।

**उदाहरणे सूत्रार्थसमन्वयः** - अद्-धातोः भूतार्थक्रियावृत्तित्वविक्षायाम् लुङ् इति योगेन कर्तरि लुङि प्रथमपुरुषैकवचने तिपि इकारलोपे प्रकृतसूत्रेण अदः स्थाने घसॢ इति सर्वादिशे अनुबन्धलोपे घस् त् इति जायते। ततः प्राप्तं शपं प्रबाध्य च्लि लुङि इत्यनेन च्लौ पुषादिद्युताद्यॢदितः परस्मैपदेषु इति सूत्रेण च्लेः स्थाने अङादेशे लुङ्लङ्लृङ्क्ष्वडुदात्तः इत्यनेन घस अङ्गस्य अडागमे अनुबन्धलोपे च अ घस् अ त् इति जाते वर्णसम्मेलने च **अघसत्** इति रूपं सिध्यति। अत्र अङः वलादित्वाभावात् नैव इडागमप्रसक्तिः। गमहनजनखनघसां लोपः क्ङित्यनङि इत्यनेन अनङि इति निषेधः उक्तः। तेन प्रकृते अङि परे उपधालोपो न।

(बहुत्र 'इति योगेन' इति शब्दः प्रयोगः अस्ति। सूत्रमेव योगः कथ्यते। अतः इति योगेन इत्यस्य इति सूत्रेण इत्यर्थो बोद्धव्यः।)



एवञ्च लुङि परस्मैपदे रूपाणि - **अघसत्, अघसताम्, अघसन्। अघसः, अघसतम्, अघसत। अघसम्, अघसाव, अघसाम।**

सनः उदाहरणं तु ग्रन्थान्तरे द्रष्टव्यम्।

क्रियायाः अनिष्पतौ गम्यमानायां लिङ्निमित्ते लृङ् क्रियातिपत्तौ इति अदः कर्तरि **लृङि** आडजादीनाम् इति आडागमे आटश्च इत्यनेन वृद्धौ प्रथमपुरुषैकवचने तिपि इकारलोपे शप्-अपवादभूते स्यप्रत्यये अनुबन्धलोपे च आ अद् स्य त् इति जाते शप्प्रत्ययापवादस्य स्यस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधः। ततः आटश्च इत्यनेन वृद्धौ खरि च इति चर्त्वे दकारस्य तकारे **आत्स्यत्** इति रूपम् सिध्यति। एवम् तसादौ उह्यम्।

लृङि रूपाणि तावत् - **आत्स्यत्, आत्स्यताम्, आत्स्यन्। आत्स्यः, आत्स्यतम्, आत्स्यत। आत्स्यम्, आत्स्याव, आत्स्याम।**

---

## ।।इति अदादिगणः।।

---



## पाठगतप्रश्नाः-१

३९. कति धातुगणाः भवन्ति।

४०. शपो लुक् केन विधीयते।

४१. अघसत् इत्यत्र घसॢ इत्यादेशः केन भवति।

४२. अदः सर्वेषाम् इत्यस्य कोऽर्थः।

४३. अद्धि इत्यत्र धि इत्यादेशः केन।

४४. जक्षुः इत्यत्र षत्वं केन।

४५. जघास इत्यत्र घसॢ इत्यादेशः केन।

४६. अदिप्रभृतिभ्यः शपः इत्यत्र प्रभृतिशब्दस्य कोऽर्थः।

४७. अद्-धातोः कोऽर्थः।

४८. अद्-धातोः लिटि प्रथमपुरुषैकवचने कति रूपाणि भवन्ति, तानि च कानि।



# अथ जुहोत्यादिगणः

हु दानादनयोः इति सकर्मकात् परस्मैपदिनः अनिटः जुहोत्यादिगणीयात् धातोः **लटि** प्रथमपुरुषैकवचने तिपि तिपः सार्वधातुकत्वात् कर्तरि शप् इत्यनेन शपि हु शप् ति इति जाते सूत्रमिदं प्रवर्तते -

## [२१.८] जुहोत्यादिभ्यः श्लुः॥ (२.४.७५)

**सूत्रार्थः** - शपः श्लुः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। जुहोत्यादिभ्यः (५/३), श्लुः (६/१) इति सूत्रगतपदच्छेदः। जुहोतिः आदिः येषां ते जुहोत्यादयः, तेभ्यः जुहोत्यादिभ्यः। जुहोत्यादिः दशसु धातुगणेषु तृतीयः। जुहोतिः इति हु-धातोः धातुनिर्देशाय इक्-श्तिपौ धातुनिर्देशे इत्यनेन श्तिपि रूपम्। अदिप्रभृतिभ्यः शपः इत्यतः शपः (६/१) इति पदमनुवर्तते। ततः जुहोत्यादिभ्यः शपः श्लुः इति पदयोजना। तेन जुहोत्यादिभ्यः विहितस्य शपः श्लुः स्यात् इति सूत्रार्थः। श्लुः अपि प्रत्ययादर्शनस्य संज्ञा भवति। यथा अदादिगणे लुक् अपि प्रत्ययादर्शनं मन्यते। प्रत्ययस्य लुक्-श्लु-लुपः इत्यनेन प्रत्ययस्य अदर्शनस्यैव लुक् श्लु लुप् इति संज्ञात्रयं भवति। तेन हु-आदिधातुभ्यः विहितस्य शपः अदर्शनम् भवति इति फलितम्। श्लुः लुप् इत्यनयोः प्रत्ययादर्शनरूपसमानफलकत्वेऽपि सूत्रे श्लुः इत्येव उक्तं न तु लुप्। यतो हि श्लु इत्युच्यते चेत् प्रत्ययलोपे प्रत्ययलक्षणम् इत्यनेन प्राप्तस्य प्रत्ययलक्षणकार्यस्य न लुमताङ्गस्य इत्यनेन निषेधो भवति। किञ्च लोपे सति स्थानिवद्भावो भवति, श्लुकरणे तु न स्थानिवद्भावः। श्लुसंज्ञायाः किं फलम् तद् अग्रिमे सूत्रे ज्ञास्यते।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण हु शप् ति इति स्थिते प्रकृतसूत्रेण शपो श्लौ हु ति इति जाते सूत्रमिदमारभ्यते -

## [२१.९] श्लौ॥ (६.१.१०)

**सूत्रार्थः** - धातोः द्वे स्तः श्लौ परे।

**सूत्रव्याख्या** - श्लौ (७/१) इति एकपदमिदं सूत्रम्। सूत्रमिदं विधिसूत्रम्। लिटि धातोरनभ्यासस्य इत्यतः धातोः (६/१) इति पदस्य, एकाचो द्वे प्रथमस्य इत्यतः द्वे (१/२) इति पदस्य च अनुवृत्तिर्भवति। तथा च श्लौ धातोः द्वे इति पदयोजना। तेन श्लौ परे धातोः द्वित्वं भवति इति सूत्रार्थः सिध्यति।

**उदाहरणे सूत्रार्थसमन्वयः** - उपरि उक्तप्रकारेण हुधातोः तिपि शपि शपो श्लौ हु ति इति जाते श्लौ इति प्रकृतसूत्रेण हु इति धातोः द्वित्वे हु हु ति इति जायते। ततः पूर्वोऽभ्यासः इत्यनेन प्रथमभागस्य अभ्याससंज्ञायाम् अभ्यासस्य हु इत्यस्य हकारस्य कुहोश्चुः इत्यनेन चुत्वे गुणत आन्तर्याद् झकारे



तत्स्थाने अभ्यासे चर्च इत्यनेन जश्त्वे जकारे जु हु ति इति जायते। ततः तिपः सार्वधातुकत्वात् होः उकारस्य सार्वधातुकार्धधातुकयोः इत्यनेन गुणे ओकारे **जुहोति** इति रूपं सिध्यति।

तिप् सिप् मिप् इत्येतान् प्रत्ययान् विहाय अन्येषां प्रत्ययानां सार्वधातुकमपित् इत्यनेन ङिद्वद्भावे क्ङिति च इत्यनेन गुणनिषेधः। अत एव प्रथमपुरुषद्विवचने न गुणः। तेन **जुहुतः** इति रूपं भवति।

प्रथमपुरुषबहुवचने झिप्रत्यये शपि श्लौ द्वित्वादिकार्ये जु हु झि इति जाते झोऽन्तः इत्यनेन झस्य अन्तादेशे प्राप्ते सूत्रमिदमारभ्यते -

## [२१.१०] अदभ्यस्तात्॥ (७.१.४)

**सूत्रार्थः** - अभ्यस्तात् झस्य अत् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। अत् (१/१) अभ्यस्तात् (५/१) इति सूत्रगतपदच्छेदः। आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इत्यतः अनुवृत्तस्य प्रत्ययादीनाम् इत्यस्य प्रत्ययादेः इति षष्ठ्येकवचनान्ततया विपरिणामः। झोऽन्तः इत्यतः झः (६य१) इत्यस्यानुवृत्तिः। अभ्यस्तम् इति एका संज्ञा सा च उभे अभ्यस्तम् (६.१.५) इत्यनेन विधीयते। अष्टाध्याय्याम् षाष्ठिक-आष्टमिकभेदेन शब्दस्य द्वित्वविधानार्थम् प्रकरणद्वयमस्ति। तत्र षाष्ठिकस्य कृतद्वित्वस्य शब्दस्वरूपस्य उभे अभ्यस्तम् इति सूत्रेण अभ्यस्तसज्ञा। सूत्रार्थो हि अभ्यस्तसंज्ञकात् धातोः परस्य प्रत्ययावयवस्य झकारस्य स्थाने अत् इत्यादेशो भवति। विभक्तिसंज्ञकस्य झेः झस्य स्थाने विधीयमानः अत् इत्यादेशोऽपि विभक्तिसज्ञको भवति। अतः हलन्त्यम् इत्यनेन प्राप्ता तकारस्य इत्संज्ञा न विभक्तौ तुस्माः इत्यनेन निषेधात् न भवति।

{सूत्रम्. **उभे अभ्यस्तम्** (६.१.५) = षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः।}

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण जुहु झि इति स्थिते जुहु इत्यस्य उभे अभ्यस्तम् इत्यनेन अभ्यस्तसंज्ञा भवति। ततः अदभ्यस्तात् इति प्रकृतसूत्रेण झेः झकारस्य स्थाने अत् इत्यादेशे जु हु अत् इ इति जाते इको यणचि इत्यनेन यणि प्राप्ते तं बाधित्वा अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यनेन उवङि प्राप्ते तं बाधित्वा हुश्नुवोः सार्वधातुके इति अग्रिमपाठे वक्ष्यमाणेन सूत्रेण द्वितीय-होः उकारस्य वकारादेशे जुह् व् अति इति जाते वर्णसम्मेलने च **जुह्वति** इति रूपं भवति। तिपि सिपि मिपि च गुणः। अन्यत्र तसादौ अपित्त्वात् सार्वधातुकमपित् इति ङिद्वद्भावे क्ङिति च इति गुणनिषेधः।

हुधातोः लटि परस्मैपदे रूपाणि - **जुहोति, जुहुतः, जुह्वति। जुहोषि, जुहुथः, जुहुथ। जुहोमि, जुहुवः, जुहुमः।**

**लिटि** विशेषाय सूत्रमिदमारभ्यते -

## [२१.११] भीह्रीभृहुवां श्लुवच्च॥ (३.१.३९)

**सूत्रार्थः** - भी-ह्री-भृ-हुधातुभ्यः लिटि आम् वा स्याद्, आमि श्लाविव कार्यं च।



**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदत्रयमस्ति। भीह्रीभृहुवाम् (६/३) श्लुवत् च इति सूत्रगतपदच्छेदः। श्लुवत् च इत्युभयमपि अव्ययपदम्। भीश्च ह्रीश्च भा च हुश्च तेषामितरेतरयोगद्वन्द्वे भीह्रीभृहुवः, तेषां भीह्रीभृहुवाम्। भीह्रीभृहुवाम् इत्यत्र पञ्चम्यर्थे षष्ठीप्रयोगः। श्लौ इव इति श्लुवत्, तत्र तस्येव इति योगेन सप्तम्यन्ताद् वतिप्रत्ययः। कास्प्रत्ययादाममन्त्रे लिटि इत्यतः लिटि (७/१), आम् (१/१) इत्यनयोः, तथा च उषविदजागृभ्योऽन्यतरस्याम् इत्यतः अन्यतरस्याम् (७/१) इत्यस्य च अनुवृत्तिर्भवति। प्रत्ययः (१/१) परः (१/१) इत्युभयम् अधिक्रियते। सूत्रस्याशयस्तावत् - लिटि परे भी-ह्री-भृ-हुधातुभ्यः परम् आम्प्रत्ययो भवति, किञ्च स आम्प्रत्ययः श्लुवत् भवति। श्लौ परतः यथा द्वित्वादिकार्यं भवति, तथा आमि परतः अपि भवति इति तात्पर्यम्। किन्तु सर्वमेतत् कार्यं विकल्पेन भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - प्रसङ्गवशात् अत्र हुधातोरेव उदाहरणम् प्रदर्श्यते। धात्वन्तराणाम् उदाहरणम् ग्रन्थान्तरे द्रष्टव्यम्। पूर्वोक्तप्रकारेण हुधातोः लिटि अनुबन्धलोपे च हु ल् इति स्थिते प्रकृतसूत्रेण हुधातोः आम्प्रत्यये तस्य च श्लुवद्भावे श्लौ इत्यनेन धातोः द्वित्वे द्विरुक्तस्य पूर्वभागस्य अभ्याससंज्ञायां कुहोश्चुः इत्यनेन चुत्वे झकारे तत्स्थाने अभ्यासे चर्च इत्यनेन जश्त्वे जकारे जु हु आम् ल् इति जायते। ततः आमः तिङ्शिद्भिन्नत्वात् आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञायां सार्वधातुकार्धधातुकयोः इत्यनेन हकारोत्तरवर्तिनः उकारस्य गुणे ओकारे अवादेशे जुहवाम् इति जायते। ततः आमः इति सूत्रेण आमः परस्य लिटः लुकि धात्वधिकारे विहितत्वात् तिङ्शिद्भिन्नत्वाच्च कृदतिङ् इति सूत्रेण लिटः कृत्संज्ञायां जुहवाम् इत्यस्य प्रत्ययलक्षणेन कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां ङ्याप्प्रातिपदिकात् इति सूत्रेण सु-प्रत्यये जुहवाम् सु इति स्थिते आमः इति सूत्रेण सुलुकि जुहवाम् इत्यस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इति पदसंज्ञा भवति। ततः जुहवाम् इत्यस्य आमन्तत्वात् कृञ्चानुप्रयुज्यते लिटि इति सूत्रेण लिट्परकस्य कृञः अनुप्रयोगे जुहवाम् कृ लिट् इति जाते अनुबन्धलोपे जुहवाम् कृ ल् इति स्थिते प्रथमपुरुषैकवचनविवक्षायां तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्वम्-इड्वहिमहिङ् इति सूत्रेण लस्य तिपि अनुबन्धलोपे जुहवाम् कृ ति इति जाते परस्मैपदानां णलतुसुस्-थलथुस-णल्वमाः इति सूत्रेण तिपः सर्वादेशे णलि अनुबन्धलोपे जुहवाम् कृ अ इति जाते लिटि धातोरनभ्यासस्य इति सूत्रेण अनभ्यासधात्ववयवस्य एकाचः कृ इत्यस्य द्वित्वे जुहवाम् कृ कृ अ इति जाते द्विरुक्तस्य पूर्वभागस्य कृ इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायाम् उरत् इति सूत्रेण अभ्यासऋकारस्य अत्त्वे उरण् रपरः इति रपरत्वे च जुहवाम् कर् कृ अ इति जाते हलादिः शेषः इति सूत्रेण आदेः हलः शेषे जुहवाम् क कृ अ इति जाते कुहोश्चुः इति अभ्यासककारस्य चुत्वे चकारे जुहवाम् च कृ अ इति जाते णलो णित्त्वात् अचो ञ्णिति इति सूत्रेण अजन्ताङ्गस्य कृञः ऋकारस्य वृद्धौ आकारे उरण् रपरः इति रपरत्वे च जुहवाम् च कार् अ इति जाते जुहवाम् इति मान्तस्य पदस्य हल्परत्वात् मोऽनुस्वारः इति मस्य अनुस्वारे वा पदान्तस्य इति सूत्रेण अनुस्वारस्य विकल्पेन परसवर्णे **जुहवाञ्चकार** इति रूपम्। परसवर्णाभावे **जुहवांचकार** इति साकल्येन रूपद्वयं सिद्ध्यति।



## अदादितः दिवादिपर्यन्तम् - अद् हु दिव् धातवः

**अत्र विशेषः** - आम्प्रत्ययस्य प्रकृतिः हुधातुः परस्मैपदी अस्ति इति हेतोः लिटि अनुप्रयुज्यमानः कृधातुरपि परस्मैपदी एव भवति। भूधातोः अस्धातोश्च अनुप्रयोगे तयोः परस्मैपदित्वात् न आत्मनेपदसम्भवः।

अत्रैव भूधातोरनुप्रयोगे **जुहवाम्बभूव, जुहवांबभूव** इति रूपद्वयम्। आस्धातोरनुप्रयोगे **जुहवामास** इति रूपम्। अग्रे **कृ भू अस्** एषाम् अनुप्रयोगेण निष्पन्नानि रूपाणि प्रदर्शयिष्यन्ते।

**आमभावपक्षे** हु-धातोः लिटि तिपि णलि अनुबन्धलोपे च हु अ इति स्थिते लिटि धातोरनभ्यासस्य इत्यनेन द्वित्वे अभ्यासस्य होः हकारस्य चुत्वे झकारे झस्य च जश्त्वे जकारे जुहु अ इति जाते अचो ञ्णिति इत्यनेन वृद्धौ आवादेशे वर्णसम्मेलने च **जुहाव** इति रूपं सिध्यति। अजादौ प्रत्यये परतः अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यनेन होः उकारस्य स्थाने उवङादेशे **जुहुवतुः, जुहुवुः, जुहुवथुः** इत्यादिरूपाणि सिध्यन्ति। हुधातोः सिपि थलि आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधे प्राप्ते तं बाधित्वा क्रादिनियमानुसारं नित्यम् इटि प्राप्ते तस्यापि अचस्तास्वत्थल्यनिटो नित्यम् इत्यनेन निषेधः प्राप्तः। तदा तं बाधित्वा भारद्वाजनियमात् वैकल्पिके इटि **जुहोथ/जुहविथ** इति रूपद्वयं भवति। उत्तमपुरुषस्य एकवचने णलुत्तमो वा इत्यनेन विकल्पेन णलः णित्त्वात् वृद्ध्यभावपक्षे **जुहव**, अचो ञ्णिति इति वृद्धिपक्षे **जुहाव** इति साकल्येन रूपद्वयं भवति। वसि मसि च क्रादिनियमानुसारं नित्यम् इडागमे उवङि **जुहुविव, जुहुविम** इत्येवं रूपाणि भवन्ति।

तथा च आमभावपक्षे लिटि रूपाणि **जुहाव, जुहुवतुः, जुहुवुः। जुहोथ/जुहविथ, जुहुवथुः, जुहुव। जुहाव/जुहव, जुहुविव, जुहुविम।**

एवञ्च लिटि प्रथमपुरुषैकवचने तिपि साकल्येन **षट्** रूपाणि - **जुहाव, जुहवांचकार/जुहवाञ्चकार, जुहवांबभूव/जुहवाम्बभूव, जुहवामास।**

मिपि साकल्येन **जुहाव/जुहव, जुहवांचकार/जुहवांचकर-जुहवाञ्चकार/जुहवाञ्चकर, जुहवांबभूव/जुहवाम्बभूव, जुहवामास** इति **नव** रूपाणि।

कृ भू अस् एषाम् अनुप्रयोगेण निष्पन्नानि रूपाणि अधः प्रदत्तानि सन्ति।

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्र.पु.** | जुहवाञ्चकार | जुहवाञ्चक्रतुः | जुहवाञ्चक्रुः |
| **म.पु.** | जुहवाञ्चकर्थ | जुहवाञ्चक्रथुः | जुहवाञ्चक्र |
| **उ.पु.** | जुहवाञ्चकार/जुहवाञ्चकर | जुहवाञ्चकृव | जुहवाञ्चकृम |

| | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्र.पु.** | जुहवांचकार | जुहवांचक्रतुः | जुहवांचक्रुः |
| **म.पु.** | जुहवांचकर्थ | जुहवांचक्रथुः | जुहवांचक्र |
| **उ.पु.** | जुहवांचकार/जुहवांचकर | जुहवांचकृव | जुहवांचकृम |



| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.पु. | जुहवाम्बभूव | जुहवाम्बभूवतुः | जुहवाम्बभूवुः |
| म.पु. | जुहवाम्बभूविथ | जुहवाम्बभूवथुः | जुहवाम्बभूव |
| उ.पु. | जुहवाम्बभूव | जुहवाम्बभूविव | जुहवाम्बभूविम |

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.पु. | जुहवांबभूव | जुहवांबभूवतुः | जुहवांबभूवुः |
| म.पु. | जुहवांबभूविथ | जुहवांबभूवथुः | जुहवांबभूव |
| उ.पु. | जुहवांबभूव | जुहवांबभूविव | जुहवांबभूविम |

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.पु. | जुहवामास | जुहवामासतुः | जुहवामासुः |
| म.पु. | जुहवामासिथ | जुहवामासथुः | जुहवामास |
| उ.पु. | जुहवामास | जुहवामासिव | जुहवामासिम |

**लुटि** प्रथमपुरुषैकवचने तिपि शबपवादे तासि तासः तिङ्शिद्भिन्नत्वात् आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञायां सार्वधातुकार्धधातुकयोः इत्यनेन होः उकारस्य गुणे ओकारे हो तास् ति इति जाते तेः स्थाने डादेशे डित्त्वसामर्थ्यात् अभस्यापि टिसंज्ञकस्य आसः लोपे हो त् आ इति जाते **होता** इति रूपं भवति। एवमग्रेऽपि विद्यार्थिना स्वयम् ऊह्यम्। लुटि शबपवादस्य तासः आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधः।

तथा च लुटि परस्मैपदे रूपाणि - **होता, होतारौ, होतारः। होतासि, होतास्थः, होतास्थ। होतास्मि, होतास्वः, होतास्मः।**

**लृटि** प्रथमपुरुषैकवचने तिपि शबपवादे स्यप्रत्यये स्यस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन होः उकारस्य गुणे आदेशप्रत्यययोः इति सकारस्य षकारे - **होष्यति**। लृटि शबपवादस्य स्यस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधः। एवम् अग्रेऽपि बोध्यम्।

तथा हि परस्मैपदे रूपाणि - **होष्यति, होष्यतः, होष्यन्ति। होष्यसि, होष्यथः, होष्यथ। होष्यामि, होष्यावः, होष्यामः।**

**लोटि** प्रथमपुरुषैकवचने तिपि शपि शपः श्लौ धातोः द्वित्वे अभ्यासादिकार्ये जु हु ति इति जाते तिपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन होः उकारस्य गुणे ओकारे एरुः इत्यनेन



इकारस्य उकारे **जुहोतु** इति रूपं भवति, तातङ्पक्षे **जुहुतात्** इत्यपि। तसि - **जुहुताम्**, झौ - **जुह्वतु**। सिपि हुझल्भ्यो हेर्धिः इत्यनेन हिस्थाने धि इति सर्वादेशे **जुहुधि** - (तातङि) **जुहुतात्, जुहुतम्, जुहुत**। उत्तमपुरुषे आडुत्तमस्य पिच्च इत्यनेन आटि, अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (६.४.७७) इति उवङादेशापेक्षया हुश्नुवोः सार्वधातुके (६.४.८७) इत्यस्य परत्वात् यणि प्राप्ते, तस्मादपि परत्वात् सार्वधातुकार्धधातुकयोः (७.३.८४) इत्यनेन गुणे ओकारे अवादेशे **जुहवानि**, **जुहवाव**, **जुहवाम** इति रूपाणि भवन्ति।

तथा हि परस्मैपदे लोटि रूपाणि - **जुहोतु/जुहुतात्, जुहुताम्, जुह्वतु। जुहुधि/जुहुतात्, जुहुतम्, जुहुत। जुहवानि, जुहवाव, जुहवाम।**

**लङि** अडागमे प्रथमपुरुषैकवचने तिपि शपि शपः श्लौ धातोर्द्वित्वे अभ्यासादिकार्ये होः उकारस्य गुणे ओकारे इतश्च इत्यनेन तिपः इकारस्य लोपे **अजुहोत्** इति रूपं भवति। तसि - **अजुहुतम्**। झौ झस्य स्थाने अत् इत्यादेशे प्राप्ते अभ्यस्तसंज्ञकत्वात् तं बाधित्वा सिजभ्यस्तविदिभ्यश्च इत्यनेन झेः जुसादेशे अनुबन्धलोपे अजुहु उस् इति स्थिते हुश्नुवोः सार्वधातुके इत्यनेन यणि प्राप्ते अग्रिमसूत्रं प्रवर्तते-

{सूत्रम्. **सिजभ्यस्तविदिभ्यश्च** (३.४.१०९) = सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस्।}

## [२१.१२] जुसि च॥ (७.३.८३)

**सूत्रार्थः**- इगन्ताङ्गस्य गुणोऽजादौ जुसि।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। जुसि (७/१) च इति सूत्रगतपदच्छेदः। क्सस्याचि इत्यतः अचि (७/१) इत्यस्य अनुवृत्तिर्भवति। किञ्च मिदेर्गुणः इत्यतः गुणः (१/१) इति पदमनुवर्तते। अङ्गस्य इत्यधिक्रियते। इको गुणवृद्धी इति परिभाषया इकः इति पदं लभ्यते। तच्च अङ्गस्य इत्यस्य विशेषणमस्ति, अतः तदन्तविधौ इगन्तस्य अङ्गस्य इत्यर्थलाभः। अचि इति जुसि इत्यस्य विशेषणमस्ति। अतः यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ अजादौ जुसि इत्यर्थलाभः। सूत्रार्थो हि अजादौ जुसि परतः इगन्तस्य अङ्गस्य स्थाने गुणो भवति। अलोऽन्त्यस्य इति परिभाषया अयं गुणः इगन्ताङ्गस्य अन्त्यस्य इकः स्थाने भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण अ जुहु उस् इति जाते अजादिः उस् परोऽस्ति। अतः जुसि च इति प्रकृतसूत्रेण इगन्ताङ्गस्य अन्त्यस्य इकः उकारस्य गुणे ओकारे अवादेशे उसः सकारस्य रुत्वे रेफस्य च विसर्गे **अजुहवुः** इति रूपं सिध्यति। अग्रेऽपि इत्थं बोध्यम्।

तथा च परस्मैपदे लङि रूपाणि - **अजुहोत्, अजुहुताम्, अजुहवुः। अजुहोः, अजुहुतम्, अजुहुत। अजुहवम्, अजुहुव, अजुहुम।**

**विधिलिङि** हुधातोः तिपि तिपः सार्वधातुकत्वात् शपि शपः श्लौ धातोः द्वित्वे अभ्यासादिकार्ये यासुट् परस्मैपदेषूदात्तो ङिच्च इत्यनेन तिपः यासुडागमे टित्त्वात् आद्यावयवे जु हु यास् ति इति जायते। ततः सुट्तिथोः इत्यनेन तकारस्य सुडागमे जुहुयास् स् ति इति जाते लिङः स लोपोऽनन्त्यस्य इत्यनेन



सकारद्वयस्यापि लोपः। ततः यासुटः ङिद्वद्भावात् गुणनिषेधे तिपः इकारस्य लोपे **जुहुयात्** इति रूपं भवति। तसादौ न कश्चित् विशेषः।

तथा हि परस्मैपदे विधिलिङि रूपाणि - **जुहुयात् जुहुयाताम्, जुहुयुः। जुहुयाः, जुहुयातम्, जुहुयात। जुहुयाम्, जुहुयाव, जुहुयाम।**

**आशीर्लिङि** हु-धातोः तिपि यासुटि सुटि च हु यास् स् ति इति जाते किदाशिषि इत्यनेन यासुटः कित्त्वं भवति। ततः यासुटः लिङाशिषि इत्यनेन आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन गुणे प्राप्ते किदाशिषि इति यासुटः कित्त्वात् क्ङिति च इत्यनेन तन्निषेधः। ततः तिपः इकारस्य लोपे हु यास् स् त् इति जाते स्कोः संयोगाद्योरन्ते च इत्यनेन संयोगादिसकारलोपे अकृत्सार्वधातुकयोर्दीर्घः इत्यनेन होः उकारस्य दीर्घे **हूयात्** इति रूपं भवति। एवमग्रेऽपि।

तथा च आशीर्लिङि परस्मैपदे रूपाणि - **हूयात्, हूयास्ताम्, हूयासुः। हूयाः, हूयास्तम्, हूयास्त। हूयासम्, हूयास्व, हूयास्म इत्येवं रूपाणि भवन्ति।** अत्र तु शपः प्राप्तिरेव नास्ति, तस्मादेव श्लुरपि न भवति, अतः द्वित्वादिरपि न भवति।

**लुङि** हुधातोः अटि तिपि शबपवादे च्लौ सिजादेशे इकारलोपे अपृक्तहलः ईडागमे अनुबन्धलोपे अ हु स् ईत् इति जायते। सिचः आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधः। ततः सिचि वृद्धिः परस्मैपदेषु इत्यनेन होः उकारस्य वृद्धौ अ हौ स् ईत् इति जायते। ततः सकारस्य षत्वे वर्णसम्मेलने च **अहौषीत्** इति रूपं सिध्यति। ईडागमः तिपि सिपि च भवति, अन्यत्र तु वृद्धौ सस्य षत्वे टुत्वादिकार्ये च रूपाणि भवन्ति।

तथा च लुङि रूपाणि - **अहौषीत्, अहौष्टाम्, अहौषुः। अहौषीः, अहौष्टम्, अहौष्ट। अहौषम्, अहौष्व, अहौष्म।**

**लृङि** अटि प्रथमपुरुषैकवचने तिपि इकारलोपे शपि प्राप्ते तम् अपवादत्वेन प्रबाध्य स्यतासी लृलुटोः इत्यनेन स्यप्रत्यये अनुबन्धलोपे च अ हु स्य त् इति जाते स्यस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन होः उकास्य गुणे ओकारे आदेशप्रत्यययोः इत्यनेन स्य इत्यस्य प्रत्ययावयवस्य सकारस्य षत्वे **अहोष्यत्** इति रूपं सिध्यति। लृङि शबपवादस्य स्यस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधः। तसादौ रूपाणि स्वयं साध्यानि।

तथा च लृङि परस्मैपदे रूपाणि - **अहोष्यत् अहोष्यताम्, अहोष्यत। अहोष्यः, अहोष्यतम्, अहोष्यत। अहोष्यम्, अहोष्याव, अहोष्याम।**



।।इति जुहोत्यादिगणः।।



## पाठगतप्रश्नाः-२

४९. जुसि च इत्यस्य उदाहरणम् एकं प्रदर्शयत।

५०. भीह्रीभृहुवां श्लुवच्च इत्यस्य कोऽर्थः।

५१. हुधातोः कोऽर्थः।

५२. श्लौ इत्यस्य कोऽर्थः।

५३. हुधातोः लिटि प्रथमपुरुषैकवचने कति रूपाणि भवन्ति।

५४. शपः श्लुविधायकं सूत्रं किम्।

५५. अदभ्यस्तात् इत्यस्य कोऽर्थः।

५६. हुधातोः विधिलिङि प्रथमपुरुषैकवचने किं रूपम्।

५७. हुधातोः आशीर्लिङि प्रथमपुरुषैकवचने किं रूपम्।

५८. भीह्रीभृहुवां श्लुवच्च इति सूत्रेण विधीयमानं कार्यं नित्यम् अनित्यं वा।

# अथ दिवादिगणः

दिवु क्रीडा-विजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु इति सेटः परस्मैपदिनः उदित्-धातोः वर्तमानक्रियावृत्तित्वविवक्षायां **लटि** प्रथमपुरुषैकवचनविवक्षायां तिपि अनुबन्धलोपे दिव् ति इति जायते। ततः तिपः सार्वधातुकत्वात् कर्तरि शप् इत्यनेन शपि प्राप्ते सूत्रमिदमारभ्यते -

## [२१.१३] दिवादिभ्यः श्यन्॥ (३.१.६९)

**सूत्रार्थः** - कर्तृवाचके सार्वधातुके परे दिवादिगणीयधातुभ्यः श्यन्-प्रत्ययो भवति।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। दिवादिभ्यः (५/३), श्यन् (१/१) इति सूत्रगतपदच्छेदः। कर्तरि शप् इत्यतः कर्तरि (७/१) इति पदस्य, सार्वधातुके यक् इत्यतः सार्वधातुके (७/१) इति पदस्य च अनुवृत्तिर्भवति। दिव् आदिः येषां ते दिवादयः, तेभ्यः दिवादिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिसमासः। प्रत्ययः (१/१), परः (१/१) इति द्वयम् अधिकृतम्। धातोः (६/१)



इत्यस्य अधिकारः आयाति। अधिकृतस्य च धातोः धातुभ्यः (६/३) इति षष्ठीबहुवचनान्तत्वेन विपरिणामः। सार्वधातुके इति प्रत्ययसंज्ञा एव। अतः प्रत्यये इति सप्तम्यन्तम् पदम् आक्षिप्यते। पदयोजना - दिवादिभ्यः धातुभ्यः श्यन् प्रत्ययः परः कर्तरि सार्वधातके प्रत्यये। दिवादिः दशसु धातुगणेषु चतुर्थः। कर्त्रर्थके सार्वधातुके प्रत्यये परे दिवादिगणपठितधातुभ्यः श्यन् प्रत्ययः परो भवति इति सूत्रार्थः। सूत्रमिदं कर्तरि शप् इत्यस्यापवादभूतम्। श्यनः शकारस्य लशक्वतद्धिते इत्यनेन इत्संज्ञा, नकारस्य च हलन्त्यम् इत्यनेन इत्संज्ञा भवति। तेन 'य' इति शिष्यते। शकारानुबन्धः तिङ्शित्सार्वधातुकम् इति सार्वधातुकसंज्ञार्थः। नकारानुबन्धश्च ञ्नित्यादिर्नित्यम् इत्यनेन आद्युदात्तस्वरार्थः। शकारस्य लशक्वतद्धिते इत्यनेन इत्संज्ञा भवति।

**अत्र विशेषः** - श्यनः शित्त्वात् तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञा। किञ्च सार्वधातुकसंज्ञकस्य अस्य श्यन्प्रत्ययस्य अपित्त्वात् सार्वधातुकमपित् इत्यनेन ङिद्वद्भावः। यस्य फलम् अस्ति गुणनिषेधः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण दिव् ति इति स्थिते कर्त्रर्थकः सार्वधातुकः परोऽस्ति इति हेतोः प्रकृतसूत्रेण शपं प्रबाध्य श्यनि अनुबन्धलोपे दिव् य ति इति जायते। ततः श्यनः तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञायां लघूपधगुणे प्राप्ते सार्वधातुकमपित् इत्यनेन श्यनः ङित्त्वात् तन्निषेधः। ततः अलोऽन्त्यात् पूर्व उपधा इत्यनेन दिवः इकारस्य उपधासंज्ञायाम् अग्रिमसूत्रम् प्रारभ्यते -

## [२१.१४] हलि च॥ (८.२.७७)

**सूत्रार्थः** - रेफवान्तस्य धातोः उपधाया इको दीर्घो हलि।

**सुत्रव्याख्या-** विधिसूत्रेऽस्मिन् पदद्वयमस्ति। हलि (७/१) च इति सूत्रगतपदच्छेदः। सिपि धातो रुर्वा इत्यतः धातोः (६/१) इत्यस्य, र्वोरुपधाया दीर्घ इकः इत्यतः र्वोः (६/२), उपधायाः (६/१), दीर्घः (१/१), इकः (६/१) इत्येतेषामनुवृत्तिर्भवति। र् च व् च र्वौ तयोः र्वोः इति इतरेतरयोगद्वन्द्वः। र्वोः इति धातोः विशेषणमस्ति अतः तदन्तविधौ रेफान्तस्य वान्तस्य च धातोः इत्यर्थलाभः। रेफान्तधातोः वकारान्तधातोः च उपधायाः इकः स्थाने दीर्घादेशो भवति हलि परतः इति सूत्रार्थः।

**उदाहरणम्** - रेफान्तस्य उदाहरणं विस्तीर्णम् इति। दीव्यति इति वकारान्तस्य उदाहरणम्। एतदेव प्रकृते आलोच्यम्।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण दिव् य ति इति जाते हल् परोऽस्ति इति कृत्वा हलि च इति प्रकृतसूत्रेण उपधादीर्घे **दीव्यति** इति रूपं सिध्यति। अग्रे प्रक्रिया पूर्ववत् । तसादौ रूपाणि स्वयम् साधनीयानि। तथा हि **लटि** परस्मैपदे रूपाणि - **दीव्यति, दीव्यतः, दिव्यन्ति। दीव्यसि, दीव्यथः, दीव्यथ। दीव्यामि, दीव्यावः, दीव्यामः।**





**लिटि** न तथा विशेषः। धातोः सेट्त्वात् वलादिलक्षणः इडागमो भवत्येव। पित्प्रत्ययेषु लघूपधगुणो भवति। किन्तु अपित्सु न भवति, असंयोगाल्लिट् कित् इत्यनेन कित्त्वविधानेन क्ङिति च इति तन्निषेधात्। अत्र प्रक्रिया स्वयं बोद्धव्या।

तथा हि लिटि परस्मैपदे रूपाणि - **दिदेव, दिदिवतुः, दिदिवुः। दिदेविथ, दिदिवथुः, दिदिव। दिदेव, दिदिविव, दिदिविम**।

**लुटि** प्रथमपुरुषैकवचने तिपि श्यन्-अपवादे तासि इटि अनुबन्धलोपे दिव् इ तास् ति इति स्थिते इतास् इति सागमकस्य आर्धधातुकसंज्ञायाम् तस्मिन् परतः लघूपधगुणे देव् इ तास् ति इति जायते। ततः तिपः डादेशे डित्त्वसामर्थ्यात् अभस्यापि टेः लोपे देव् इ त् आ इति जाते वर्णसम्मेलने च **देविता** इति रूपं सिध्यति। एवम् अग्रेऽपि।

तथा हि लुटि परस्मैपदे रूपाणि - **देविता, देवितारौ, देवितारः। देवितासि, देवितास्थः, देवितास्थ। देवितास्मि, देवितास्वः, देवितास्मः।**

**लृटि** प्रथमपुरुषैकवचने तिपि श्यन्-अपवादे स्यप्रत्यये स्यस्य आर्धधातुकत्वात् इडागमे दिवः इकारस्य पुगन्तलघूपधस्य च इत्यनेन गुणे एकारे सकारस्य षत्वे **देविष्यति** इति रूपं सिध्यति। अत्र न कश्चित् विशेषः। तथा हि परस्मैपदे लृटि रूपाणि - **देविष्यति देविष्यतः, देविष्यन्ति। देविष्यसि, देविष्यथः, देविष्यथ। देविष्यामि, देविष्यावः, देविष्यामः**।

**लोटि** श्यनि हलि च इति उपधादीर्घे रूपाणि सिध्यन्ति। तथा च रूपाणि - **दीव्यतु** - (तातङि) **दीव्यतात्, दीव्यताम्, दीव्यन्तु। दीव्य** – (तातङि) **दीव्यतात्, दीव्यतम्, दीव्यत। दीव्यानि, दीव्याव, दीव्याम**।

**लङि** अटि श्यनि उपधादीर्घे रूपाणि सिध्यन्ति। रूपाणि च - **अदीव्यत्, अदीव्यताम्, अदीव्यन्। अदीव्यः, अदीव्यतम्, अदीव्यत। अदीव्यम्, अदीव्याव, अदीव्याम**।

**विधिलिङि** तिपि इकारलोपे श्यनि उपधादीर्घे यासुटि सुटि लिङः सलोपोऽनन्त्यस्य इत्यनेन सकारद्वयलोपे अनुबन्धलोपे दीव् य त् इति जाते अतो येयः इत्यनेन इयादेशे दीव् य इय् त् इति जाते लोपो व्योर्वलि इत्यनेन तकारपूर्ववर्तिनः यकारस्य लोपे दीव् य इ त् इति जाते आद्गुणः इति गुणे एकारे **दीव्येत्** इति रूपं सिध्यति। अग्रेऽपि इत्थं प्रक्रिया।

तथा च परस्मैपदे रूपाणि - **दीव्येत् दीव्येताम्, दीव्येयुः। दीव्येः, दीव्येतम्, दीव्येत। दीव्येयम्, दीव्येव, दीव्येम**।

**आशीर्लिङि** यासुटः कित्त्वात् लघूपधगुणनिषेधः। हलि च इति उपधादीर्घः। तथा हि रूपाणि - **दीव्यात्, दीव्यास्ताम्, दीव्यासुः। दीव्याः, दीव्यास्तम्, दीव्यास्त। दीव्यासम्, दीव्यास्व, दीव्यास्म।**

**लुङि** अटि तिपि इकारलोपे श्यन्-अपवादे च्लौ च्लेः सिचि सिचः सकारस्य आर्धधातुकं शेषः इत्यनेन आर्धधातुकंसज्ञायाम् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे टित्त्वात् आद्यावयवे अनुबन्धलोपे अ दिव् इ स् त् इति जाते तकारस्य अपृक्तसंज्ञायाम् अस्तिसिचोऽपृक्ते इत्यनेन तकारस्य ईडागमे



अनुबन्धलोपे अ दिव् इ स् ई त् इति जाते इट ईटि इत्यनेन सिचः सकारस्य लोपे सवर्णदीर्घे अ दिव् ई त् इति जाते सागमकस्य ईत् इत्यस्य सार्वधातुकसंज्ञकत्वे तस्मिन् परतः पुगन्तलघूपधस्य च इत्यनेन उपधागुणे एकारे वर्णसम्मेलने **अदेवीत्** इति रूपं सिध्यति। तसादौ रूपाणि स्वयम् साधनीयानि। अत्र आदेशप्रत्यययोः इति षत्वम्। तसि थसि थे च ष्टुना ष्टुः इति ष्टुत्वे टकारः।

तथा हि लुङि परस्मैपदे रूपाणि - **अदेवीत् अदेविष्टाम्, अदेविषुः। अदेवीः, अदेविष्टम्, अदेविष्ट। अदेविषम्, अदेविष्व, अदेविष्म।**

**लृङि** अटि प्रथमपुरुषैकवचने तिपि इकारलोपे श्यन्-अपवादभूते स्यप्रत्यये अ दिव् स्य त् इति जाते स्यस्य आर्धधातुकत्वात् इडागमे पुगन्तलघूपधस्य च इत्यनेन उपधागुणे सस्य षत्वे **अदेविष्यत्** इति रूपम्। अत्र सर्वत्र आदेशप्रत्यययोः इति षत्वम्। तसः थसः थस्य च स्थाने यथाक्रमम् तस्थस्थमिपां तान्तन्तामः इति ताम् तम् त अम् इत्यादेशाः। वसि मसि च सकारलोपः। तसादौ प्रक्रियाः स्वयम् बोद्धव्याः।

तथा च लृङि परस्मैपदे रूपाणि - **अदेविष्यत् अदेविष्यताम्, अदेविष्यन्। अदेविष्यः, अदेविष्यतम्, अदेविष्यत। अदेविष्यम्, अदेविष्याव, अदेविष्याम।**

।।इति दिवादिगणः।।



## पाठगतप्रश्नाः-३

५९. दिवादिगणीयधातुभ्यः कः विकरणप्रत्ययो भवति।

६०. श्यन्विकरणविधायकसूत्रं लिखत।

६१. दिव्-धातोः कः अर्थः।

६२. दीव्यति इत्यत्र दीर्घः केन भवति।

६३. दिवादिगणः धातुगणेषु कतमो भवति।

६४. श्यन्प्रत्ययः कस्य अपवादः।



## पाठसारः

अस्मिन् पाठे अदादिगणः, जुहोत्यादिगणः, दिवादिगणः इति गणत्रयस्य आलोचना विहिता। तेषु आदौ अदादिगणीयस्य प्रथमधातोः अर्थात् अद्-धातोः विषये आलोचनं कृतम्। तत्र अद्-धातोर्विषये अदिप्रभृतिभ्यः शपः, लिट्यन्यतरस्याम्, शासिवसिघसीनां च, इडत्यर्तिव्ययतीनाम्, हु-झल्भ्यो हेर्धिः,





अदः सर्वेषाम् लुङ्सनोर्घस्लृ इत्येतानि सूत्राणि व्याख्यातानि। ततः जुहोत्यादिगणीयस्य हुधातोः विषये आलोचनं कृतम्। तत्र हु-धातोः विषये जुहोत्यादिभ्यः श्लुः, श्लौ, अदभ्यस्तात्, भीह्रीभृहुवां श्लुवच्च, जुसि च इत्येतानि सूत्राणि व्याख्यातानि। ततः दिव्-धातुः आलोचितः। तत्र च दिवादिभ्यः श्यन् इति श्यन्विकरणविधायकसूत्रं व्याख्यातम्। ततः हलि च इति उपधादीर्घविधायकसूत्रमपि व्याखातं येन दीव्यति इति सिध्यति। अत्र च पाठे लुक् श्लु लुप् इत्येतेषाम् वैशिष्ट्यम् प्रदर्शितम्। तत्र तत्र विशेषरूपाणां प्रक्रियाः प्रदर्शिताः। पाठेऽस्मिन् न समेषां रूपाणां ससूत्रं प्रक्रियाः प्रदर्शिताः, ताः स्वयं साध्याः।



## पाठान्तप्रश्नाः

१. लिट्यन्यतरस्याम् इति सूत्रं सोदाहरणं व्याख्यात।

२. शासिवसिघसीनां च इति सूत्रं सोदाहरणं व्याख्यात।

३. हु-झल्भ्यो हेर्धिः इति सूत्रं सोदाहरणं व्याख्यात।

४. लुङ्सनोर्घस्लृ इति सूत्रं सोदाहरणं व्याख्यात।

५. जुहोति इति रूपं साधयत।

६. भीह्रीभृहुवां श्लुवच्च इति सूत्रं सोदाहरणं व्याख्यात।

७. दिवादिभ्यः श्यन् इति श्यन्विकरणविधायकसूत्रं व्याख्यात।

८. अदेवीत् इति रूपं साधयत।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि- १**

१. दश।

२. अदिप्रभृतिभ्यः शपः।

३. लुङ्सनोर्घस्लृ।

४. अदः परस्य अपृक्तसार्वधातुकस्य अट् स्यात् सर्वमतेन।

५. हुझल्भ्यो हेर्धिः।

६. शासिवसिघसीनां च।

७. लिट्यन्यतरस्याम्।

८. आदिः।



९. भक्षणम्।

१०. जघास, आद इति रूपद्वयम्।

**उत्तराणि- २**

११. अजुहवुः।

१२. भी-ह्री-भृ-हुधातुभ्यः लिटि आम् वा स्याद्, आमि श्लाविव कार्यं च।

१३. दानं भक्षणं च।

१४. धातोः द्वे स्तः।

१५. जुहाव, जुहवांचकार-जुहवाञ्चकार , जुहवांबभूव-जुहवाम्बभूव , जुहवामास इति षट् रूपाणि।

१६. जुहोत्यादिभ्यः श्लुः।

१७. अभ्यस्तसंज्ञकात् धातोः परस्य प्रत्ययावयवस्य झकारस्य स्थाने अत् इत्यादेशो भवति।

१८. जुहुयात्।

१९. हूयात्।

२०. अनित्यम्।

**उत्तराणि- ३**

२१. श्यन्।

२२. दिवादिभ्यः श्यन्।

२३. क्रीडा-विजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतयः दिवः अर्थाः।

२४. हलि च।

२५. चतुर्थः।

२६. शपः।

## ॥ इति एकविंशः पाठः ॥



## २२

# स्वादितः रुधादिपर्यन्तम्-
# सु तुद् रुध् धातवः

## प्रस्तावना

भवन्तः इतः पूर्वस्मिन् पाठे अदादिगणः, जुहोत्यादिगणः, दिवादिगणः च इति गणत्रयस्य परिचयं प्राप्तवन्तः। अधुना स्वादिगणः, तुदादिगणः, रुधादिगणः च इति गणत्रयं ज्ञास्यति। पूर्ववत् अत्रापि प्रतिगणं विकरणभेदः अस्ति, विकरणभेदात् च रूपभेदो भवति। यथा स्वादिगणीयधातुभ्यः श्नुविकरणप्रत्ययः, तुदादिगणीयधातुभ्यः शविकरणप्रत्ययः, रुधादिगणीयधातुभ्यः श्नाविकरणप्रत्ययः च भवति। विकरणभेदात् रूपभेदः, तद्यथा सु-धातोः श्नुविकरणे सुनोति इति रूपम्, तुद्-धातोः शविकरणे तुदति इति रूपम्, रुध्-धातोः श्नाविकरणे रुणद्धि इति रूपं भवति। अस्मिन् पाठे न सर्वाणि रूपाणि ससूत्रं प्रदर्शयिष्यन्ते अन्यथा पाठपरिमाणम् एधेत। पूर्वतनपाठवत् अस्मिन् पाठेऽपि प्रतिगणं प्रथमधातुरेव आलोचयिष्यते। धात्वन्तरस्य प्रक्रियाः तु स्वयं बोद्धव्याः।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- प्रतिगणं कीदृशं विकरणं भवति तज्ज्ञास्यति।
- विकरणविधायकसूत्रार्थम् अवगमिष्यति।
- तत्र तत्र व्याख्यातानि विशेषसूत्राणि ज्ञास्यति।
- सु-धातुरूपाणि साधयितुं शक्नुयात्।
- तुद्-धातुरूपाणि साधयितुं पारयेत्।
- रुध्-धातुरूपाणि साधयितुम् अर्हेत्।
- एतज्ज्ञात्वा च अन्यानि अपि धातुरूपाणि साधयितुं प्रभवेत्।
- तत्र तत्र प्रदर्शितानि वैकल्पिकरूपाणि अपि अवगमिष्यति।

# अथ स्वादिगणः

षुञ् अभिषवे इति उभयपदिनः अनिटः स्वादिगणीयधातोः वर्तमानक्रियावृत्तित्वविवक्षायां कर्तरि **लटि** परस्मैपदसंज्ञके तिपि सु ति इति जाते कर्तरि शप् इति शपि प्राप्ते सूत्रमिदमारभ्यते -

## [२२.१] स्वादिभ्यः श्नुः॥ (३.१.७३)

**सूत्रार्थः** - स्वादिगणपठितधातुभ्यः श्नुप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परे।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। स्वादिभ्यः (५/३), श्नुः (१/१) इति सूत्रगतपदच्छेदः। कर्तरि शप् इत्यतः कर्तरि (७/१) इति पदं, सार्वधातुके यक् इत्यतः सार्वधातुके (७/१) इति पदं च अनुवर्तते। प्रत्ययः (१/१), परः (१/१) इत्युभयमपि अधिकृतम्। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इति सूत्रात् धातोः इति पदम् अनुवर्तते। पदयोजना - कर्तरि सार्वधातुके धातोः श्नुः प्रत्ययः परः इति। स्वादिगणः दशसु धातुगणेषु पञ्चमः। सुः आदिः येषाम् (धातूनाम्) ते स्वादयः (धातवः) इति तद्गुणसंविज्ञानबहुव्रीहिसमासः, तेभ्यः स्वादिभ्यः। सूत्रार्थो हि कर्त्रर्थके सार्वधातुकसंज्ञकप्रत्यये परतः स्वादिगणपठितधातुभ्यः श्नुप्रत्ययः परो भवति। श्नुप्रत्ययस्य शकारः इत्संज्ञकः लशक्वतद्धिते इत्यनेन। अतः नु-मात्रम् शिष्यते। योगोऽयम् कर्तरि शप् इत्यस्य अपवादः।

**अत्र विशेषः** - श्नुप्रत्ययस्य शित्त्वात् तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञा। अपि च सार्वधातुकसंज्ञकस्य अस्य श्नुप्रत्ययस्य अपित्त्वात् सार्वधातुकमपित् इत्यनेन ङिद्वद्भावः। यस्य फलम् अस्ति गुणनिषेधः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण सु ति इति स्थिते प्राप्तं शपं प्रबाध्य प्रकृतसूत्रेण श्नुप्रत्ययो भवति। यतो हि अत्र ति इति कर्त्रर्थकसार्वधातुकप्रत्ययः परोऽस्ति। ततः सु नु ति इति जाते नु इत्यस्य तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञायां सार्वधातुकार्धधातुकयोः इत्यनेन सोः उकारस्य गुणः प्राप्तः। तदा श्नुप्रत्ययः अपित् सार्वधातुकम् च अस्ति इति हेतोः सार्वधातुकमपित् इत्यनेन ङिद्वद्भावो भवति। तेन क्ङिति च इत्यनेन गुणनिषेधः। ततः तिप्रत्ययस्य सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन नोः उकारस्य गुणे ओकारे **सुनोति** इति रूपं सिध्यति। द्विवचने तसि तसः अपित्त्वात् सार्वधातुकत्वात् च ङिद्वद्भावे न नोः उकारस्य गुणः। ततः सकारस्य रुत्वे रेफस्य च विसर्गे **सुनुतः** इति रूपम्। बहुवचने झिप्रत्यये अन्तादेशे सु नु अन्ति इति जाते नोः उकारस्य स्थाने इको यणचि इति यणि प्राप्ते तं बाधित्वा अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यनेन उवङि प्राप्ते सूत्रमिदमारभ्यते -

## [२२.२] हुश्नुवोः सार्वधातुके॥ (६.४.८७)

**सूत्रार्थः** - हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। सूत्रेण अनेन यणादेशो विधीयते। हुश्नुवोः (६/२), सार्वधातुके (७/१) इति सूत्रगतपदच्छेदः। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यतः अचि (७/१)



इत्यस्य, एरनेकाचोऽसंयोगपूर्वस्य इत्यतः अनेकाचः (६/१), असंयोगपूर्वस्य (६/१) इत्यनयोः, ओः सुपि इत्यतः ओः (६/१) इत्यस्य, इणो यण् इत्यतः यण् (१/१) इत्यस्य च अनुवृत्तिर्भवति। अङ्गस्य (६/१) इत्यधिकृतम्। अचि सार्वधातुके हुश्नुवोः अनेकाचः अङ्गस्य असंयोगपूर्वस्य ओः यण् इति पदयोजना। सार्वधातुके इत्यस्य विशेषणम् अचि इति। अतः यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ अजादौ सार्वधातुके इत्यर्थलाभः। श्नुः प्रत्ययः अतः प्रत्ययग्रहणे तदन्ता ग्राह्याः इति परिभाषया श्नु इत्यनेन श्नुप्रत्ययान्तस्य ग्रहणम्। अनेकाचः इति पदम् श्नुप्रत्ययान्तेन अङ्गेन सह सम्बद्धम्। नास्ति संयोगः पूर्वः यस्मात् असौ इति बहुव्रीहिसमासे असंयोगपूर्वः, तस्य असंयोगपूर्वस्य। असंयोगपूर्वस्य इति पदम् ओः इत्यस्यैव विशेषणम् न तु श्नु इत्यस्यापि। हुश्च श्नुश्च तयोः इतरेतरयोगद्वन्द्वे हुश्नुवौ, तयोः हुश्नुवोः। सूत्रार्थस्तावत् - अजादौ सार्वधातुके परतः जुहोतेः श्नुप्रत्यययान्तस्य अनेकाचः अङ्गस्य च असंयोगपूर्वस्य उकारस्य स्थाने यणादेशः स्यात् इति। स्थानेऽन्तरतमः इति परिभाषया उकारस्य स्थाने वकारादेशः भवति। योगोऽयम् अचि श्नुधातु...इत्यादिना प्राप्तस्य उवङः अपवादः।

**उदाहरणे सूत्रार्थसमन्वयः -**

पूर्वोक्तप्रकारेण सु नु अन्ति इति स्थिते अचि श्नुधातु...इत्यादिना योगेन प्राप्तम् उवङादेशं बाधित्वा हुश्नुवोः सार्वधातुके इत्यनेन नोः उकारस्य स्थाने यणादेशो भवति। यतो हि सुनु इति श्नुप्रत्ययान्तः अनेकाच् अङ्गमस्ति। तस्य च अङ्गस्य अवयवः उकारः असंयोगपूर्वः अपि अस्ति। ततः वर्णसम्मेलने **सुन्वन्ति** इति रूपं भवति। सिपि मिपि च सुनोति इति रूपवत् प्रक्रिया बोद्धव्या। सिपि षत्वम् आदेशप्रत्यययोः इति योगेन। उत्तमपुरुषद्विवचने वसि सुनु वस्, उत्तमपुरुषबहुवचने मसि सुनु मस् इति स्थिते अग्रिमसूत्रमारभ्यते -

## [२२.३] लोपश्चास्यान्यतरस्यां म्वोः॥ (६.४.१०७)

**सूत्रार्थः** - असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पञ्च पदानि सन्ति। लोपः (१/१), च (अव्ययम्) अस्य (६/१), अन्यतरस्याम् (७/१), म्वोः (७/२) इति सूत्रगतपदच्छेदः। सूत्रस्थेन अस्य इति पदेन उतश्च प्रत्ययादसंयोगपूर्वात् (६.४.१०६) इत्यस्य परामर्शः। उतश्च प्रत्ययादसंयोगपूर्वात् इत्यतः उतः (५/१), प्रत्ययात् (५/१), असंयोगपूर्वात् (५/१) इत्येतेषाम् अनुवृत्तिर्भवति। तेषां त्रयाणामपि षष्ठ्येकवचनान्ततया विपरिणामो भवति। अङ्गस्य इत्यधिकृतम्। असंयोगपूर्वस्य प्रत्ययस्य उतः अङ्गस्य म्वोः अन्यतरस्याम् लोपः इति पदयोजना। अधिकृतस्य अङ्गस्य इत्यस्य उतः इति पदम् विशेषणम्। अतः तदन्तविधौ उदन्तस्य अङ्गस्य इत्यर्थलाभः। असंयोगपूर्वः यः प्रत्ययः (प्रत्ययावयवः) उकारः तदन्तस्य अङ्गस्य लोपो वा स्यात् म्वोः परयोः इति सूत्रार्थः। अलोऽन्त्यस्य इति परिभाषया अयमादेशः उदन्ताङ्गस्य अन्त्यस्यैव अलः उकारस्य स्थाने भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण सुनु वस् इत्यत्र सुनु मस् इत्यत्र च उकारः श्नुप्रत्ययावयवः अस्ति। अपि च उकारात् पूर्वम् संयोगवर्णः नास्ति। तस्मात् उकारः असंयोगपूर्वः। किञ्च



सुनु इति उकारान्तम् अङ्गम् अपि अस्ति। अपि च तस्मात् उकारान्तात् अङ्गात् परे (वसः) वकारः, (मसः) मकारः च अस्ति। अतः प्रकृतसूत्रेण श्नुप्रत्ययावयवस्य उकारस्य विकल्पेन लोपे यथाक्रमम् **सुन्वः, सुन्मः** इति रूपे भवतः। लोपाभावपक्षे च **सुनुवः, सुनुमः** इति रूपे भवतः।

तथा हि **लटि** परस्मैपदे रूपाणि - **सुनोति, सुनुतः, सुन्वन्ति। सुनोषि, सुनुथः, सुनुथ। सुनोमि, सुन्वः-सुनुवः, सुन्मः-सुनुमः**।

**अत्र अवधेयम्** - (षुञ्) सुधातोः ञित्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन क्रियाफलस्य कर्तृगामित्वे सुधातोः विहितस्य लस्य स्थाने आत्मनेपदप्रत्ययो भवति। क्रियाफलस्य परगामित्वे तु शेषात्कर्तरि परस्मैपदम् इति परस्मैपदप्रत्ययो भवति।

**आत्मनेपदस्थले** तादिषु न कोऽपि पित्-प्रत्ययः। अतः सार्वधातुकमपित् इत्यनेन तादिः सर्वोऽपि प्रत्ययः ङित् भवति। तस्मात् सर्वत्रैव नोः उकारस्य गुणनिषेधः। किञ्च श्नुप्रत्ययस्य ङित्त्वात् न सोः उकारस्य गुणः इत्यपि अवधेयम्। वहिप्रत्यये महिङ्प्रत्यये च लोपश्चास्यान्यतरस्यां म्वोः इत्यनेन नोः उकारस्य विकल्पेन लोपः। अत्र अचि परे हुश्नुवोः सार्वधातुके इत्यनेन यण् भवति। किञ्च टित आत्मनेपदानां टेरे इत्यनेन एत्त्वं भवति। सोः थासि सुनु थास् इति स्थिते थासः से इत्यादेशे सुनु से इति जाते आदेशप्रत्यययोः इति सकारस्य षत्वम्। उत्तमपुरुषैकवचने इटि सुनु इ इति जाते नोः उकारस्य हुश्नुवोः सार्वधातुके इति यणि वकारे टेः एत्वे सुन्वे इति रूपम्। वहौ महिङि च लोपश्चास्यान्यतरस्यां म्वोः इति विकल्पेन उकारलोपः।

तथा हि आत्मनेपदे लटि रूपाणि - **सुनुते, सुन्वाते, सुन्वते। सुनुषे, सुन्वाथे, सुनुध्वे। सुन्वे, सुन्वहे-सुनुवहे, सुन्महे-सुनुमहे**।

**लिटि** द्वित्वादिकार्ये कृते सति आदेशप्रत्यययोः इत्यनेन द्वितीयसकारस्य षत्वम्। लिट् च इति योगेन लिडादेशः तिङ् आर्धधातुकः। अतः अजादिप्रत्ययेषु परतः हुश्नुवोः सार्वधातुके (६.४.८७) इत्यस्य अप्रवृत्तौ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (६.४.७७) इत्यनेन उवङ् भवति। थलि आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधे प्राप्ते तं बाधित्वा क्रादिनियमानुसारं नित्यम् इटि प्राप्ते तस्यापि अचस्तास्वत्थल्यनिटो नित्यम् इत्यनेन निषेधः प्राप्तः। तदा तं बाधित्वा भारद्वाजनियमेन वैकल्पिकः इडागमः। ततः इड्भावे इडभावे चेति पक्षद्वयेऽपि गुणः। वसि मसि तु क्रादिनियमानुसारम् नित्यम् इडागमः। मिपि णलुत्तमो वा इति णित्त्वविकल्पः।

तथा हि लिटि परस्मैपदे रूपाणि - **सुषाव, सुषुवतुः, सुषुवुः। सुषविथ-सुषोथ, सुषुवथुः, सुषुव। सुषाव-सुषव, सुषुविव, सुषुविम**।

आत्मनेपदस्थलेऽपि अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (६.४.७७) इत्यनेन उवङ् भवति। लिटि तप्रत्यये लिटस्तझयोरेशिरेच् इत्यनेन तकारस्य स्थाने एशादेशे सु ए इति जाते लिटि धातोरनभ्यासस्य इत्यनेन सु इत्यस्य द्वित्वे सु सु ए इति जाते अनभ्यासस्य सोः उकारस्य उवङि अनुबन्धलोपे सु स् उव् ए इति जाते अनभ्यासस्य सकारस्य आदेशप्रत्यययोः इति षत्वे **सुषुवे** इति रूपम्। झप्रत्यये झस्य स्थाने लिटस्तझयोरेशिरेच् इति सूत्रेण इरेच् इत्यादेशे अनुबन्धलोपे द्वित्वादिकार्ये विहिते सति सुषु इरे इति जाते





अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इति उवङादेशे **सुषुविरे** इति रूपम्। ध्वमि प्रक्रियया सुषुव् इ ध्वे इति जाते वकारः इण् अस्ति। तस्मात् परम् इट् अस्ति। अतः इटः परस्य लिडादेशस्य ध्वमः धस्य स्थाने विकल्पेन ढत्वम् विभाषेटः इत्यनेन। अत्र लिटि हुश्नुवोः सार्वधातुके इति न प्रवर्तते लिटः आर्धधातुकत्वात्। तप्रत्ययं, झप्रत्ययं, थास्प्रत्ययं च विहाय अन्यत्र टित आत्मनेपदानां टेरे इत्यनेन एत्त्वं भवति। थासि ध्वमि वहौ महिङि च क्रादिनियमानुसारम् नित्यम् इडागमः।

तथा हि आत्मनेपदे रूपाणि – **सुषुवे, सुषुवाते, सुषुविरे। सुषुविषे, सुषुवाथे, सुषुविढ्वे-सुषुविध्वे। सुषुवे, सुषुविवहे, सुषुविमहे**।

{सूत्रम्. **विभाषेटः** (८.३.७९) = इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः।}

**लुटि** प्राप्तस्य श्नुप्रत्ययस्य अपवादस्य तासः आर्धधातुकं शेषः इति आर्धधातुकसंज्ञा अस्ति। अतः तासि परे सर्वत्रैव सार्वधातुकार्धधातुकयोः इति गुणे सो इति भवति। रूपाणाम् प्रक्रिया भूधातुवत् ज्ञेया। अत्र लुटि श्नुप्रत्ययापवादस्य तासः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः।

तथा हि परस्मैपदे रूपाणि - **सोता, सोतारौ, सोतारः। सोतासि, सोतास्थः, सोतास्थ। सोतास्मि, सोतास्वः, सोतास्मः।**

प्रथमपुरुषे उभयविधस्थले समानम् रूपम्। यतो हि स्थानिभेदे सत्यपि आदेशसाम्यम् अत्र अस्ति। तद्यथा परस्मैपदस्थले लुटः प्रथमस्य डारौरसः इत्यनेन तिप् तस् झि इत्येतेषाम् स्थाने यथाक्रमम् डा रौ रस् इत्यादेशा विधीयन्ते। आत्मनेपदस्थले त आताम् झ इत्येतेषाम् स्थाने यथाक्रमम् डा रौ रस् इत्यादेशा विधीयन्ते इति आदेशसाम्यम् स्पष्टम् एव। थासि तासि थासः से इत्यादेशे सोतास् से इति स्थिते तासस्त्योर्लोपः इति तासः सकारलोपः। ध्वमि सोतास् ध्वम् इति स्थिते धि च इति तासः अवयवस्य सकारस्य लोपः। उत्तमपुरुषैकवचने इटि सोतास् इ इति स्थितौ सकारस्य ह एति इति हकारः। थासं विहाय आथामादौ टित आत्मनेपदानां टेरे इति टेः एत्वम्। पूर्ववत् इण्निषेधः।

तथा हि आत्मनेपदे रूपाणि - **सोता, सोतारौ, सोतारः। सोतासे, सोतासाथे, सोताध्वे। सोताहे, सोतास्वहे, सोतास्महे।**

**लृटि** प्राप्तस्य श्नुप्रत्ययस्य अपवादस्य स्यस्य आर्धधातुकसंज्ञा अस्ति। अतः तस्मिन् परे सर्वत्रैव गुणो भवति। किञ्च आदेशप्रत्यययोः इत्यनेन षत्वमपि भवति। आत्मनेपदस्थले टित आत्मनेपदानां टेरे इत्यनेन एत्त्वं भवति। श्नुप्रत्ययापवादस्य स्यस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः। ततः परस्मैपदे रूपाणि - **सोष्यति, सोष्यतः, सोष्यन्ति। सोष्यसि, सोष्यथः, सोष्यथ। सोष्यामि, सोष्यावः, सोष्यामः।**

**आत्मनेपदस्थले** थासं विहाय टित आत्मनेपदानां टेरे इति टेः एत्वम्। इण्निषेधः पूर्ववत्। आत्मनेपदे रूपाणि च - **सोष्यते, सोष्येते, सोष्यन्ते। सोष्यसे, सोष्येथे, सोष्यध्वे। सोष्ये, सोष्यावहे, सोष्यामहे।**



**लोटि** परस्मैपदे रूपाणि - **सुनोतु** - (तातङि) **सुनुतात्, सुनुताम्, सुन्वन्तु**। सिपि सु नु सि इति स्थिते सेर्ह्यपिच्च इत्यनेन सेः स्थाने हि इत्यादेशे सु नु हि इति जाते सूत्रमिदमारभ्यते -

## [२२.४] उतश्च प्रत्ययादसंयोगपूर्वात्॥ (६.४.१०६)

**सूत्रार्थः** - असंयोगपूर्वात् प्रत्ययोतो हेर्लुक्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदचतुष्टयम् अस्ति। सूत्रेणानेन हेर्लुक् विधीयते। उतः (५/१), च (अव्ययम्), प्रत्ययात् (५/१), असंयोगपूर्वात् (५/१) इति सूत्रगतपदच्छेदः। अतो हेः इत्यतः हेः (६/१) इत्यस्य, चिणो लुक् इत्यतः लुक् (१/१) इत्यस्य च अनुवृत्तिर्भवति। अङ्गस्य (६/१) इत्यधिकृतम्। तस्य च पञ्चम्येकवचनान्ततया विपरिणामः। नास्ति संयोगः पूर्वः यस्मात् असौ असंयोगपूर्वः इति बहुव्रीहिसमासः, तस्मात् असंयोगपूर्वात्। अङ्गात् इत्यस्य विशेषणमस्ति उतः इति। अतः तदन्तविधौ उदन्तात् अङ्गात् इत्यर्थलाभः। असंयोगपूर्वः यः प्रत्ययः (प्रत्ययावयवः) उकारः तदन्तात् अङ्गात् परस्य हेर्लुक् स्यात् इति सूत्रार्थः। प्रत्ययस्य लुक्श्लुलुपः इत्यनुसारम् प्रत्ययादर्शनस्यैव लुक्संज्ञा विधीयते। अतः हेः लुक् भवति इत्युक्ते सम्पूर्णस्य हेः अदर्शनम् भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण सुनु हि इति जाते उतश्च प्रत्ययादसंयोगपूर्वात् इति प्रकृतसूत्रेण हेः लुकि **सुनु** इति रूपं भवति। तातङ्पक्षे **सुनुतात्** इति रूपमपि जायते। मिपि सुनु मि इति जाते मेर्निः इति मिस्थाने नि इत्यादेशे सुनु नि इति आडुत्तमस्य पिच्च इति आडागमे सुनु आ नि इति जाते नोः उकारस्य गुणे ओकारे अवादेशे वर्णसम्मेलने **सुनवानि** इति रूपम्। सुनु वस्, सुनु मस् इत्यत्र आडुत्तमस्य पिच्च इति आडागमे सागमकस्य वसः मसश्च पिद्वद्भावे सार्वधातुकमपित् इति ङित्त्वम् न भवति। तेन क्ङिति च इति गुणनिषेधोऽपि न। ततः नित्यं ङितः इति सकारलोपे **सुनवाव, सुनवाम** इति रूपम्। नित्यं ङितः इति सकारलोपः।

तथा हि लोटि परस्मैपदे रूपाणि - **सुनोतु-सुनुतात्, सुनुताम्, सुन्वन्तु। सुनु-सुनुतात्, सुनुतम्, सुनुत। सुनवानि, सुनवाव, सुनवाम।**

आत्मनेपदस्थले उत्तमपुरुषं विहाय अन्यत्र सार्वधातुकमपित् इति ङिद्वद्भावः। उत्तमपुरुषे तु आडुत्तमस्य पिच्च इत्यनेन पिद्वद्भावे सार्वधातुकमपित् इति न ङित्त्वम्। तेन क्ङिति च इति गुणवृद्धिनिषेधोऽपि न। प्रथमपुरुषैकवचने तप्रत्यये एत्वे सुनु ते इति जाते आमेतः इति एकारस्य स्थाने आम्-आदेशे **सुनुताम्** इति रूपम्। आतामि सुनु आताम् इति जाते टेः आमः एत्वे सुनु आते इति जाते आमेतः इति एकारस्य आम्-आदेशे सुनु आताम् इति जाते हुश्नुवोः सार्वधातुके इत्यनेन नोः उकारस्य स्थाने यणि वकारे **सुन्वाताम्** इति रूपम्। आथामि एवमेव प्रक्रिया। झे प्रक्रियया सुनु झ इति स्थिते झोऽन्तः इत्यस्य आत्मनेपदेष्वनतः इति अपवादसूत्रेण केवलस्य झकारस्य स्थाने अत् इत्यादेशे सुनु अत् अ इति जाते टेः अकारस्य एकारे सुनु अत् ए इति जाते आमेतः इति एकारस्य स्थाने आमादेशे सुनु अत् आम् इति जाते हुश्नुवोः सार्वधातुके इति नोः उकास्य स्थाने यणि वकारे सुन् व् अत् आम् इति जाते वर्णसम्मेलने **सुन्वताम्** इति रूपम्। थासि सुनु थास् इति स्थिते थासः से इत्यादेशे सुनु से इति जाते सकारात् परस्य एकारस्य सवाभ्यां वामौ इति एकारस्य वकारादेशे आदेशप्रत्यययोः इति सकारस्य षकारे





कृते **सुनुष्व** इति रूपम्। ध्वमि सुनु ध्वम् इति स्थिते टेः अमः एत्वे सुनु ध्वे इति जाते वकारात् परस्य एकारस्य सवाभ्यां वामौ इति अमादेशे **सुनुध्वम्** इति रूपम्। इटि सु नु इ इति स्थिते टिसंज्ञकस्य इकारस्य एत्वे एत ऐ इति सूत्रेण प्रत्ययस्य एकारस्य स्थाने ऐकारादेशे सुनु ऐ इति जाते आडुत्तमस्य पिच्च इति आडागमे सागमकस्य ऐ इत्यस्य पित्त्वात् सार्वधातुकमपित् इति न ङित्त्वम्। तेन क्ङिति च इति न गुणनिषेधः। अतः सार्वधातुकार्धधातुकयोः इत्यनेन नोः उकारस्य गुणे ओकारे अवादेशे सुन् अव् आ ऐ इति जाते आटश्च इति योगेन आ ऐ इत्यनयोः स्थाने वृद्धौ एकादेशे ऐकारे सुनो ऐ इति जाते ओकारस्य स्थाने अवादेशे **सुनवै** इति रूपम्। वहौ महिङि च एवमेव प्रक्रिया।

तथा हि लोटि आत्मनेपदे रूपाणि - **सुनुताम्, सुन्वाताम्, सुन्वताम्। सुनुष्व, सुन्वाथाम्, सुनुध्वम्। सुनवै, सुनवावहै, सुनवामहै**।

**लङि** अटि प्रथमपुरुषैकवचने तिपि श्नुप्रत्यये इकारलोपे तिपः सार्वधातुकत्वात् नोः उकारस्य गुणे **असुनोत्** इति रूपं भवति। एवम् सिपि मिपि च गुणः। तसादौ सार्वधातुकमपित् इति ङिद्वद्भावात् न नोः उकारस्य गुणः। वसि मसि च लोपश्चास्यान्यतरस्यां म्वोः इत्यनेन नोः उकारस्य विकल्पेन लोपः।

तथा च परस्मैपदे रूपाणि - **असुनोत्, असुनुताम्, असुन्वन्। असुनोः, असुनुतम्, असुनुत। असुनवम्, असुन्व-असुनुव, असुन्म-असुनुम**।

आत्मनेपदस्थले तप्रत्ययादेः सार्वधातुकमपित् इति अपित्त्वात् ङिद्वद्भावे गुणाभावः। सोः झे प्रक्रियया अ सुनु झ इति स्थिते आत्मनेपदेष्वनतः इति झस्य अत् इत्यादेशे अ सुनु अत् अ इति जाते हुश्नुवोः सार्वधातुके इति नोः उकारस्य स्थाने यणि वकारे **असुन्वत** इति रूपम्। वहिप्रत्यये महिङ्प्रत्यये च लोपश्चास्यान्यतरस्यां म्वोः इत्यनेन नोः उकारस्य विकल्पेन लोपः। लङि आत्मनेपदे झे, आतामि, आथामि, झे, इटि च परतः हुश्नुवोः सार्वधातुके इत्यनेन नोः उकारस्य स्थाने वकारादेशः।

तथा च आत्मनेपदे रूपाणि - **असुनुत, असुन्वाताम्, असुन्वत। असुनुथाः, असुन्वाथाम्, असुनुध्वम्। असुन्वि, असुन्वहि-असुनुवहि, असुन्महि-असुनुमहि**।

**विधिलिङि** तिपि श्नुप्रत्यये इकारलोपे यासुटि सुटि सु नु यास् स् त् इति जाते लिङः स लोपोऽनन्त्यस्य इत्यनेन सकारद्वयस्यापि लोपे **सुनुयात्** इति रूपं जायते। तसादौ रूपाणि स्वयं बोद्धव्यानि।

तथा हि **विधिलिङि** परस्मैपदे रूपाणि - **सुनुयात्, सुनुयाताम्, सुनुयुः। सुनुयाः, सुनुयातम्, सुनुयात। सुनुयाम्, सुनुयाव, सुनुयाम**।

**विधिलिङि आत्मनेपदस्थले** प्रथमैकवचने तप्रत्यये श्नुप्रत्यये लिङः सीयुट् इत्यनेन सीयुडागमे सुटि सु नु सीय् स् त इति जाते लिङः सलोपोऽनन्त्यस्य इत्यनेन सीयुटः सकारलोपे सुटः च सकारलोपे सु नु ईय् त इति जाते हुश्नुवोः सार्वधातुके इत्यनेन नोः उकारस्य स्थाने यणि वकारे लोपो व्योर्वलि इत्यनेन यकारस्य लोपे **सुन्वीत** इति रूपं भवति। एवम् अग्रेऽपि ऊह्यम्। आत्मनेपदस्थले सर्वत्रैव अजादिसार्वधातुकपरत्वात् हुश्नुवोः सार्वधातुके इति यणि वकारे सुन्वी इति भवति।



तथा हि विधिलिङि आत्मनेपदे रूपाणि - **सुन्वीत, सुन्वीयाताम्, सुन्वीरन्। सुन्वीथाः, सुन्वीयाथाम्, सुन्वीध्वम्। सुन्वीय, सुन्वीवहि, सुन्वीमहि।**

**आशीर्लिङः** आर्धधातुकत्वात् न श्नुप्रत्ययः। अकृत्सार्वधातुकयोर्दीर्घः इत्यनेन दीर्घः। हुधातुवत् रूपाणि साध्यन्ताम्। तथा च परस्मैपदे रूपाणि - **सूयात्, सूयास्ताम्, सूयासुः। सूयाः, सूयास्तम्, सूयास्त। सूयासम्, सूयास्व, सूयास्म।**

**आत्मनेपदस्थले** तप्रत्यये सीयुटि सुटि सु सीय् स् त इति जायते। यदागमपरिभाषया अत्र सीय् स् त इति समुदायः तिङ्-प्रत्ययः। लिङाशिषि इति सूत्रेण लिङादेशस्य तिङः आर्धधातुकसंज्ञा भवति। अतः सीय् स् त इति समुदायस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इति सूत्रेण इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इति तन्निषेधः। ततः लोपो व्योर्वलि इति यकारलोपे आशीर्लिङः आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन गुणे ओकारे षत्वे तकारस्य ष्टुत्वे टकारे **सोषीष्ट** इति रूपम्। थासि एवमेव प्रक्रिया। ध्वमि विभाषेटः इति ध्वमः धकारस्य विकल्पनेन ढकारः। अत्र सर्वत्र आदेशप्रत्यययोः इति सीयुटः सकारस्य षत्वम्। उत्तमपुरुषैकवचने इटि सोषीय् इ इति स्थिते इटोऽत् इति इकारस्य अत्त्वे सोषीय् अ इति जाते वर्णसम्मेलने **सोषीय** इति रूपम्।

तथा हि आत्मनेपदे आशीर्लिङि रूपाणि - **सोषीष्ट, सोषीयास्ताम्, सोषीरन्। सोषीष्ठाः, सोषीयास्थाम्, सोषीढ्वम्। सोषीय, सोषीवहि, सोषीमहि।**

**लुङि** अटि प्रथमपुरुषैकवचने तिपि श्नुप्रत्ययापवादे च्लौ सिचि तिपः इकारलोपे अ सु स् त् इति जाते अस्तिसिचोऽपृक्ते इत्यनेन ईडागमे अ सु स् ई त् इति जाते सिचः आर्धधातुकत्वात् वलादित्वात् च आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधे सूत्रमिदमारभ्यते -

## [२२.५] स्तुसुधूञ्भ्यः परस्मैपदेषु॥ (७.२.७२)

**सूत्रार्थः** - स्तुसुधूञ्भ्यः सिच इट् स्यात् परस्मैपदेषु।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। स्तुसुधुञ्भ्यः (५/३), परस्मैपदेषु (७/३) इति सूत्रगतपदच्छेदः। स्तुश्च सुश्च धूञ् च तेषामितरेतरयोगद्वन्द्वः, तेभ्यः स्तुसुधूञ्भ्यः। अञ्जेः सिचि इत्यतः सिचि (७/१) इत्यनुवर्तते तस्य च षष्ठ्येकवचनान्ततया विपरिणामः। इडत्त्यर्तिव्ययतीनाम् इत्यतः इट् (१/१) इत्यनुवर्तते। स्तुसुधूञ्भ्यः इति पञ्चम्यन्तम् अतः तस्मादित्युत्तरस्य इति परिभाषया उत्तरस्य इत्यर्थलाभः। सूत्रार्थस्तावत् - परस्मैपदस्थले स्तु, सु, धूञ् इत्येतेभ्यः धातुभ्यः उत्तरस्य सिच इडागमः स्यात्। सुस्तुधात्वोः अनिट्त्वात् आभ्याम् धातुभ्याम् परस्य सिचः इण्निषेधः प्राप्तः। अपि च स्वरतिसूतिसूयतिधूञूदितो वा इति योगेन धूञ्धातोः परस्य सिचः विकल्पेन इडागमः प्राप्तः। अतः निषेधविकल्पौ बाधित्वा सिचः नित्यम् इड्विधानार्थः प्रकृतसूत्रारम्भः। टित्त्वात् इट् सिचः आद्यावयवो भवति आद्यन्तौ टकितौ इति परिभाषया।



**उदाहरणे सूत्रार्थसमन्वयः -** पूर्वोक्तप्रकारेण सुधातोः लुङि तिपि अ सु स् ई त् इति जाते परस्मैपदस्थलत्वात् प्रकृतसूत्रेण सिचः इडागमः। ततः अ सु इ स् ईत् इति जाते सिचि वृद्धिः परस्मैपदेषु इत्यनेन सोः उकारस्य वृद्धौ औकारे आवादेशे अ साव् इ स् ईत् इति जाते इट ईटि इत्यनेन सकारस्य लोपे सवर्णदीर्घे **असावीत्** इति रूपं भवति। सिपि अपि एवमेव प्रक्रिया। परस्मैपदस्थले सर्वत्रैव इगन्ताङ्गत्वात् सिचिः वृद्धिः परस्मैपदेषु इति वृद्धिः बोद्धव्या। तसि थसि थे च ष्टुना ष्टुः इति ष्टुत्वम् बोध्यम्। वसि मसि च नित्यं ङितः इति सकारलोपः।

तथा हि परस्मैपदे रूपाणि - **असावीत्, असाविष्टाम्, असाविषुः। असावीः, असाविष्टम्, असाविष्ट। असाविषम्, असाविष्व, असाविष्म।**

आत्मनेपदसंज्ञकतप्रत्ययस्थले लुङि अटि तप्रत्यये श्नुप्रत्ययापवादे च्लौ सिचि अ सु स् त इति जाते सिचः आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन गुणे ओकारे सिचः सकारस्य षत्वे तकारस्य ष्टुत्वे टकारे **असोष्ट** इति रूपम्। एवमेव थासि ऊह्यम्। सोः झप्रत्यये प्रक्रियया अ सु स् झ इति जाते आत्मनेपदेष्वनतः इति झस्य अत् इत्यादेशे अ सु स् अत् अ इति जाते सोः उकारस्य गुणे ओकारे सिचः सस्य षत्वे **असोषत** इति रूपम् सिध्यति। ध्वमि इणः षीध्वंलुङ्लिटां धोऽङ्गात् इति ध्वमः धकारस्य ढत्वम्।

तथा च आत्मनेपदे रूपाणि - **असोष्ट, असोषाताम्, असोषत। असोष्ठाः, असोषाथाम्, असोढ्वम्। असोषि, असोष्वहि, असोष्महि।**

{सूत्रम्. **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** (८.३.७८) = इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात्।}

**लृङि** अटि तिपि इकारलोपे श्नुप्रत्ययापवादभूते स्यप्रत्यये स्यस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन गुणे ओकारे सस्य षत्वे **असोष्यत्** इति रूपं भवति। लृङि उभयविधस्थले सर्वत्रैव आदेशप्रत्यययोः इति षत्वम्। उत्तमपुरुषैकवचने असोष्य अम् इति स्थिते अमि पूर्वः इति पूर्वरूपैकादेशे **असोष्यम्** इति रूपम्। वसि मसि च नित्यं ङितः इति सकारलोपः। श्नुप्रत्ययापवादस्य स्यस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपेदेशेऽनुदात्तात् इत्यनेन तन्निषेधः।

तथा हि लृङि परस्मैपदे रूपाणि - **असोष्यत्, असोष्यताम्, असोष्यन्। असोष्यः, असोष्यतम्, असोष्यत। असोष्यम्, असोष्याव, असोष्याम।**

लृङि आत्मनेपदस्थले पूर्ववत् प्रक्रिया। तथा च आत्मनेपदे रूपाणि - **असोष्यत, असोष्येताम्, असोष्यन्त। असोष्यथाः, असोष्येथाम्, असोष्यध्वम्। असोष्ये, असोष्यावहि, असोष्यामहि।**

।।इति स्वादिगणः।।



## पाठगतप्रश्नाः-१

१. स्वादिगणीयधातुभ्यः कः विकरणप्रत्ययो विधीयते।

२. स्तुसुधूञ्भ्यः परस्मैपदेषु इति सूत्रं किं विदधाति।

३. सुधातोः श्नुप्रत्ययविधायकसूत्रं किम्।

४. स्वादिगणीयस्य सुधातोः कोऽर्थः।

५. सुधातोः परस्मैपदे लुङि प्रथमपुरुषैकवचने किं रूपम्।

६. सुधातोः आत्मनेपदे लटि उत्तमपुरुषबहुवचने किं रूपम्।

७. सुधातोः परस्मैपदे लिटि मध्यमपुरुषैकवचने किं रूपम्।

८. श्नुप्रत्ययस्य शकारस्य इत्संज्ञायाः किं प्रयोजनम्।

९. आशीर्लिङि किमर्थं श्नुप्रत्ययः न भवति।

१०. सूयात् इत्यत्र सोः उकारस्य दीर्घः केन सूत्रेण।

# अथ तुदादिगणः

तुद व्यथने इति स्वरितेतः अनिटः तुदादिगणीयधातोः वर्तमानक्रियावृत्तित्वविवक्षायाम् कर्तरि **लटि** परस्मैपदसंज्ञके तिपि तुद् ति इति जाते तिपः सार्वधातुकत्वात् कर्तरि शप् इत्यनेन शपि प्राप्ते सूत्रमिदमारभ्यते -

## [२२.६] तुदादिभ्यः शः॥ (३.१.७७)

**सूत्रार्थः** - तुदादिगणपठितधातुभ्यः शप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परे।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। तुदादिभ्यः (५/३), शः (१/१) इति सूत्रगतपदच्छेदः। कर्तरि शप् इत्यतः कर्तरि (७/१) इति पदं, सार्वधातुके यक् इत्यतः सार्वधातुके (७/१) इति पदं च अनुवर्तते। प्रत्ययः (१/१), परः (१/१) इत्युभयमपि अधिकृतम्। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इति सूत्रात् धातोः इति पदम् अनुवर्तते। पदयोजना - कर्तरि सार्वधातुके धातोः शः प्रत्ययः परः इति। तुदादिगणः दशसु धातुगणेषु षष्ठः। तुद् आदिः येषाम् (धातूनाम्) ते तुदादयः (धातवः) इति तद्गुणसंविज्ञानबहुव्रीहिसमासः, तेभ्यः तुदादिभ्यः। सूत्रार्थस्तावत् - कर्त्रर्थके सार्वधातुकसंज्ञकप्रत्यये



परतः तुदादिगणपठितधातुभ्यः शप्रत्ययः परो भवति। लशक्वतद्धिते इत्यनेन शप्रत्ययस्य शकारस्य इत्संज्ञा भवति। अतः अ-मात्रम् शिष्यते। शप्रत्ययस्य शित्त्वात् तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञा। किञ्च सार्वधातुकसंज्ञकस्य अस्य शप्रत्ययस्य अपित्त्वात् सार्वधातुकमपित् इत्यनेन ङिद्वद्भावः। यस्य फलम् अस्ति गुणनिषेधः। शप्प्रत्ययः पित् भवति, शप्रत्ययः अपित् भवति इति शप्-शयोः पार्थक्यम्। शपः पित्त्वात् अनुदात्तौ सुप्पितौ इति अनुदात्तस्वरः। शे तु आद्युदात्तश्च इति उदात्तस्वरः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण तुद् ति इति जाते तुदादिभ्यः शः (३.१.७७) इति शबपवादस्य शप्रत्ययस्य प्राप्तिः। किञ्च पुगन्तलघूपधस्य च (७.३.८६) इति लघूपधगुणस्य प्राप्तिः इत्युभयोः युगपत् प्राप्तौ परत्वात् लघूपधगुणः प्राप्तः। तदा गुणे कृते अकृते च शस्य प्राप्तत्वात् कृताकृप्रसङ्गी नित्यः इति परिभाषया शः नित्यः। किन्तु शप्रत्यये कृते तस्य अपित्त्वात् सार्वधातुकत्वात् च सार्वधातुकमपित् इति ङिद्वद्भावात् परोऽपि लघूपधगुणो न प्रवर्तते क्ङिति च इति निषेधात्। अतः परान्नित्यं बलवत् इति परिभाषया आदौ शप्रत्यये कृते न लघूपधगुणस्य प्राप्तिः। एवञ्च शप्रत्यये अनुबन्धलोपे तुद् अ ति इति जाते वर्णसम्मेलने च **तुदति** इति रूपं सिध्यति। एवम् तसादौ अपि।

तथा हि लटि परस्मैपदे रूपाणि - **तुदति, तुदतः, तुदन्ति। तुदसि, तुदथः, तुदथ। तुदामि, तुदावः, तुदामः।**

**अत्र अवधेयम्** - तुद् धातोः स्वरितेत्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन क्रियाफलस्य कर्तृगामित्वे तुदः विहितस्य लस्य स्थाने आत्मनेपदप्रत्ययो भवति। क्रियाफलस्य परगामित्वे तु शेषात्कर्तरि परस्मैपदम् इति परस्मैपदप्रत्ययो भवति।

आत्मनेपदस्थले शप्रत्ययस्य सार्वधातुकसंज्ञकत्वात् अपित्त्वात् च सार्वधातुकमपित् इति ङिद्वद्भावे पुगन्तलघूपधस्य च इति प्राप्तस्य लघूपधगुणस्य क्ङिति च इति निषेधः। किञ्च तादीनाम् नवानाम् अपित्त्वात् सार्वधातुकत्वात् च सार्वधातुकमपित् इति ङिद्वद्भावः। तुदः आतामि ङिद्वद्भावे आतामः आकारस्य इयादेशे यकारलोपे तुद् अ इ ताम् इति स्थितौ आद्गुणः इति गुणैकादेशे एकारे तुद् ए ताम् इति जाते टेः आमः एत्वे **तुदेते** इति रूपम् सिध्यति। आथामि एवमेव। तुदः थासि शे टित आत्मनेपदानां टेरे इति सूत्रापवादेन थासः से इति सूत्रेण थासः स्थाने से इत्यादेशः। उत्तमपुरुषैकवचने इटि इकारे शे टिसंज्ञकस्य इकारस्य एत्वे तुद् अ ए इति जाते अतो गुणे इति पररूपैकादेशः। तुदः वहौ महिङि च शविकरणप्रत्यये अतो दीर्घो यञि इति दीर्घैकादेशः। थासम् विना अन्यत्र टित आत्मनेपदानां टेरे इति एत्त्वम् बोध्यम्।

तथा च आत्मनेपदे लटि रूपाणि - **तुदते, तुदेते, तुदन्ते। तुदसे, तुदेथे, तुदध्वे। तुदे, तुदावहे, तुदामहे।**

**लिटि** णलि (तिपि), थलि (सिपि), णलि (मिपि) च द्वित्वे हलादिशेषे लघूपधगुणः। अन्यत्र लिटः आर्धधातुकत्वात् सार्वधातुकमपित् इति न प्रवर्तते। किन्तु असंयोगाल्लिट् कित् (१.२.५) इति कित्त्वात् क्ङिति च लघूपधगुणनिषेधः। थलि आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच



उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधे क्रादिनियमानुसारम् थलि नित्यम् इडागमः। तेन थल्यादौ आर्धधातुकस्येड्वलादेः इत्यनेन इडागमो भवत्येव। आत्मनेपदस्थलेऽपि क्रादिनियमानुसारम् इडागमः।

तथा च परस्मैपदे लिटि रूपाणि - **तुतोद, तुतुदतुः, तुतुदुः। तुतोदिथ, तुतुदथुः, तुतुद। तुतोद, तुतुदिव, तुतुदिम**।

आत्मनेपदस्थले तुदः लिटि तप्रत्यये लिटस्तझयोरेशिरेच् इत्यनेन तकारस्य स्थाने एशादेशे तुद् ए इति जाते लिटि धातोरनभ्यासस्य इत्यनेन तुद् इत्यस्य द्वित्वे हलादिशेषे तु तुद् ए इति जाते वर्णसम्मेलने **तुतुदे** इति रूपं सिध्यति। आतामादौ रूपाणि स्वयं साध्यन्ताम्। थासि, ध्वमि, वहौ, महिङि च पूर्ववत् इडागमः। तं, थासं झं च विहाय अन्यत्र टित आत्मनेपदानां टेरे इति एत्वम् बोध्यम्।

तथा हि लिटि आत्मनेपदे रूपाणि - **तुतुदे, तुतुदाते, तुतुदिरे। तुतुदिषे, तुतुदाथे, तुतुदिध्वे। तुतुदे, तुतुदिवहे, तुतुदिमहे**।

{सूत्रम्. **असंयोगाल्लिट् कित्** (१.२.५) = असंयोगात्परोऽपिल्लिट् कित् स्यात्।}

**लुटि** इण्निषेधः। प्रथमपुरुषैकवचने तिपि शप्रत्ययापवादे तासि डित्त्वसामर्थ्यात् अभस्यापि टेः आसः लोपे तासः आर्धधातुकत्वात् पुगन्तलघूपधस्य च इत्यनेन तुदः उकारस्य गुणे ओकारे तोद् त् आ इति जायते। ततः खरि च इति योगेन तासः तकारे परतः तुदः दकारस्य चर्त्वे तकारे **तोत्ता** इति रूपं सिध्यति। तासः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः। एवम् अग्रेऽपि ऊह्यम्। अत्र प्रक्रियायै भूधातुरूपाणि दृश्यन्ताम्।

तथा च परस्मैपदे लटि रूपाणि - **तोत्ता, तोत्तारौ, तोत्तारः। तोत्तासि, तोत्तास्थः, तोत्तास्थ। तोत्तास्मि, तोत्तास्वः, तोत्तास्मः**।

आत्मनेपदस्थलेऽपि पूर्ववत् प्रक्रिया। अत्र रूपाणाम् प्रक्रियायै एध्धातुरूपाणि अवलोक्यन्ताम्। तथा च आत्मनेपदे रूपाणि - **तोत्ता, तोत्तारौ, तोत्तारः। तोत्तासे, तोत्तासाथे, तोत्ताध्वे। तोत्ताहे, तोत्तास्वहे, तोत्तास्महे**।

**लृटि** प्रथमपुरुषैकवचने तिपि शप्रत्ययापवादे स्यप्रत्यये स्यस्य आर्धधातुकत्वात् पुगन्तलघूपधस्य च इति लघूपधगुणे खरि च इति दकारस्य चर्त्वे तकारे **तोत्स्यति** इति रूपं सिध्यति। स्यस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः। एवम् अन्यत्रापि विद्यार्थिना ऊह्यम्।

एवञ्च परस्मैपदे लृटि रूपाणि - **तोत्स्यति, तोत्स्यतः, तोत्स्यन्ति। तोत्स्यसि, तोत्स्यथः, तोत्स्यथ। तोत्स्यामि, तोत्स्यावः, तोत्स्यामः**।

आत्मनेपदस्थलेऽपि पूर्ववत् प्रक्रिया। थासं विना सर्वत्रैव टेः एत्वम्। तथा हि आत्मनेपदे रूपाणि - **तोत्स्यते, तोत्स्येते, तोत्स्यन्ते। तोत्स्यसे, तोत्स्येथे, तोत्स्यध्वे। तोत्स्ये, तोत्स्यावहे, तोत्स्यामहे**।

**लोटि** उभयविधस्थलेऽपि न कश्चित् विशेषः। तथा च परस्मैपदे रूपाणि - **तुदतु - (तातङि) तुदतात्, तुदताम्, तुदन्तु। तुद - (तातङि) तुदतात्, तुदतम्, तुदत। तुदानि, तुदाव, तुदाम**।



आत्मनेपदे एध्-धातुवत् प्रक्रिया ज्ञेया। तथा च रूपाणि - **तुदताम्, तुदेताम्, तुदन्ताम्। तुदस्व, तुदेथाम्, तुदध्वम्। तुदै, तुदावहै, तुदामहै।**

**लङि** अटि तिपि शप्रत्यये इकारलोपे **अतुदत्** इति रूपं सिध्यति। शप्रत्ययस्य सार्वधातुकमपित् इति ङिद्वद्भावात् न लघूपधगुणः। दशमकक्षायाः सन्धिप्रकरणे अधीताः केचित् योगाः अत्र प्रवर्तन्ते। तथाहि - अतुदत् इति तिङन्तत्वात् पदम्। झलां जशोऽन्ते इति सूत्रेण अन्त्यस्य तकारस्य स्थाने स्थानत आन्तर्याद् जश्त्वे दकारे अतुदद् इति स्थितिः जायते। ततश्च वाऽवसाने इति सूत्रेण विकल्पेन चर्त्वे तकारे कृते अतुदत् इत्यपि शब्दः निष्पद्यते। इत्थम् **अतुदद् अतुदत्** इति द्विविधमपि रूपं साधु। एवमन्यत्रापि विद्यार्थिना स्वयमूह्यम्।

तथा च लङि परस्मैपदे रूपाणि- **अतुदत्, अतुदताम्, अतुदन्। अतुदः, अतुदतम्, अतुदत। अतुदम्, अतुदाव, अतुदाम।**

आत्मनेपदस्थलेऽपि पूर्ववत् लघूपधगुणनिषेधः। तथा च आत्मनेपदे रूपाणि - **अतुदत, अतुदेताम्, अतुदन्त। अतुदथाः, अतुदेथाम्, अतुदध्वम्। अतुदे, अतुदावहि, अतुदामहि।**

**विधिलिङि** तिपि शप्रत्यये यासुटि सुटि इकारलोपे तुद् अ यास् स् त् इति जाते सकारद्वयलोपे अते येयः इत्यनेन या इत्यस्य स्थाने तुद् अ इय् त् इति जाते लोपो व्योर्वलि इत्यनेन यकारस्य लोपे आद्गुणः इति अकार-इकारयोः स्थाने गुणे एकारे **तुदेत्** इति रूपं जायते। अत्र न कश्चित् विशेषः। अन्येषां प्रक्रियायै भूधातुरूपाणि वीक्ष्यन्ताम्।

तथा च परस्मैपदे रूपाणि - **तुदेत्, तुदेताम्, तुदेयुः। तुदेः, तुदेतम्, तुदेत। तुदेयम्, तुदेव, तुदेम।** आत्मनेपदे च एधधातुवत् रूपाणि - **तुदेत, तुदेयाताम्, तुदेरन्। तुदेथाः, तुदेयाथाम्, तुदेध्वम्। तुदेय, तुदेवहि,तुदेमहि।**

**आशीर्लिङः** लिङाशिषि इत्यनेन आर्धधातुकत्वात् न शप्रत्ययस्य प्रवृत्तिः। प्रथमैकवचने तिपि यासुटि सुटि इकारलोपे तुद् यास् स् त् इति जाते स्कोः संयोगाद्योरन्ते च इत्यनेन सकारद्वयस्यापि लोपे तुद् यात् इति स्थितौ आर्धधातुकत्वात् गुणः प्राप्तः। तदा किदाशिषि इति सूत्रेण यासुटः कित्त्वात् यात् इति समुदायस्यापि कित्त्वं भवति इति कृत्वा क्ङिति च इति गुणनिषेधः। तेन **तुद्यात्** इति रूपम् सिध्यति। सिपि तुद्यास् स् इति जाते यासुटः सकारस्य स्कोः संयोगाद्योरन्ते च इत्यनेन लोपः। सिपः सस्य तु रुत्वे विसर्गे **तुद्याः** इति रूपम्। एवमेव अग्रेऽपि स्वयम् ऊह्यम्।

तथा हि आशीर्लिङि परस्मैपदे रूपाणि - **तुद्यात्, तुद्यास्ताम्, तुद्यासुः। तुद्याः, तुद्यास्तम्, तुद्यास्त। तुद्यासम्, तुद्यास्व, तुद्यास्म।**

आत्मनेपदस्थलेऽपि न शप्रत्ययस्य प्राप्तिः आशीर्लिङः आर्धधातुकत्वात्। एवञ्च तप्रत्यये सीयुटि सुटि तुद् सीय् स् त इति जायते। यदागमपरिभाषया अत्र सीय् स् त इति समुदायः तिङ्-प्रत्ययः। लिङाशिषि इति सूत्रेण लिङादेशस्य तिङः आर्धधातुकसंज्ञा भवति। अतः सीय् स्त इति समुदायस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इति सूत्रेण इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इति

तन्निषेधः। ततः लोपो व्योर्वलि इत्यनेन यकारस्य लोपे आर्धधातुकत्वात् पुगन्तलघूपधस्य च इत्यनेन तुदः उकारस्य गुणे प्राप्ते सूत्रमिदमारभ्यते -

## [२२.७] लिङ्सिचावात्मनेपदेषु॥ (१.२.११)

**सूत्रार्थः** - इक्समीपाद्धलः परौ झलादिलिङात्मनेपदपरः सिच्चेत्येतौ कितौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। लिङ्सिचौ (१/२), आत्मनेपदेषु (७/३) इति सूत्रगतपदच्छेदः। लिङ् च सिच् च तयोः इतरेतरयोगद्वन्द्वे लिङ्सिचौ इति। इको झल् इत्यतः झल् (१/१), हलन्ताच्च इत्यतः हलन्तात् (५/१), असंयोगाल्लिट् कित् इत्यतः कित् (१/१) इत्येतेषां पदानाम् अनुवृत्तिर्भवति। झल् इति लिङ्सिचौ इत्यस्य विशेषणं भवति, हलन्तात् इत्यत्र अन्तपदस्य समीपम् इत्यर्थः। तेन हलन्तात् इत्यस्य हलः समीपात् इत्यर्थः। सूत्रार्थस्तावत् - इकः समीपे यो हल् वर्तते तस्मात् परं झलादिलिङ् झलादिसिच् च किद्वद् भवति आत्मनेपदप्रत्यये परतः इति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण तुद् सीय् त इति स्थिते आर्धधातुकत्वात् पुगन्तलघूपधस्य च इत्यनेन प्राप्तस्य गुणस्य क्ङिति च इत्यनेन निषेधः। यतो हि लिङ्सिचावात्मनेपदेषु इति प्रकृतसूत्रेण सागमकस्य तप्रत्ययस्य कित्त्वं विधीयते, झलादिलिङ्त्वात्। ततः लोपो व्योर्वलि इति यकारलोपे सुडागमे षत्वे ष्टुत्वे टकारे तुत्सीष्ट इति रूपं भवति। एवम् अन्यत्रापि स्वयं बोद्धव्यम्।

तथा च आशीर्लिङि आत्मनेपदे रूपाणि - **तुत्सीष्ट, तुत्सीयास्ताम्, तुत्सीरन्। तुत्सीष्ठाः, तुत्सीयास्थाम्, तुत्सीध्वम्। तुत्सीय, तुत्सीवहि, तुत्सीमहि।**

**लुङि** तुदः अटि तिपि शप्रत्ययापवादे च्लौ सिचि इकारलोपे अतुद् स् त् इति जाते सिचः आर्धधातुकत्वात् स्वयम् वलादित्वात् च आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधे अस्तिसिचोऽपृक्ते इत्यनेन ईडागमे अतुद् स् ईत् इति जाते वदव्रजहलन्तस्याचः इत्यनेन तुदः उकारस्य वृद्धौ औकारे खरि च इति दकारस्य चर्त्वे **अतौत्सीत्** इति रूपं सिध्यति। तसि तसः तामादेशे च्लौ सिचि अतुद् स् ताम् इति जाते वदव्रजहलन्तस्याचः इत्यनेन तुदः उकारस्य वृद्धौ अतौद् स् ताम् इति जायते। ततः सकारस्य झलो झलि इत्यनेन सकारस्य लोपे खरि च इत्यनेन दकारस्य चर्त्वे तकारे वर्णसम्मेलने **अतौत्ताम्** इति रूपं भवति। तामि, तमि, ते, थासि, ध्वमि च सकारस्य झलो झलि इति लोपः।

तथा हि लुङि परस्मैपदे रूपाणि - **अतौत्सीत्, अतौत्ताम्, अतौत्सुः। अतौत्सीः, अतौत्तम्, अतौत्त। अतौत्सम्, अतौत्स्व, अतौत्स्म।**

वदव्रजहलन्तस्याचः इति सूत्रं परस्मैपदस्थले प्रवर्तते इत्यतः आत्मनेपदस्थले न वृद्धिः। किञ्च लिङ्सिचावात्मनेपदेषु इति सूत्रेण सिचः कित्वात् लघूपधगुणनिषेधः। तेन न गुणवृद्धी स्तः। तथा च आत्मनेपदे रूपाणि - **अतुत्त, अतुत्साताम्, अतुत्सत। अतुत्थाः, अतुत्साथाम्, अतुद्ध्वम्। अतुत्सि, अतुत्स्वहि, अतुत्स्महि।**



लृङि अटि तिपि शप्रत्ययापवादे स्यप्रत्यये स्यस्य आर्धधातुकत्वात् पुगन्तलघूपधस्य च इत्यनेन लघूपधगुणे ओकारे खरि च इति चर्त्वे तिपः इकारलोपे **अतोत्स्यत्** इति रूपं भवति। स्यस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः। एवम् अन्यत्रापि विद्यार्थिना ऊह्यम्।

एवञ्च परस्मैपदे रूपाणि तावत् - **अतोत्स्यत्, अतोत्स्यताम्, अतोत्स्यन्। अतोत्स्यः, अतोत्स्यतम्, अतोत्स्यत। अतोत्स्यम्, अतोत्स्याव, अतोत्स्याम।**

आत्मनेपदस्थले न कश्चित् विशेषः। रूपाणां प्रक्रियायै एधधातुरूपाणि द्रष्टुम् शक्यानि। तथा च आत्मनेपदे रूपाणि - **अतोत्स्यत, अतोत्स्येताम्, अतोत्स्यन्त। अतोत्स्यथाः, अतोत्स्येथाम्, अतोत्स्यध्वम्। अतोत्स्ये, अतोत्स्यावहि, अतोत्स्यामहि।**

।।इति तुदादिगणः।।



## पाठगतप्रश्नाः-२

११. तुदादिगणीयधातुभ्यः कः विकरणप्रत्ययो विधीयते।

१२. लिङ्सिचावात्मनेपदेषु इति सूत्रस्य कोऽर्थः।

१३. तुद्-धातोः शप्रत्ययविधायकसूत्रं किम्।

१४. तुद्-धातोः कोऽर्थः।

१५. तुद्-धातोः लुङि तिपि किम् रूपम्।

१६. तुद्-धातोः आत्मनेपदे आशीर्लिङि मध्यमपुरुषैकवचने किम् रूपम्।

१७. तुद्-धातोः आत्मनेपदे लिटि मध्यमपुरुषबहुवचने किम् रूपम्।

१८. शप्रत्ययस्य शकारस्य इत्संज्ञायाः किं प्रयोजनम्।

१९. तुदः आशीर्लिङि तप्रत्यये किं रूपम्।

२०. तुदति इत्यत्र लघूपधगुणो कुतो न।

## अथ रुधादिगणः

(रुधिँर् आवरणे इति धातोः इर इत्संज्ञा वाच्या इति वार्तिकेन इरः इत्संज्ञायां तस्य लोपः इत्यनेन तस्य लोपे रुध् इत्येव शिष्यते। इरितः प्रयोजनम् इरितो वा इति सूत्रेण लुङि विकल्पेन अङ्विधानम्।) रुधिर् आवरणे इति स्वरितेतः उभयपदिनः अनिटः सकर्मकात् इरितः रुधादिगणीयात्

धातोः वर्तमानक्रियावृत्तित्वविवक्षायां **लटि** परस्मैपदसंज्ञके तिपि अनुबन्धलोपे रुध् ति इति जाते कर्तरि शप् इत्यनेन शपि प्राप्ते सूत्रमिदं प्रारभ्यते -

## [२२.८] रुधादिभ्यः श्नम्॥ (३.१.७८)

**सूत्रार्थः** - रुधादिगणपठितधातुभ्यः श्नम्-प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परे।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। रुधादिभ्यः (५/३), श्नम् (१/१) इति सूत्रगतपदच्छेदः। कर्तरि शप् इत्यतः कर्तरि (७/१) इति पदं, सार्वधातुके यक् इत्यतः सार्वधातुके (७/१) इति पदं च अनुवर्तते। प्रत्ययः (१/१), परः (१/१) इत्युभयमपि अधिक्रियते। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इति सूत्रात् धातोः इति पदम् अनुवर्तते। पदयोजना - कर्तरि सार्वधातुके धातोः श्नम् प्रत्ययः परः इति। रुधादिगणः दशसु धातुगणेषु सप्तमः। रुध् आदिः येषाम् (धातूनाम्) ते रुधादयः (धातवः) इति तद्गुणसंविज्ञानबहुव्रीहिसमासः, तेभ्यः रुधादिभ्यः। सूत्रार्थस्तावत् - कर्त्रर्थके सार्वधातुकसंज्ञकप्रत्यये परतः रुधादिगणपठितधातुभ्यः श्नम्प्रत्ययः परो भवति। श्नम्प्रत्ययस्य शकारस्य इत्संज्ञा लशक्वतद्धिते इत्यनेन भवति। मकारश्च हलन्त्यम् इत्यनेन इतसंज्ञकः। अतः न इत्येव शिष्यते। श्नमः शित्त्वात् सार्वधातुकत्वे सार्वधातुकमपित् इति (गुणवृद्धिनिषेधाय) ङिद्वद्भावे सत्यपि नैतद् शित्करणस्य प्रयोजनम्। यतः गुणवृद्धिप्रसक्तिरेव नास्ति। कारणं हि श्नम् मित्त्वात् मिदचोऽन्त्यात्परः इति परिभाषया अन्त्याद् अचः परो भवति। अतः श्नमि सति नैव कुत्रचित् इगन्ताङ्गम् लभ्यते येन गुणवृद्धिप्रसक्तिः स्यात्।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण रुध् ति इति जाते रुधादिभ्यः श्नम् (३.१.७८) इति शबपवादस्य श्नम्-प्रत्ययस्य प्राप्तिः। किञ्च पुगन्तलघूपधस्य च (७.३.८६) इति लघूपधगुणस्य प्राप्तिः इत्युभयोः युगपत् प्राप्तौ परत्वात् लघूपधगुणः प्राप्तः। तदा गुणे कृते अकृते च शस्य प्राप्तत्वात् कृताकृतप्रसङ्गी नित्यः इति परिभाषया श्नम् नित्यः। किन्तु श्नमि कृते सति लघूपधत्वाभावात् न गुणप्रसक्तिः। तस्मात् रुधादिभ्यः श्नम् इत्यनेन शप्प्रत्ययापवादः श्नम्-प्रत्ययो भवति। स च श्नम् मित्त्वात् मिदचोऽन्त्यात्परः इति परिभाषया अन्त्याद् अचः परो भवति। तेन रु न ध् ति इति जाते अग्रिमसूत्रमारभ्यते -

## [२२.९] झषस्तथोर्धोऽधः॥ (८.२.४०)

**सूत्रार्थः** - झषः परयोस्तथोर्धः स्यान्न तु दधातेः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् चत्वारि पदानि सन्ति। झषः (५/१), तथोः (६/२), धः (१/१), अधः (५/१) इति सूत्रगतपदच्छेदः। धः इत्यत्र धकारात् अकारः उच्चारणार्थः। न धाः अधाः तस्मात् अधः इति विश्वपः इति शब्दवत्। झष् इति प्रत्याहारः। एवञ्च झषप्रत्याहारस्थवर्णात् परयोः तकारथकारयोः स्थाने धकारादेशो भवति धा-धातुं विना इति सूत्रार्थः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण रु न ध् ति इति जाते तेः पूर्वम् यः धकारः अस्ति सः झष्प्रत्याहारस्थवर्णः। किञ्च तस्मात् धकारात् परम् तेः तकारः अस्ति इति कृत्वा प्रकृतसूत्रेण



तकारस्य स्थाने धकारादेशो भवति। ततः झलां जश् झशि इत्यनेन धातोः धकारस्य जश्त्वे दकारे अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन नकारस्य णत्वे **रुणद्धि** इति रूपं सिध्यति।

तसि श्नमि रु न ध् तस् इति जाते तसः अपित्त्वात् सार्वधातुकमपित् इत्यनेन तसः ङिद्वद्भावे सूत्रमिदमारभ्यते -

## [२२.१०] श्नसोरल्लोपः॥ (६.४.१११)

**सूत्रार्थः** - श्नस्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। श्नसोः (६/२), अल्लोपः (१/१) इति द्विपदं सूत्रम्। श्नश्च अस् च तयोरितरेतरयोगद्वन्द्वः श्नसौ (शकन्ध्वादिपररूपम्)। अतः लोपः अल्लोपः इति षष्ठीतत्पुरुषसमासः। सूत्रेऽस्मिन् अत उत्सार्वधातुके इत्यतः सार्वधातुके इत्यस्य, गमहनजनखनघसां लोपः क्ङित्यनङि इत्यतः क्ङिति इत्यस्य च अनुवृत्तिर्भवति। सार्वधातुके किति ङिति च परतः श्नस्य असः च अतः लोपो भवति इति सूत्रार्थः। श्न इति श्नम्-प्रत्ययैकदेशस्य ग्रहणम्।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण रुध्-धातोः तसि तसः सार्वधातुकत्वात् ङित्त्वात् च श्नसोरल्लोपः इत्यनेन श्नमः अकारस्य लोपे रुन् ध् तस् इति जाते झषस्तथोर्धोऽधः इत्यनेन तसः तकारस्य धकारे रुन् ध् धस् इति जाते झरो झरि सवर्णे इत्यनेन विकल्पेन प्रथमधकारस्य लोपे रुन् ध स् इति जाते अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन नकारस्य णत्वं प्राप्तं किञ्च नश्चापदान्तस्य झलि इत्यनेन अनुस्वारोऽपि प्राप्तः। उभयमपि त्रिपादीस्थं सूत्रं किन्तु अट्कुप्वाङ्नुम्व्यवायेऽपि (८.४.२) इति णत्वविधायकसूत्रस्य परत्रिपादीत्वात् (८.३.२४) इति अनुस्वारविधायकपूर्वत्रिपादीस्थसूत्रं प्रति णत्वस्य असिद्धत्वात् अनुस्वार एव भवति। तस्य च अनुस्वारस्य अनुस्वारस्य ययि परसवर्णः इत्यनेन परसवर्णे नकारे सकारस्य रुत्वे रेफस्य च विसर्गे कृते **रुन्धः** इति रूपं भवति। यदा तु धकारस्य लोपाभावः तदा प्रथमधकारस्य जश्त्वे दकारे **रुन्द्धः** इति रूपं भवति। एवमेव थसि थे च प्रक्रिया ज्ञेया।

{सूत्रम्. **झरो झरि सवर्णे** (८.४.६५) = हलः परस्य झरो वा लोपः सवर्णे झरि।}

बहुवचने झिप्रत्यये झस्य अन्तादेशे श्नमि अनुबन्धलोपे रुनध् अन्ति इति जाते सार्वधातुकमपित् इत्यनेन अन्ति इति ङित् अस्ति। अतः श्नसोरल्लोपः इत्यनेन नकारोत्तरवर्तिनः अकारस्य लोपे रुन् ध् अन्ति इति जाते नश्चापदान्तस्य झलि इत्यनेन नकारस्य अनुस्वारे तस्य च परसवर्णे नकारे **रुन्धन्ति** इति रूपं भवति।

सिपि श्नमि रुनध् सि इति जाते सिपः पित्त्वात् सार्वधातुकमपित् इत्यस्याप्रवृत्तौ श्नसोरल्लोपः इत्यस्यापि अप्रवृत्तिः। नकारस्य णत्वे धकारस्य जश्त्वे दकारे रुणद् सि इति जाते सकारपरकत्वात् दकारस्य स्थाने खरि च इत्यनेन चर्त्वे तकारादेशे रुणत् सि इति जाते वर्णसम्मेलने **रुणत्सि** इति रूपं भवति।



मिपि श्नमि रुनध् मि इति जाते मिपः पित्त्वात् सार्वधातुकमपित् इत्यस्याप्रवृत्तौ श्नसोरल्लोपः इत्यस्यापि अप्रवृत्तिः। नकारस्य णत्वे धकारस्य जश्त्वे दकारे रुणद् मि इति जाते वर्णसम्मेलने **रुणद्मि** इति रूपं भवति।

वसि श्नमि रुनध् वस् इति जाते सार्वधातुकमपित् इत्यनेन वसः ङित्त्वात् श्नसोरल्लोपः इत्यनेन नकारोत्तरवर्तिनः अकारस्य लोपे नश्चापदान्तस्य झलि इत्यनेन नकारस्य अनुस्वारे अनुस्वारस्य ययि परसवर्णः इत्यनेन अनुस्वारस्य परसवर्णे नकारे सकारस्य रुत्वे रेफस्य च विसर्गे कृते **रुन्ध्वः** इति रूपं सिध्यति। एवमेव मसि बोद्धव्यम्।

तथा हि लटि परस्मैपदे रूपाणि - **रुणद्धि, रुन्धः/रुन्द्धः, रुन्धन्ति। रुणत्सि, रुन्धः/रुन्द्धः, रुन्ध/रुन्द्ध। रुणद्मि, रुन्ध्वः, रुन्ध्मः।**

**अत्र अवधेयम्** - रुध्-धातोः स्वरितेत्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन क्रियाफलस्य कर्तृगामित्वे रुध्-धातोः विहितस्य लस्य स्थाने आत्मनेपदप्रत्ययो भवति। क्रियाफलस्य परगामित्वे तु शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदप्रत्ययो भवति।

आत्मनेपदस्थले न कोऽपि पित्प्रत्ययः। अतः सार्वधातुकमपित् इत्यनेन नवानाम् अपि आत्मनेपदप्रत्ययानां ङिद्वद्भावः। तेन श्नसोरल्लोपः इत्यनेन नकारोत्तरवर्तिनः अकारस्य लोपः। प्रथमपुरुषैकवचने तप्रत्यये प्रक्रियया रुन् ध् ते इति जाते झषस्तथोर्धोऽधः इत्यनेन तकारस्य स्थाने धकारादेशे रुन् ध् धे इति जाते झरो झरि सवर्णे इत्यनेन विकल्पेन प्रथमधकारलोपे नस्य अनुस्वारे तस्य च परसवर्णे **रुन्धे** इति रूपम्। धकारलोपाभावपक्षे प्रथमधकारस्य जश्त्वे दकारे **रुन्द्धे** इति रूपम् सिध्यति। बहुवचने झप्रत्यये प्रक्रियया रु न् ध् झ इति जाते आत्मनेपदेष्वनतः इत्यनेन झस्य अत् इत्यादेशे रु न् ध् अत् अ इति जाते टेः एत्वे **रुन्धते** इति रूपम् सिध्यति। अन्येषाम् प्रक्रियाः स्वयं बोद्धव्याः।

तथा हि लटि आत्मनेपदे रूपाणि - **रुन्धे/रुन्द्धे, रुन्धाते, रुन्धते। रुन्त्से, रुन्धाथे, रुन्ध्वे/रुन्द्ध्वे। रुन्धे, रुन्ध्वहे, रुन्ध्महे।**

**लिटि** तिपि णलि धातोर्द्वित्वे हलादिशेषे लिटः आर्धधातुकत्वात् पुगन्तलघूपधस्य च इत्यनेन रुध् इत्यस्य रेफोत्तरवर्तिनः उकारस्य गुणे ओकारे **रुरोध** इति रूपं भवति। सिपि थलि प्रक्रियया रु रोध् थ इति जाते आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधे क्रादिनियमानुसारम् नित्यम् इडागमे **रुरोधिथ** इति रूपम् सिध्यति। एवमेव वसि मसि च इडागमः। अत्र प्रक्रियार्थम् तुद्धातुरूपाणि द्रष्टव्यानि।

तथा च परस्मैपदे रूपाणि - **रुरोध, रुरुधतुः, रुरुधुः। रुरोधिथ, रुरुधथुः, रुरुध। रुरोध, रुरुधिव, रुरुधिम।**

आत्मनेपदस्थले च न कश्चित् विशेषः। तथा च रूपाणि – **रुरुधे, रुरुधाते, रुरुधिरे। रुरुधिषे, रुरुधाथे, रुरुधिध्वे। रुरुधे, रुरुधिवहे, रुरुधिमहे।**



**लुटि** तिपि श्नम्-अपवादे तासि तासः आर्धधातुकत्वात् पुगन्तलघूपधस्य च इत्यनेन लघूपधगुणे रोध् तास् आ इति जाते डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपे रोध् त् आ इति जाते तासः तकारस्य स्थाने झषस्तथोर्धोऽधः इत्यनेन धकारादेशे पूर्वधकारस्य जश्त्वे वर्णसम्मेलने **रोद्धा** इति रूपं भवति। एवम् अग्रेऽपि परस्मैपदे रूपाणि स्वयं साधनीयानि। अत्र तासः आर्धधातुकत्वात् स्वयम् वलादित्वात् च आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधः।

तथा हि परस्मैपदे रूपाणि - **रोद्धा, रोद्धारौ, रोद्धारः। रोद्धासि, रोद्धास्थः, रोद्धास्थ। रोद्धास्मि, रोद्धास्वः, रोद्धास्मः।**

आत्मनेपदे रूपाणि च - **रोद्धा, रोद्धारौ, रोद्धारः। रोद्धासे, रोद्धासाथे, रोद्धाध्वे। रोद्धाहे, रोद्धास्वहे, रोद्धास्महे।**

**लृटि** श्नम्प्रत्ययापवादः तास्प्रत्ययो भवति। तस्य च आर्धधातुकत्वात् स्वयम् वलादित्वात् च आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधः। पुनः तासः आर्धधातुकत्वात् पुगन्तलघूपधस्य च इति लघूपधगुणे ओकारः। किञ्च खरि च इति रुधः धकारस्य चर्त्वे तकारः।

तथा च परस्मैपदे रूपाणि - **रोत्स्यति, रोत्स्यतः, रोत्स्यन्ति। रोत्स्यसि, रोत्स्यथः, रोत्स्यथ। रोत्स्यामि, रोत्स्यावः, रोत्स्यामः।**

आत्मनेपदे रूपाणि च – **रोत्स्यते, रोत्स्येते, रोत्स्यन्ते। रोत्स्यसे, रोत्स्येथे, रोत्स्यध्वे। रोत्स्ये, रोत्स्यावहे, रोत्स्यामहे।**

**लोटि** परस्मैपदस्थले एरुः इत्यनेन उत्वे धत्वे जश्त्वे णत्वे **रुणद्धु** इति रूपम्, (तातङि) **रुन्धात्/रुन्द्धात्** इति रूपाणि। सिपि सेर्ह्यपिच्च इत्यनेन सेः हि इत्यादेशो भवति स अपित्, ततः हुझल्भ्यो हेर्धिः इत्यनेन हेः स्थाने धि इत्यादेशो भवति सोऽपि अपित्। ततः धेः सार्वधातुकमपित् इत्यनेन ङिद्वद्भावे श्नसोरल्लोपः इत्यनेन श्नस्य अकारस्य लोपे रु न् ध् धि इति जाते पूर्वधकारस्य झरो झरि सवर्णे इति वैकल्पिकलोपे अपदान्तनकारस्य अनुस्वारे परसवर्णे च कृते **रुन्धि** इति रूपम्, धलोपाभावपक्षे पूर्वधकारस्य जश्त्वे **रुन्द्धि** इति रूपम्, तातङ्पक्षे च **रुन्धात्, रुन्द्धात्** इति रूपद्वयम् इति साकल्येन चत्वारि रूपाणि। उत्तमपुरुषे आडुत्तमस्य पिच्च इत्यनेन आडागमे तस्य च पित्त्वात् ङिद्वद्भावो न भवति। अतः अकारलोपो न भवति।

तथा च परस्मैपदे रूपाणि - **रुणद्धु/रुन्धात्/रुन्द्धात्, रुन्धाम्/रुन्द्धाम्, रुन्धन्तु। रुन्धि/रुन्द्धि/रुन्धात्/रुन्द्धात्, रुन्धम्/रुन्द्धम्, रुन्ध/रुन्द्ध। रुणधानि, रुणधाव, रुणधाम।**

आत्मनेपदे रूपाणि च स्वयं साध्यन्ताम् – **रुन्धाम्/रुन्द्धाम्, रुन्धाताम्, रुन्धताम्। रुन्त्स्व, रुन्धाथाम्, रुन्ध्वम्/रुन्द्ध्वम्। रुणधै, रुणधावहै, रुणधामहै।**

**लङि** अटि तिपः श्नमि नकारस्य णत्वे इतश्च इत्यनेन तेः इकारस्य लोपे अरुणध् त् इति जाते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इत्यनेन अपृक्ततकारलोपे पदान्तस्य धकारस्य झलां जशोऽन्ते इत्यनेन जश्त्वे दकारे वाऽवसाने इत्यनेन दकारस्य विकल्पेन चर्त्वे तकारे **अरुणत्,** चर्त्वाभावपक्षे

**अरुणद्** इति साकल्येन रूपद्वयं भवति। एवमेव सिपि प्रक्रिया ज्ञेया। परन्तु अत्र सिपि अस्ति कश्चित् विशेषः तं प्रदर्शयितुमिदं सूत्रमारभ्यते -

## [२२.११] दश्च॥ (८.२.७५)

**सूत्रार्थः** - धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। दः (६/१), च इति सूत्रगतपदच्छेदः। सूत्रेऽस्मिन् सिपि धातो रुर्वा इति सूत्रमनुवर्तते। सिपि (७/१) धातोः (६/१) रुः (१/१) वा(अव्ययम्) इति तस्य पदच्छेदः। पदस्य (६/१) इत्यपि अधिक्रियते। दः इति धातोः विशेषणमस्ति, अतः तदन्तविधौ दकारान्तस्य धातोः इत्यर्थलाभः। तथा च सूत्रार्थस्तावत् दकारान्तस्य पदसंज्ञकस्य धातोः स्थाने विकल्पेन रु इत्यादेशो भवति सिपि परे। अलोऽन्त्यस्य इति परिभाषया अयमादेशः दकारान्तधातोः अन्त्यस्यैव अलः स्थाने अर्थात् दकारस्य स्थाने भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - रुध्-धातोः लङि अटि सिपि श्नमि नस्य णत्वे सेः इकारलोपे अपृक्तसकारलोपे पदान्तधकारस्य झलां जशोऽन्ते इत्यनेन जश्त्वे दकारे वाऽवसाने इत्यनेन दकारस्य विकल्पेन चर्त्वे तकारे **अरुणत्** इति रूपम्, चर्त्वाभावपक्षे **अरुणद्** इति रूपम्। अरुणद् इत्यस्य तिङन्तत्वात् पदसंज्ञायाम् दश्च इत्यनेन पदान्तदकारस्य रुत्वे **अरुणः** इति रूपमपि भवति एवञ्च सिपि साकल्येन रूपत्रयं भवति। अन्यत्र तथा विशेषो नास्ति।

तथा च लङि परस्मैपदे रूपाणि - **अरुणत्/अरुणद्, अरुन्धाम्/अरुन्द्धाम्, अरुन्धन्। अरुणः/अरुणत्/अरुणद्, अरुन्धम्/अरुन्द्धम्, अरुन्ध/अरुन्द्ध। अरुणधम्, अरुन्ध्व, अरुन्ध्म।**

आत्मनेपदे रूपाणि च - **अरुन्ध/अरुन्द्ध, अरुन्धाताम्, अरुन्धत। अरुन्धाः/अरुन्द्धाः, अरुन्धाथाम्, अरुन्ध्वम्/अरुन्द्ध्वम्। अरुन्धि, अरुन्ध्वहि, अरुन्ध्महि।**

**विधिलिङि** तिपि श्नम्प्रत्यये यासुटि सुटि इकारलोपे रु न ध् यास् स् त् इति जाते तिपः ङित्त्वात् सार्वधातुकत्वात् च श्नसोरल्लोपः इत्यनेन नकारोत्तरवर्तिनः अकारस्य लोपे लिङः स लोपोऽनन्त्यस्य इत्यनेन सकारद्वयस्यापि लोपे **रुन्ध्यात्** इति रूपं सिध्यति। एवम् अग्रेऽपि। अत्र आत्मनेपदे रूपाणां प्रक्रियायै सुधातुरूपाणि द्रष्टुम् शक्यानि।

तथा च परस्मैपदे रूपाणि - **रुन्ध्यात्, रुन्ध्याताम्, रुन्ध्युः। रुन्ध्याः, रुन्ध्यातम्, रुन्ध्यात। रुन्ध्याम्, रुन्ध्याव, रुन्ध्याम।**

आत्मनेपदे च रूपाणि – **रुन्धीत, रुन्धीयाताम्, रुन्धीरन्। रुन्धीथाः, रुन्धीयाथाम्, रुन्धीध्वम्। रुन्धीय, रुन्धीवहि, रुन्धीमहि।**

**आशीर्लिङः** लिङाशिषि इत्यनेन आर्धधातुकत्वात् श्नम् न भवति। अपि च लिङः स-लोपोऽनन्त्यस्य इत्यपि न प्रवर्तते। तथा च परस्मैपदे रूपाणि - **रुध्यात्, रुध्यास्ताम्, रुध्यासुः। रुध्याः, रुध्यास्तम्, रुध्यास्त। रुध्यासम्, रुध्यास्व, रुध्यास्म।**



## स्वादितः रुधादिपर्यन्तम्- सु तुद् रुध् धातवः

आत्मनेपदस्थले प्रथमपुरुषैकवचनविवक्षायाम् तप्रत्यये लिङः सीयुट् इति सीयुडागमो भवति। ततः सुट्तिथोः इति सुडागमो भवति। ततः रुध् सीय् स् त इति जायते। यदागमपरिभाषया अत्र सीय् स् त इति समुदायः तिङ्-प्रत्ययः। लिङाशिषि इति सूत्रेण लिङादेशस्य तिङः आर्धधातुकसंज्ञा भवति। अतः सीय् स् त इति समुदायस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इति तन्निषेधः। ततः लोपो व्योर्वलि इति सीयुटः यकारलोपे रुध् सी स् त इति जाते आदेशप्रत्यययोः इति सीयुटः सकारस्य षत्वे तकारस्य ष्टुत्वे टकारे सीयुटः सकारस्य खर्त्वात् तस्मिन् परे खरि च इत्यनेन रुधः धकारस्य तकारे **रुत्सीष्ट** इति रूपं भवति। एवम् अन्यत्रापि स्वयं बोद्ध्यम्।

तथा हि आत्मनेपदे रूपाणि - **रुत्सीष्ट, रुत्सीयास्ताम्, रुत्सीरन्। रुत्सीष्ठाः, रुत्सीयास्थाम्, रुत्सीध्वम्। रुत्सीय, रुत्सीवहि, रुत्सीमहि।**

**लुङि** परस्मैपदस्थले अटि तिपि श्नमपवादे च्लौ च्लेः सिच् इति सिचि प्राप्ते तं प्रबाध्य इरितो वा इत्यनेन च्लेः स्थाने विकल्पेन **अङादेशे** अ रुध् अ ति इति जाते तिपः इकारस्य लोपे **अरुधत्** इति रूपं भवति। अत्र ङित्त्वात् न लघूपधगुणः। किञ्च अङः वलादित्वाभावात् न इडागमः। अपि च अपृक्ततकारस्य ईडागमोऽपि न सिजभावात्। अग्रे तसादौ न कोऽपि विशेषः। आत्मनेपदस्थले तु **इरितो वा** इति न प्रवर्तते तस्य परस्मैपदस्थले एव विधानात्।

तथा च परस्मैपदे अङादेशे रूपाणि - **अरुधत् अरुधताम्, अरुधन्। अरुधः, अरुधतम्, अरुधत। अरुधम्, अरुधाव, अरुधाम।**

**अङभावपक्षे** च्लेः स्थाने सिचि वदव्रजहलन्तस्याचः इत्यनेन वृद्धौ धकारस्य चर्त्वे - **अरौत्सीत्, अरौद्धाम्, अरौत्सुः। अरौत्सीः, अरौद्धम्, अरौद्ध। अरौत्सम्, अरौत्स्व, अरौत्स्म।** अत्र सिचः आर्धधातुकत्वात् स्वयम् वलादित्वात् च आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधः।

आत्मनेपदस्थले लिङ्सिचावात्मनेपदेषु इत्यनेन सिचः कित्त्वात् न लघूपधगुणः। प्रथमपुरुषैकवचने तप्रत्यये प्रक्रियया अ रुध् स् त इति जाते झलो झलि इति सकारलोपः। ततः तकारस्य धकारे अ रुध् ध इति जाते पूर्वधकारस्य जश्त्वे दकारे **अरुद्ध** इति रूपम् सिध्यति। एवम् अन्यत्रापि विद्यार्थिना स्वयम् ऊह्यम्। तथा च आत्मनेपदे रूपाणि - **अरुद्ध, अरुत्साताम्, अरुत्सत। अरुद्धाः, अरुत्साथाम्, अरुद्ध्वम्। अरुत्सि, अरुत्स्वहि, अरुत्स्महि।**

**लृङि** अटि तिपि श्नमपवादे स्यप्रत्यये स्यस्य आर्धधातुकत्वात् पुगन्तलघूपधस्य च इत्यनेन गुणे ओकारे धकारस्य चर्त्वे तकारे तिपः इकारलोपे **अरोत्स्यत्** इति रूपं भवति। लुङि श्नम्प्रत्ययापवादः स्यप्रत्ययो भवति। तस्य च आर्धधातुकत्वात् स्वयम् वलादित्वात् च आर्धधातुकस्येड्वलादेः इति प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधः। अत्र उभयविधस्थलेऽपि न तथा विशेषः।

तथा च परस्मैपदे रूपाणि - **अरोत्स्यत्, अरोत्स्यताम्, अरोत्स्यन्। अरोत्स्यः, अरोत्स्यतम्, अरोत्स्यत। अरोत्स्यम्, अरोत्स्याव, अरोत्स्याम।**



आत्मनेपदे रूपाणि च – **अरोत्स्यत, अरोत्स्येताम्, अरोत्स्यन्त। अरोत्स्यथाः, अरोत्स्येथाम्, अरोत्स्यध्वम्। अरोत्स्ये, अरोत्स्यावहि, अरोत्स्यामहि।**

।।इति रुधादिगणः।।



## पाठगतप्रश्नाः-३

२१. रुधादिगणीयधातुभ्यः कः विकरणप्रत्ययो विधीयते।

२२. दश्च इति सूत्रस्य कोऽर्थः।

२३. रुध्-धातोः श्नप्रत्ययविधायकसूत्रं किम्।

२४. रुध्-धातोः कोऽर्थः।

२५. रुणद्धि इत्यत्र णत्वं केन।

२६. अरुधत् इत्यत्र च्लेः स्थाने अङ् चङ् इत्यनयोः कः आदेशो भवति।

२७. रुध्-धातोः परस्मैपदे लङि सिपि कति रूपाणि।

२८. श्नमः मित्करणेन किं भवति।

२९. रुध्धातोः परस्मैपदे लुङि तिपि कति रूपाणि।

३०. श्नसोरल्लोपः इत्यस्य कोऽर्थः।



## पाठसारः

अस्मिन् पाठे स्वादिगणः, तुदादिगणः, रुधादिगणः इति गणत्रयस्य आलोचना विहिता। तत्रादौ सु-धातोः विषये आलोचनं विहितम्। तत्रापि आदौ सु-धातोर्विषये स्वादिभ्यः श्नुः इति विकरणप्रत्ययविधायकं सूत्रमालोचितम्। ततः हुश्नुवोः सार्वधातुके, लोपश्चास्यान्यतरस्यां म्वोः, उतश्च प्रत्ययादसंयोगपूर्वात् इत्यादीनि सूत्राणि व्याख्यातानि। अनन्तरम् सुधातोः लुङि तिपि असावीत् इति रूपसाधनकाले स्तुसुधूञ्भ्यः परस्मैपदेषु इति सूत्रं व्याख्यातम्। ततः तुद्-धातोः विषये आलोचनं कृतम्। तत्र तुद्-धातोः विषये तुदादिभ्यः शः इति शविकरणविधायकसूत्रस्य व्याख्यानं विहितम्। ततः लिङ्सिचावात्मनेपदेषु इति सूत्रं व्याख्यातम्। तेन तुत्सीष्ट इति रूपं सिध्यति। ततः रुध्धातोः आलोचना कृता। तत्र च आदौ रुधादिभ्यः श्नम् इति श्नम् - विकरणविधायकसूत्रस्य व्याख्या कृता। ततः झषस्तथोर्धोऽधः इति सूत्रम् व्याख्यातम्। सार्वधातुके क्ङिति श्नस्य अकारलोपविधायकं श्नसोरल्लोपः इति सूत्रं व्याख्यातम्। अग्रे रुध्धातोः लङि सिपि विशेषं प्रदर्शयितुं दश्च इति सूत्रस्य व्याख्यानं विहितम्।





तेन् अरुणः-अरुणत्-अरुणद् इति रूपत्रयं सिध्यति। पाठेऽस्मिन् न समेषां रूपाणां ससूत्रं प्रक्रियाः प्रदर्शिताः, ताः स्वयं साध्याः। किञ्च अस्मिन् तत्तद्गणीयः प्रथमः धातुरेव यथासम्भवं सविस्तरं व्याख्यातोऽस्ति। तेन तत्तद्गणीयानाम् अन्येषामपि धातूनाम् रूपसिद्धिं कर्तुम् प्रभवेत्। भवन्तः दृष्टवन्तः कस्माचित् धातोः शप्रत्ययः, कस्माच्चित् वा श्नुप्रत्ययः, कस्माच्चिद्वा श्नम्प्रत्ययो भवति। इमे सर्वेऽपि प्रत्ययाः अपितो भवन्ति। शितोऽपि सन्ति। तस्मात् सार्वधातुकमपित् इत्यनेन एषां ङिद्वद्भावः भवति। अस्य किं फलमिति तु पूर्वम् उक्तमेवास्ति।



## पाठान्तप्रश्नाः

१. स्तुसुधूञ्भ्यः परस्मैपदेषु इति सूत्रं सोदाहरणं व्याख्यात।

२. हुश्नुवोः सार्वधातुके इति सूत्रं सोदाहरणं व्याख्यात।

३. लोपश्चास्यान्यतरस्यां म्वोः इति सूत्रं सोदाहरणं व्याख्यात।

४. उतश्च प्रत्ययादसंयोगपूर्वात् इति सूत्रं सोदाहरणं व्याख्यात।

५. तुदति इति धातुरूपस्य प्रक्रिया लेख्या।

६. तुत्सीष्ट इति धातुरूपस्य प्रक्रिया लेख्या।

७. अतौत्ताम् इति धातुरूपस्य प्रक्रिया लेख्या।

८. तुद्याः इति धातुरूपस्य प्रक्रिया लेख्या।

९. लिङ्सिचावात्मनेपदेषु इति सूत्रं सोदाहरणं व्याख्यात।

१०. श्नसोरल्लोपः इति सूत्रं सोदाहरणं व्याख्यात।

११. सुनोति इति धातुरूपस्य प्रक्रिया लेख्या।

१२. अतौत्सीत् तुत्सीष्ट इति धातुरूपस्य प्रक्रिया लेख्या।

१३. सुन्वन्ति इति धातुरूपस्य प्रक्रिया लेख्या।

१४. सुधातोः परस्मैपदे लिटि थलि कति रूपाणि तेषां सिद्धिः कार्या।

१५. सुन्वः, सुनुवः इत्यनयोः रूपसिद्धिः कार्या।

१६. असोढ्वम् इति धातुरूपस्य सिद्धिः कार्या।

१७. रुणद्धि इति धातुरूपस्य प्रक्रिया लेख्या।

१८. रुध्-धातोः लङि सिपि कति रूपाणि भवन्ति तेषां प्रक्रियाः लेख्याः।

१९. रुध्-धातोः लुङि तिपि कति रूपाणि भवन्ति तेषां प्रक्रियाः लेख्याः।

२०. रुधादिभ्यः श्नम् इति योगम् सोदाहरणं व्याख्यात।





## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि- १**

१. श्नु इति विकरणप्रत्ययः।

२. सिचः इडागमं विदधाति।

३. अभिषवः।

४. स्वादिभ्यः श्नुः।

५. असावीत्।

६. सुन्महे/सुनुमहे।

७. सुषविथ/सुषोथ।

८. तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञा यथा स्यात्।

९. आशीर्लिङः आर्धधातुकत्वात्।

१०. अकृत्सार्वधातुकयोर्दीर्घः इत्यनेन।

**उत्तराणि- २**

११. श इति विकरणप्रत्ययः।

१२. इक्समीपाद्धलः परौ झलादिलिङात्मनेपदपरः सिच्चेत्येतौ कितौ स्तः।

१३. तुदादिभ्यः शः।

१४. व्यथनम्।

१५. अतौत्सीत्।

१६. तुत्सीष्ठाः।

१७. तुतुदिध्वे।

१८. तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञाविधानम्।

१९. तुत्सीष्ट।

२०. शप्रत्ययस्य अपित्त्वात् सार्वधातुकमपित् इत्यनेन ङित्त्वात् क्ङिति च इति गुणनिषेधः।

**उत्तराणि- ३**

२१. श्नम्-विकरणप्रत्ययः।

२२. धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा।

२३. रुधादिभ्यः श्नम्।

२४. आवरणम्।





२५. अट्कुप्वाङ्नुम्व्यवायेऽपि।

२६. अङ्।

२७. अरुणः/अरुणत्/अरुणद् इति रूपत्रयम्।

२८. मित्त्वात् मिदचोऽन्त्यात्परः इति परिभाषया अन्त्याद् अचः परो भवति

२९. (अङि) अरुधत् - (सिचि) अरौत्सीत्।

३०. श्नस्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति।

## ॥ इति द्वाविंशः पाठः ॥



# २३

# तनादितः चुरादिपर्यन्तम्-तन् कृ क्री चुर् धातवः

## प्रस्तावना

भवन्तः इतः पूर्वस्मिन् पाठे स्वादिगणः, तुदादिगणः, रुधादिगणः च इति गणत्रयस्य परिचयं प्राप्तवन्तः। अधुना तनादिगणः, क्र्यादिगणः, चुरादिगणः चेति अन्तिमं गणत्रयं ज्ञास्यति। अत्रापि प्रतिगणं विकरणभेदः अस्ति, विकरणभेदात् च रूपभेदो भवति। यथा तनादिगणीयधातुभ्यः उप्रत्ययः, क्र्यादिगणीयधातुभ्यः श्नाप्रत्ययः। विकरणभेदात् रूपभेदः, तद्यथा तन्-धातोः उप्रत्यये तनोति इति रूपं, क्री-धातोः श्नाप्रत्यये क्रीणाति इति रूपम्। चुरादिगणस्तु सर्वेभ्यो विलक्षणः। अन्येषु गणेषु भवन्तः दृष्टवन्तः यत् धातुप्रत्यययोः मध्ये शबादिविकरणाः भवन्ति। चुरादिगणीयप्रकरणे तु न मूलधातोः कोऽपि विकरणो भवति। धातोः परे स्वार्थे णिच्प्रत्यये कृते ण्यन्तस्य सनाद्यन्ता धातवः इत्यनेन धातुसंज्ञायां ततः तिबादिप्रत्ययो भवति, अनन्तरम् शप्-विकरणः भवति इति चुरादिगणीयधातोः वैशिष्ट्यम्। अत्र पाठे न सर्वाणि रूपाणि ससूत्रं प्रदर्शयिष्यन्ते। अस्मिन् पाठे तनादिगणीयस्य तन्धातोः कृधातोः च आलोचनं विधास्यते। ततः क्र्यादिगणीयस्य क्रीधातोः, चुरादिगणीयस्य चुर्-धातोः च आलोचना भविष्यति। धात्वन्तरस्य प्रक्रियाः स्वयं साधनीयाः।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- प्रतिगणं कीदृशं विकरणं भवति तज्ज्ञास्यति।
- विकरणविधायकसूत्रार्थं ज्ञास्यति।
- तत्र तत्र व्याख्यातानाम् विशेषसूत्राणाम् परिचयम् लप्स्यते।
- तन्धातोः कृधातोश्च रूपाणि साधयितुं शक्नुयात्।
- क्री-धातुरूपाणि साधयितुं पारयेत्।
- चुर्-धातुरूपाणि साधयितुम् अर्हेत्।
- चुरादिगणीयधातोः वैशिष्ट्यम् ज्ञास्यति।
- एतज्ज्ञात्वा च अन्यानि अपि धातुरूपाणि साधयितुं प्रभवेत्।



➢ तत्र तत्र प्रदर्शितानि वैकल्पिकरूपाणि अपि ज्ञास्यति।

## अथ तनादिगणः

तनुँ विस्तारे इति स्वरितेतः उभयपदिनः सेटः तनादिगणीयात् धातोः कर्तरि **लटि** प्रथमैकवचनविवक्षायां परस्मैपदसंज्ञके तिपि तन् ति इति जाते तिपः सार्वधातुकत्वात् कर्तरि शप् इत्यनेन शपि प्राप्ते सूत्रमिदमारभ्यते -

### [२३.१] तनादिकृञ्भ्य उः॥ (३.१.७९)

**सूत्रार्थः** - तनादिधातुभ्यः उ-प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। तनादिकृञ्भ्यः (५/३), उः (१/१) इति सूत्रगतपदच्छेदः। कर्तरि शप् इत्यतः कर्तरि (७/१) इति पदं, सार्वधातुके यक् इत्यतः सार्वधातुके (७/१) इति पदं च अनुवर्तते। प्रत्ययः (१/१), परः (१/१) इत्युभयमपि अधिक्रियते। धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ् इति सूत्रात् धातोः इति पदम् अनुवर्तते। पदयोजना - कर्तरि सार्वधातुके धातोः उः प्रत्ययः परः इति। तनादिगणः दशसु धातुगणेषु अष्टमः। तन् आदिः येषाम् (धातूनाम्) ते तनादयः (धातवः) इति तद्गुणसंविज्ञानबहुव्रीहिसमासः, तेभ्यः तनादिभ्यः। तनादयश्च कृञ् च तेषाम् इतरेतरयोगद्वन्द्वः, तनादिकृञः, तेभ्यः तनादिकृञ्भ्यः। सूत्रार्थस्तावत् - कर्त्रर्थके सार्वधातुकसंज्ञकप्रत्यये परतः तनादिगणपठितधातुभ्यः कृधातोश्च उप्रत्ययः परो भवति इति। सूत्रेणानेन उप्रत्ययो विधीयते। उ इति विकरणस्य शित्त्वाभावात् न सार्वधातुकसंज्ञा। किन्तु आर्धधातुकं शेषः इति आर्धधातुकसंज्ञा।

**उदाहरणम्** - पूर्वोक्तप्रकारेण तन् ति इति जाते प्राप्तं शपं प्रबाध्य प्रकृतसूत्रेण उप्रत्ययो भवति यतो हि तिप् सार्वधातुकप्रत्ययः तन्धातोः परः अस्ति। ततः तन् उ ति इति जाते तिप् सार्वधातुकप्रत्ययोऽस्ति इति कृत्वा तस्मिन् परतः सार्वधातुकार्धधातुकयोः इत्यनेन उकारस्य गुणे ओकारे तन् ओ ति इति जाते वर्णसम्मेलने **तनोति** इति रूपं भवति। एवमेव प्रक्रिया सिपि मिपि च ज्ञेया।

अपित्प्रत्ययेषु तसादिषु सार्वधातुकमपित् इत्यनेन ङिद्वद्भावे क्ङिति च इत्यनेन गुणनिषेधः। तेन तसादौ न गुणः। बहुवचने झिप्रत्यये प्रक्रियया तनु अन्ति इति जाते इको यणचि इत्यनेन इकः स्थाने यणि वकारादेशे **तन्वन्ति** इति रूपं भवति।

**अत्र अवधेयम्** - तन्-धातोः स्वरितेत्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन क्रियाफलस्य कर्तृगामित्वे तनः विहितस्य लस्य स्थाने आत्मनेपदप्रत्ययो भवति। क्रियाफलस्य परगामित्वे तु शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदप्रत्ययो भवति।

वसि मसि वहौ महिङि च लोपश्चास्यान्यतरस्यां म्वोः इत्यनेन उकारस्य विकल्पेन लोपो भवति। तेन – तन्वः/तनुवः, तन्मः/तनुमः, तन्वहे/तनुवहे, तन्महे/तनुमहे इत्येवं रूपाणि सिध्यन्ति। सिपि



उतश्च प्रत्ययादसंयोगपूर्वात् इत्यनेन हेः लोपो भवति। आत्मनेपदस्थले तादीनाम् समेषाम् अपित्त्वात् सर्वत्रैव गुणनिषेधः।

तथा हि लटि परस्मैपदे रूपाणि - **तनोति, तनुतः, तन्वन्ति। तनोषि, तनुथः, तनुथ। तनोमि, तन्वः/तनुवः, तन्मः/तनुमः।** आत्मनेपदे रूपाणि च - **तनुते, तन्वाते, तन्वते। तनुषे, तन्वाथे, तनुध्वे। तन्वे, तन्वहे/तनुवहे, तन्महे/तनुमहे।**

**लिटि** तनः परे तिपि णलि द्वित्वे हलादिशेषे ततन् अ इति जाते अत उपधायाः इत्यनेन उपधावृद्धौ ततान् अ इति जाते वर्णसम्मेलने **ततान** इति रूपं सिध्यति। एवमेव मिपि ऊह्यम्। तसि झौ थसि थे वसि मसि च असंयोगाल्लिट् कित् इत्यनेन कित्त्वे अत एकहल्मध्येऽनादेशादेर्लिटि इत्यनेन अभ्याससंज्ञकस्य प्रथमतकारस्य लोपे तनः तकारोत्तरवर्तिनः अकारस्य स्थाने एकारः भवति। सिपि सिपः स्थाने विधीयमानः थल् कित् न भवति इति हेतोः थलि च सेटि इत्यनेन एत्त्वाभ्यासलोपौ भवतः। आत्मनेपदस्थले सर्वत्रैव एत्वाभ्यासलोपौ भवतः। सिपि वसि मसि च इति परस्मैपदस्थले, थासि ध्वमि वहौ महिङि च इति आत्मनेपदस्थले च आर्धधातुकस्येड्वलादेः इति इडागमः। आत्मनेपदस्थले तप्रत्ययं झप्रत्ययं थास्प्रत्ययं च विहाय अन्यत्र टेः एत्वम् बोध्यम्।

तथा च लिटि परस्मैपदे रूपाणि - **ततान, तेनतुः, तेनुः। तेनिथ, तेनथुः, तेन। ततान/ततन, तेनिव, तेनिम।**

आत्मनेपदे रूपाणि च - **तेने, तेनाते, तेनिरे। तेनिषे, तेनाथे, तेनिध्वे। तेने, तेनिवहे, तेनिमहे।**

**लुटि** तिपि उप्रत्ययापवादभूते तासि तासः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इति इडागमे डादेशे डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपे **तनिता** इति रूपम्। एवम् अग्रे बोद्धव्यम्। लुटि परस्मैपदस्थले आत्मनेपदस्थले च सर्वत्रैव इडागमः भवति। उभयविधस्थलेऽपि प्रथमपुरुषे समानम् रूपम्। लुटि आत्मनेपदस्थले थासं विहाय अन्यत्र टेः एत्वम् भवति।

तथा हि परस्मैपदे रूपाणि - **तनिता, तनितारौ, तनितारः। तनितासि, तनितास्थः, तनितास्थ। तनितास्मि, तनितास्वः, तनितास्मः।**

आत्मनेपदे रूपाणि च - **तनिता, तनितारौ, तनितारः। तनितासे, तनितासाथे, तनिताध्वे। तनिताहे, तनितास्वहे, तनितास्महे।**

**लृटि** प्रथमपुरुषैकवचने तिपि उप्रत्ययापवादभूते स्यप्रत्यये स्यस्य आर्धधातुकत्वात् इडागमे आदेशप्रत्यययोः इत्यनेन प्रत्ययावयवस्य सकारस्य षत्वे **तनिष्यति** इति रूपं भवति, तप्रत्यये **तनिष्यते** इति रूपम्। लृटि अपि आत्मनेपदे थास्प्रत्ययं विहाय अन्यत्र टेः एत्वम् भवति। अपि च लृटि सर्वत्रैव इडागमः भवति। आत्मनेपदे रूपाणाम् सिद्धये एध्-धातोः प्रक्रिया द्रष्टुम् शक्या।

तथा च लृटि परस्मैपदे रूपाणि - **तनिष्यति, तनिष्यतः, तनिष्यन्ति। तनिष्यसि, तनिष्यथः, तनिष्यथ। तनिष्यामि, तनिष्यावः, तनिष्यामः।**





आत्मनेपदे रूपाणि च - **तनिष्यते, तनिष्येते, तनिष्यन्ते। तनिष्यसे, तनिष्येथे, तनिष्यध्वे। तनिष्ये, तनिष्यावहे, तनिष्यामहे।**

**लोटि** प्रथमपुरुषैकवचने तिपि उप्रत्यये तिपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन उकारस्य गुणे ओकारे तिपः इकारस्य उकारे तनोतु इति रूपं भवति, तातङि तनुतात् इत्यपि। अग्रे रूपाणि स्वयं साध्यन्ताम्।

तथा च परस्मैपदे रूपाणि - **तनोतु/तनुतात्, तनुताम्, तन्वन्तु। तनु/तनुतात्, तनुतम्, तनुत। तनवानि, तनवाव, तनवाम।**

आत्मनेपदे रूपाणाम् सिद्ध्ये स्वादिगणीयसु-धातुरूपाणि द्रष्टुम् शक्यानि। तथा हि रूपाणि - **तनुताम्, तन्वाताम्, तन्वताम्। तनुष्व, तन्वाथाम्, तनुध्वम्। तनवै, तनवावहै, तनवामहै।**

**लङि** परस्मैपदस्थले आत्मनेपदस्थले च स्वादिगणीयधातुरूपवत् प्रक्रिया ज्ञेया। तथा च परस्मैपदे रूपाणि - **अतनोत्, अतनुताम्, अतन्वन्। अतनोः, अतनुतम्, अतनुत। अतनवम्, अतन्व/अतनुव, अतन्म/अतनुम।** आत्मनेपदे रूपाणि च – **अतनुत, अतन्वाताम्, अतन्वत। अतनुथाः, अतन्वाथाम्, अतनुध्वम्। अतन्वि, अतन्वहि/अतनुवहि, अतन्महि/अतनुमहि।**

**विधिलिङि** अपि परस्मैपदस्थले आत्मनेपदस्थले च स्वादिगणीयसुधातुरूपवत् प्रक्रिया ज्ञेया। तथा हि परस्मैपदे रूपाणि - **तनुयात्, तनुयाताम्, तनुयुः। तनुयाः, तनुयातम्, तनुयात। तनुयाम्, तनुयाव, तनुयाम।** आत्मनेपदे रूपाणि च - **तन्वीत, तन्वीयाताम्, तन्वीरन्। तन्वीथाः, तन्वीयाथाम्, तन्वीध्वम्। तन्वीय, तन्वीवहि, तन्वीमहि।**

**आशीर्लिङि** तिपि लिङाशिषि इत्यनेन तिपः आर्धधातुकसंज्ञायां तनादिकृञ्भ्य उः इत्यनेन उप्रत्ययस्याप्राप्तिः। ततः यासुटि अनुबन्धलोपे सुट्तिथोः इत्यनेन सुडागमे तिपः इकारस्य लोपे तन् यास् स् त् इति जाते स्कोः संयोगाद्योरन्ते च इत्यनेन सकारद्वयस्यापि लोपे **तन्यात्** इति रूपं भवति। अग्रे प्रक्रियाः स्वयं साध्याः। तथा च परस्मैपदे रूपाणि - **तन्यात्, तन्यास्ताम्, तन्यासुः। तन्याः, तन्यास्तम्,तन्यास्त। तन्यासम्, तन्यास्व, तन्यास्म।**

आत्मनेपदस्थले एध्-धातुवत् रूपाणि भवन्ति। अत्र केवलम् प्रथमपुरुषैकवचने रूपम् प्रदर्श्यते। तद्यथा - तन्-धातोः आशीर्लिङि तप्रत्यये सीयुटि सुटि तन् सीय् स् त इति स्थितिः भवति। यदागमपरिभाषया अत्र सीय्+स्+त इति समुदायः तिङ्-प्रत्ययः। लिङाशिषि इति सूत्रेण लिङादेशस्य तिङः आर्धधातुकसंज्ञा भवति। अतः सीय्+स्+त इति समुदायस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे आद्यावयवे तन् इ सीय् स् त इति स्थितिः जायते। तदा लोपो व्योर्वलि इत्यनेन सीयुटः यकारस्य लोपे तनि सी स् त इति स्थिते सीयुटः सकारस्य तथा सुटः सकारस्य यथाक्रमं इकाररूपात् ईकाररूपाच्च इणः परत्वात् अपदान्तत्वात् प्रत्ययावयवत्वात् आदेशप्रत्यययोः इति सूत्रेण मूर्धन्यादेशे षकारे तनिषीष् त इति स्थिते ष्टुना ष्टुः इत्यनेन तकारस्य ष्टुत्वे टकारे **तनिषीष्ट** इति रूपं सिध्यति। आतामादौ रूपाणि स्वयम् बोद्धव्यानि।



तथा च आत्मनेपदे आशीर्लिङि रूपाणि - **तनिषीष्ट, तनिषीयास्ताम्, तनिषीरन्। तनिषीष्ठाः, तनिषीयास्थाम्, तनिषीध्वम्। तनिषीय, तनिषीवहि, तनिषीमहि।**

**लुङि** प्रथमपुरुषैकवचने अटि तिपि इकारलोपे प्राप्तम् उप्रत्ययम् बाधित्वा च्लौ सिचि सिचः आर्धधातुकं शेषः इत्यनेन आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन सिचः इडागमे अ तन् इ स् त् इति जाते अस्तिसिचोऽपृक्ते इत्यनेन ईडागमे अ तन् इ स् ई त् इति जाते वदव्रजहलन्तस्याचः इति हलन्तलक्षणायाम् वृद्धौ प्राप्तायाम् नेटि इति तन्निषेधे अतो हलादेर्लघोः इत्यनेन विकल्पेन तनः अकारस्य वृद्धौ आकारे इट ईटि इत्यनेन सकारस्य लोपे सवर्णदीर्घे वर्णसम्मेलने **अतानीत्** इति रूपम्। वृद्ध्यभावपक्षे **अतनीत्** इत्यपि रूपम् इति साकल्येन रूपद्वयम् भवति।

तथा च वृद्धिपक्षे - **अतानीत्, अतानिष्टाम्, अतानिषुः। अतानीः, अतानिष्टम्, अतानिष्ट। अतानिषम्, अतानिष्व, अतानिष्म।**

वृद्ध्यभावपक्षे - **अतनीत्, अतनिष्टाम्, अतनिषुः। अतनीः, अतनिष्टम्, अतनिष्ट। अतनिषम्, अतनिष्व, अतनिष्म।** इति एतानि रूपाणि भवन्ति।

तनः **लुङि** अटि आत्मनेपदसंज्ञकतप्रत्यये प्राप्तम् उप्रत्ययम् बाधित्वा च्लौ सिचि अ तन् स त इति जाते सिचः सकारस्य विकल्पेन लुग्विधातुम् सूत्रमिदमारभ्यते -

## [२३.२] तनादिभ्यस्तथासोः॥ (२.४.७९)

**सूत्रार्थः** - तनादेः सिचो वा लुक्स्यात्तथासोः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। तनादिभ्यः (५/३), तथासोः (७/२) इति सूत्रगतपदच्छेदः। तन् आदिः येषां ते तनादयः इति बहुव्रीहिसमासः, तेभ्यः तनादिभ्यः। तश्च थाश्च तयोः इतरेतरयोगद्वन्द्वे तथासौ, तयोः तथासोः। गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु इत्यतः सिचः (६/१) इत्यस्य, ण्यक्षत्रियार्षञितो यूनि लुगणिञोः इत्यतः लुक् (१/१) इत्यस्य, विभाषा घ्राधेट्शाच्छासः इत्यतः विभाषा इत्यस्य च अनुवृत्तिर्भवति। सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् इति परिभाषया प्रथमपुरुषैकवचनस्य तप्रत्ययस्यैव अत्र सूत्रे ग्रहणं न तु तस्थस्थमिपां तान्तन्तामः इति सूत्रेण विधीयमानस्य तादेशस्य ग्रहणम्। एवञ्च सूत्रार्थस्तावत् - तनादिगणपठितधातुभ्यः परस्य सिचः विकल्पेन लुक् भवति त-थासोः प्रत्यययोः परतः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण अ तन् स त इति स्थिते प्रकृतसूत्रेण सिचः सकारस्य विकल्पेन लुक् भवति। यतो हि अत्र तप्रत्ययः परोऽस्ति। ततः अतन् त इति जाते अग्रिमम् सूत्रमारभ्यते -

## [२३.३] अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति॥ (६.४.३७)

**सूत्रार्थः** - अनुनासिकान्तानामेषां वनतेश्च लोपः स्यात् झलादौ किति ङिति च परे।





**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदचतुष्टयमस्ति।अनुदात्तोपदेशवनतितनोत्यादीनाम् (६/३), अनुनासिक (६/३), लोपः (१/१), झलि (७/१), क्ङिति (७/१) इति सूत्रगतपदच्छेदः। अनुनासिक इति लुप्तविभक्तिको निर्देशः। अनुदात्त उपदेशे येषां ते अनुदात्तोपदेशाः इति बहुव्रीहिसमासः। तनोतिः आदिः येषां ते तनोत्यादयः। अनुदात्तोपदेशाश्च वनतिश्च तनोत्यादयश्च तेषाम् अनुदात्तोपदेशवनतितनोत्यादीनाम्। अनुनासिक इति लुप्तषष्ठ्यन्तं पदम् अनुदात्तोपदेशानाम् इत्यस्य तथा तनोत्यादीनाम् इत्यस्य विशेषणमस्ति अतः तदन्तविधौ अनुनासिकान्तानाम् इत्यर्थलाभः। क् च ङ् च क्ङौ, तौ इतौ यस्य स क्ङित् तस्मिन् क्ङिति द्वन्द्वगर्भबहुव्रीहिसमासः। झलि इति पदं क्ङिति इत्यस्य विशेषणमस्ति। अतः यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ झलादौ क्ङिति इत्यर्थो लभ्यते। एवञ्च सूत्रार्थस्तावत् - अनुनासिकान्तानाम् अनुदात्तोपदेशधातूनाम्, अनुनासिककान्तानां तनोत्यादिधातूनां, वन्धातोः च लोपो भवति झलादौ क्ङिति च परे। अयञ्च लोपः अलोऽन्त्यस्य इति परिभाषया अन्त्यस्यैव वर्णस्य अर्थात् अनुनासिकवर्णस्य भवति।

**उदाहरणम्** - यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः। तनु, क्षणु, क्षिणु, ऋणु, तृणु, घृणु, वनु, मनु-तनोत्यादयः। एवञ्च साकल्येन पञ्चदशानां धातूनाम् उदाहरणानि अत्र प्रदर्श्यन्ते -

१. यम् (रोकना) - यतः (क्त), यतवान् (क्तवतु), यत्वा (क्त्वा),

२. रम् (खेलना) - रतः (क्त), रतवान् (क्तवतु), रत्वा (क्त्वा),

३. नम् (झुकना) - नतः, नत्वा, नतवान्।

४. गम् (जाना) - गतः, गत्वा, गतवान्।

५. हन् (मारना) - हतः, हत्वा, हतवान्।

६. मन्य (मानना-जानना) - मतः, मत्वा, मतवान्।

७. वन् (शब्द करना, सेवा करना, हिंसा करना) - वतिः (क्तिन्)।

८. तन् (विस्तार करना) - ततः, तत्वा, ततवान्। अतत, अतथाः।

९. क्षणु (हिंसा करना) - क्षतः, क्षत्वा, क्षतवान्। अक्षत, अक्षथाः।

१०. क्षिणु (हिंसा करना) - क्षितः, क्षित्वा, क्षितवान्। अक्षित, अक्षिथाः।

११. ऋणु (जाना) - ऋतः, ऋत्वा, ऋतवान्। आर्तः, आर्थाः।

१२. तृणु (खाना) - तृतः, तृत्वा, तृतवान्। अतृत, अतृथाः।

१३. घृणु (चमकना) - घृतः, घृत्वा, घृतवान्। अघृत, अघृथाः।

१४. वनु (मागना) - वतः, वत्वा, वतवान्। अवत, अवथाः।

१५. मन् (जानना) - मतः, मत्वा, मतवान्। अमत, अमथाः।

पूर्वोक्तप्रकारेण अतन् त इति जाते सार्वधातुकमपित् इत्यनेन तप्रत्ययस्य ङिद्वद्भावः। स च तप्रत्ययः झलादिरपि अस्ति। तस्मात् प्रकृतसूत्रेण नकारलोपो भवति। यतो हि तनः नकारात् परं यः



तप्रत्ययः स झलादिः ङित् अस्ति। ततः वर्णसम्मेलने **अतत** इति रूपं सिध्यति। सिचः **लुगभावपक्षे** इडागमे अ तन् इ स् त इति जाते सिचः सकारस्य षत्वे ष्टुना ष्टुः इति ष्टुत्वे तकारस्य टकारे **अतनिष्ट** इति रूपम् अपि भवति इति प्रथमपुरुषैकवचने रूपद्वयम् भवति। ध्वमि प्रक्रियया अ तन् इ स् ध्वम् इति जाते धि च इति योगेन सकारस्य लोपे अ तन् इ ध्वम् इति जाते अतन्+इ इति समुदायस्य ध्वमि परतः अङ्गसंज्ञाविज्ञानात् इणः षीध्वंलुङ्लिटां धोऽङ्गात् इति सूत्रेण धकारस्य ढत्वे अतनिढ्वम् इति रूपम्। सर्वत्रैव आदेशप्रत्यययोः इति षत्वम्। अन्यानि रूपाणि स्वयम् बोद्धव्यानि।

तथा च आत्मनेपदे रूपाणि- **अतत/अतनिष्ट, अतनिषाताम्, अतनिषत। अतथाः/अतनिष्ठाः, अतनिषाथाम्, अतनिढ्वम्। अतनिषि, अतनिष्वहि, अतनिष्महि।**

**लृङि** अटि तिपि उप्रत्ययापवादभूते स्यप्रत्यये स्यस्य आर्धधातुकत्वात् वलादित्वाच्च आर्धधातुकस्येड्वलादेः इति इडागमे सकारस्य षत्वे तिपः इकारस्य लोपे वर्णसम्मेलने **अतनिष्यत्** इति रूपम्। तप्रत्यये तु **अतनिष्यत** इति रूपम् सिध्यति। अत्र तथा विशेषो नास्ति।

तथा हि परस्मैपदे रूपाणि - **अतनिष्यत्, अतनिष्यताम्, अतनिष्यन्। अतनिष्यः, अतनिष्यतम्, अतनिष्यत। अतनिष्यम्, अतनिष्याव, अतनिष्याम।**

आत्मनेपदे च रूपाणि - **अतनिष्यत, अतनिष्येताम्, अतनिष्यन्त। अतनिष्यथाः, अतनिष्येथाम्, अतनिष्यध्वम्। अतनिष्ये, अतनिष्यावहि, अतनिष्यामहि।**

।।इति तनाददिगणे तन्-धातुः।।

## अथ कृधातुः

अधुना **कृधातुः** आलोच्यते।

कृ (डुकृञ् करणे) इति उभयपिदनः अनिटः सकर्मकात् तनादिगणीयात् धातोः कर्तरि **लटि** तिपि कृ ति इति जाते शपि प्राप्ते तं बाधित्वा तनादिकृञ्भ्य उः इति योगेन उप्रत्यये कृ उ ति इति जाते उप्रत्ययस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन ऋकारस्य गुणे अकारे उरण् रपरः इत्यनेन रपरत्वे कर् उ ति इति जायते। ततः तिपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन उकारस्य गुणे ओकारे वर्णसम्मेलने च करोति इति रूपं भवति। एवमेव सिपि मिपि च बोध्यम्।

तसि प्राप्तम् शपं बाधित्वा उप्रत्यये कृ उ तस् इति जाते ऋकारस्य गुणे अकारे रपरत्वे कर् उ तस् इति जाते तसः सार्वधातुकमपित् इति ङिद्वद्भावे उकारस्य गुणनिषेधो भवति। ततः अग्रे विशेषम् प्रदर्शयितुम् सूत्रमिदमारभ्यते -

### [२३.४] अत उत्सार्वधातुके॥ (६.४.११०)

**सूत्रार्थः** - उप्रत्ययान्तस्य कृञोऽकारस्य उः स्यात्, सार्वधातुके क्ङिति।





**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अतः (६/१), उत् (१/१), सार्वधातुके (७/१) इति सूत्रगतपदच्छेदः। नित्यं करोतेः इत्यतः करोतेः (५/१) इति पदमनुवर्तते। तस्य च षष्ठ्येकवचनान्ततया विपरिणामः। गमहनजनखनघसां लोपः क्ङित्यनङि इति सूत्रात् क्ङिति इति पदम् अनुवर्तते। उतश्च प्रत्ययादसंयोगपूर्वात् इति सूत्रतः उतः (५/१) इत्यस्य, प्रत्ययात् (५/१) इत्यस्य च अनुवृत्तिर्भवति। अनुवृत्तयोः तयोः षष्ठ्येकवचनान्ततया विपरिणामः। तदा करोतेः इत्यस्य विशेषणत्वात् तदन्तविधौ उप्रत्ययान्तस्य करोतेः इत्यर्थलाभः। क्ङिति इत्यस्य सार्वधातुके इत्यत्र अन्वयः। तेन सार्वधातुके किति, सार्वधातुके ङिति इत्यर्थलाभः। सूत्रार्थो हि उप्रत्ययान्तस्य कृधातोः अतः स्थाने उत् इत्यादेशो भवति सार्वधातुके किति ङिति च प्रत्यये परतः इति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण कर् उ तस् इति जाते तसः ङित्त्वात् सार्वधातुकत्वात् च अत उत्सार्वधातुके इति प्रकृतसूत्रेण ककारोत्तरवर्तिनः अकारस्य स्थाने उकारादेशे तसः सकारस्य रुत्वे रेफस्य च विसर्गे कृते **कुरुतः** इति रूपं सिध्यति।

झौ झेरन्तादेशे कृ इत्यस्य ऋकारस्य गुणे अकारे रपरत्वे कर् उ अन्ति इति जाते करः अकारस्य उकारे कुर् उ अन्ति इति जाते इको यणचि इत्यनेन प्रत्ययस्य उकारस्य यणि वकारादेशे कुर् व् अन्ति इति जायते। ततः हलि च इत्यनेन उपधादीर्घे प्राप्ते सूत्रमिदमारभ्यते -

## [२३.५] न भकुर्छुराम्॥ (८.२.७९)

**सूत्रार्थः** - भस्य कुर्छुरोरुपधाया न दीर्घः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। न (अव्ययम्), भ-कुर्-छुराम् (६/३) इति सूत्रगतपदच्छेदः। र्वोरुपधाया दीर्घ इकः इति सूत्रात् उपधायाः (६/१), दीर्घः (१/१) इत्यनयोः पदयोः अनुवृत्तिर्भवति। भं च कुर् च छुर् च भकुर्छुरः, तेषाम् भकुर्छुराम् इति इतरेतरयोगद्वन्द्वः। भ इति एका संज्ञा। सा च यचि भम् इत्यनेन विधीयते। सूत्रार्थस्तावत् - भसंज्ञकस्य उपधायाः, कुरः उपधायाः, छुरः च उपधायाः दीर्घो न भवति इति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण कुर् व् अन्ति इत्यत्र हलि च इति प्राप्तस्य उपधादीर्घस्य प्रकृतसूत्रेण निषेधः। ततः वर्णसम्मेलने **कुर्वन्ति** इति रूपं सिध्यति। एवम् अग्रे ऊह्यम्।

उत्तमपुरुषस्य द्विवचने वसि उप्रत्यये प्रक्रिया कुर् उ वस् इति जाते लोपश्चास्यान्यतरस्यां म्वोः इत्यनेन विकल्पेन प्रत्ययस्य उकारस्य लोपे प्राप्ते सूत्रमिदमारभ्यते -

## [२३.६] नित्यं करोतेः॥ (६.४.१०८)

**सूत्रार्थः** - करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। नित्यम् (२/१), करोतेः (५/१) इति सूत्रगतपदच्छेदः। नित्यम् इति क्रियाविशेषणम्। उतश्च प्रत्ययादसंयोगपूर्वात् इति सूत्रतः उतः (५/१) इत्यस्य, प्रत्ययात् (५/१) इत्यस्य च अनुवृत्तिर्भवति। अनुवृत्तयोः तयोः षष्ठ्येकवचनान्ततया



विपरिणामः। लोपश्चास्यान्यतरस्यां म्वोः इत्यतः म्वोः (७/२), लोपः (१/१) इत्यनयोः पदयोः अनुवृत्तिर्भवति। सूत्रार्थो हि कृधातोः परस्य प्रत्ययस्य उकारस्य नित्यं लोपो भवति मकारे अथवा वकारे परतः। सूत्रमिदं लोपश्चास्यान्यतरस्यां म्वोः इत्यस्य अपवादभूतम्।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण कुर् उ वस् इति जाते कृधातोः परम् उकारोऽस्ति, किञ्च वकारः तस्मात् उकारात् परोऽपि अस्ति। अतः प्रकृतसूत्रेण उकारस्य नित्यं लोपो भवति। तेन कुर् वस् इति जाते सकारस्य रुत्वे रेफस्य च विसर्गे **कुर्वः** इति रूपं सिध्यति। मसि अनया एव प्रक्रियया **कुर्मः** इति रूपं सिध्यति।

**अत्र अवधेयम्** - (डुकृञ्) कृ-धातोः ञित्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन क्रियाफलस्य कर्तृगामित्वे कृधातोः विहितस्य लस्य स्थाने आत्मनेपदप्रत्ययो भवति। क्रियाफलस्य परगामित्वे तु शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदप्रत्ययो भवति।

आत्मनेपदस्थले तु सर्वत्रैव ङिद्वद्भावात् न प्रत्ययस्य उकारस्य गुणः। किञ्च अत उत्सार्वधातुके इत्यनेन सर्वत्रैव अकारस्य उकारो भवति।

तथा च लटि परस्मैपदे रूपाणि - **करोति, कुरुतः, कुर्वन्ति। करोषि, कुरुथः, कुरुथ। करोमि, कुर्वः, कुर्मः।**

आत्मनेपदे च रूपाणि – **कुरुते, कुर्वाते, कुर्वते। कुरुषे, कुर्वाथे, कुरुध्वे। कुर्वे, कुर्वहे, कुर्महे।**

{सूत्रम्. **लोपश्चास्यान्यतरस्यां म्वोः** (६.४.१०७) = असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात्।}

**लिटि** प्रथमपुरुषैकवचनविवक्षायाम् तिपि कृ ति इति जाते परस्मैपदानां णलतुसुस्-थलथुस-णल्वमाः इति सूत्रेण तिपो सर्वादेशे णलि अनुबन्धलोपे कृ अ इति जाते लिटि धातोरनभ्यासस्य इति सूत्रेण अनभ्यासधात्ववयवस्य एकाचः कृ इत्यस्य द्वित्वे कृ कृ अ इति जाते द्विरुक्तस्य पूर्वभागस्य कृ इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायाम् उरत् इति सूत्रेण अभ्यासऋकारस्य अत्त्वे उरण् रपरः इति रपरत्वे च कर् कृ अ इति जाते हलादिः शेषः इति सूत्रेण आदेः हलः शेषे क कृ अ इति जाते कुहोश्चुः इति अभ्यासककारस्य चुत्वे चकारे च कृ अ इति जाते णलो णित्त्वात् अचो ञ्णिति इति सूत्रेण अजन्ताङ्गस्य कृञः ऋकारस्य वृद्धौ आकारे उरण् रपरः इति रपरत्वे च च कार् अ इति जाते वर्णसम्मेलने चकार इति रूपम् सिध्यति। थलि गुणः भवति। मिपि णलुत्तमो वा इति विकल्पेन मिबादेशस्य णलः णित्त्वं विधीयते तेन णित्त्वपक्षे अचो ञ्णिति इति वृद्धौ चकार इति रूपम्। णित्त्वाभावपक्षे सार्वधातुकार्धधातुकयोः इति गुणे चकर इति रूपम्। अतुसादौ तु असंयोगाल्लिट् कित् इत्यनेन किद्वद्भावे क्ङिति च इति गुणनिषेधः। तेन अतुसादौ अजादिप्रत्यये इको यणचि इति यण् भवति इत्यवधेयम्।

**आत्मनेपदे** रूपाणाम् प्रक्रियायै एध्धातोः लिटि रूपाणि द्रष्टव्यानि। तत्र सर्वेषाम् रूपाणाम् प्रक्रियाः प्रदर्शिताः। अत्र भवताम् बोधसौकर्याय केवलम् प्रथमपुरुषैकवचने रूपम् प्रदर्श्यते। तथा च प्रथमपुरुषैकवचनविवक्षायां त-प्रत्यये कृ त इति स्थिते लिटस्तझयोरेशिरेच् इति लिडादेशस्य त इत्यस्य स्थाने एश् इति सर्वादिशे अनुबन्धलोपे कृ ए इति जाते सार्वधातुकार्धधातुकयोः इत्यनेन इगन्ताङ्गस्य



## तनादितः चुरादिपर्यन्तम्- तन् कृ क्री चुर् धातवः

ऋकारस्य गुणे प्राप्ते असंयोगाल्लिट् कित् इति सूत्रेण लिडादेशस्य त-प्रत्ययस्य कित्त्वे क्ङिति च इति गुणनिषेधे लिटि धातोरनभ्यासस्य इति अस्मात् परत्वात् इको यणचि इति यणि प्राप्ते द्विर्वचनेऽचि इति द्वित्वार्थम् अचः यणादेशनिषेधे लिटि धातोरनभ्यासस्य इति सूत्रेण धातोर्द्वित्वे कृ कृ ए इति जाते पूर्वोऽभ्यासः इति सूत्रेण द्विरुक्तस्य पूर्वभागस्य अभ्याससंज्ञायाम् उरत् इति सूत्रेण अभ्यासऋकारस्य अत्त्वे उरण् रपरः इति रपरत्वे च कर् कृ ए इति जाते हलादिः शेषः इति सूत्रेण आदेः हलः शेषे क कृ ए इति जाते कुहोश्चुः इति अभ्यासककारस्य चुत्वे चकारे च कृ ए इति जाते इको यणचि इति सूत्रेण ऋकारस्य यणि रेफे च कृ ए इति जाते वर्णसम्मेलने चक्रे इति रूपम् सिध्यति। अन्येषाम् रूपाणाम् प्रक्रियाः स्वयम् साधनीयाः। लिटि थलादौ आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति सूत्रेण निषेधः।

तथा च परस्मैपदे रूपाणि - **चकार, चक्रतुः, चक्रुः। चकर्थ, चक्रथुः, चक्र। चकार/चकर, चकृव, चकृम।**

आत्मनेपदे रूपाणि च - **चक्रे, चक्राते, चक्रिरे। चकृषे, चक्राथे, चकृढ्वे। चक्रे, चकृवहे, चकृमहे।**

**लुटि** पूर्ववत् इण्निषेधः। उप्रत्ययापवादस्य तासः आर्धधातुकत्वात् आर्धधातुके परे सार्वधातुकार्धधातुकयोः इति गुणः। इतोऽपि विशेषो अत्र नास्ति।

तथा च परस्मैपदे रूपाणि - **कर्ता, कर्तारौ, कर्तारः। कर्तासि, कर्तास्थः, कर्तास्थ। कर्तास्मि, कर्तास्वः, कर्तास्मः।**

आत्मनेपदे रूपाणि च – **कर्ता, कर्तारौ, कर्तारः। कर्तासे, कर्तासाथे, कर्ताध्वे। कर्ताहे, कर्तास्वहे, कर्तास्महे।**

**लृटि** तिपि कृ ति इति जाते उप्रत्ययापवादे स्यप्रत्यये कृ स्य ति इति जाते उप्रत्ययापवादस्य स्यप्रत्ययस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधः। ततः ऋद्धनोः स्ये इत्यनेन स्यस्य इडागमे टित्त्वात् आद्यन्तौ टकितौ इति परिभाषया स्यस्य आद्यावयवे कृ इ स्य ति इति जायते। ततः स्यस्य आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञायां कृ इत्यस्य ऋकारस्य सार्वधातुकार्धधातुकयोः इत्यनेन गुणे उरण् रपरः इत्यनेन रपरत्वे इकारात्परस्य सकारस्य षत्वे वर्णसम्मेलने **करिष्यति** इति रूपं भवति। तप्रत्यये पूर्ववत् प्रक्रियया **करिष्यते** इति रूपम् भवति। आत्मनेपदस्थले अत्र थासम् विहाय टेः एत्वम् भवति इति अवधेयम्।

तथा च परस्मैपदे रूपाणि - **करिष्यति, करिष्यतः, करिष्यन्ति। करिष्यसि, करिष्यथः, करिष्यथ। करिष्यामि, करिष्यावः, करिष्यामः।**

आत्मनेपदे रूपाणि च – **करिष्यते, करिष्येते, करिष्यन्ते। करिष्यसे, करिष्येथे, करिष्यध्वे। करिष्ये, करिष्यावहे, करिष्यामहे।**

**लोटि** न कश्चित् विशेषः। तथा हि परस्मैपदे रूपाणि - **करोतु/कुरुतात्, कुरुताम्, कुर्वन्तु। कुरु/कुरुतात्, कुरुतम्, कुरुत। करवाणि, करवाव, करवाम।**



आत्मनेपदे रूपाणि च - **कुरुताम्, कुर्वाताम्, कुर्वताम्। कुरुष्व, कुर्वाथाम्, कुरुध्वम्। करवै, करवावहै, करवामहै।**

**लङि** अपि न कोऽपि विशेषः। तथा हि परस्मैपदे रूपाणि - **अकरोत्, अकुरुताम्, अकुर्वन्। अकरोः, अकुरुतम्, अकुरुत। अकरवम्, अकुर्व, अकुर्म।**

आत्मनेपदे रूपाणि च – **अकुरुत, अकुर्वाताम्, अकुर्वत। अकुरुथाः, अकुर्वाथाम्, अकुरुध्वम्। अकुर्वि, अकुर्वहि, अकुर्महि।**

{सूत्रम्. **ऋद्धनोः स्ये** (७.२.७०) = ऋतो हन्तेश्च स्यस्य इट् स्यात्।}

**विधिलिङि** कृधातोः तिपि उप्रत्यये यासुटि सुटि गुणे रपरत्वे उत्वे तिपः इकारलोपे कुर् उ यास् स् त् इति जाते लिङः सलोपोऽनन्त्यस्य इति योगेन सकारद्वयस्य लोपे कुर् उ या त् इति जाते सूत्रमिदमारभ्यते -

## [२३.७] ये च॥ (६.४.१०९)

**सूत्रार्थः** - कृञ उलोपो यादौ प्रत्यये परे।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। ये (७/१), च इति सूत्रगतपदच्छेदः। यकारात् अकारः उच्चारणार्थः। नित्यं करोतेः इत्यतः करोतेः (५/१), इत्यस्यानुवृत्तिर्भवति, उतश्च प्रत्ययादसंयोगपूर्वात् इति सूत्रतः उतः (५/१) इत्यस्य, प्रत्ययात् (५/१) इत्यस्य च अनुवृत्तिर्भवति। अनुवृत्तयोः तयोः षष्ठ्येकवचनान्ततया विपरिणामः। लोपश्चास्यान्यतरस्यां म्वोः इत्यतः लोपः (१/१) इति पदस्य च अनुवृत्तिर्भवति। अङ्गस्य इत्यधिकृतमस्ति, अतः प्रत्यये इत्यस्याध्याहारो भवति। ततः प्रत्यये इत्यस्य विशेषणं भवति ये इति, तेन तदादिविधौ यादौ प्रत्यये इत्यर्थलाभः। सूत्रार्थो हि कृधातोः परस्य प्रत्ययस्य उकारस्य लोपो भवति यादौ प्रत्यये परे इति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण कुर् उ या त् इति जाते यात् इति यकारादिप्रत्ययः विद्यमानः अस्ति, अतः प्रकृतसूत्रेण कृधातोः परस्य उकारस्य लोपो भवति। ततः वर्णसम्मेलने **कुर्यात्** इति रूपं भवति। एवम् अग्रे ऊह्यम्।

तथा हि परस्मैपदे रूपाणि - **कुर्यात्, कुर्याताम्, कुर्युः। कुर्याः, कुर्यातम्, कुर्यात। कुर्याम्, कुर्याव, कुर्याम।**

आत्मनेपदे रूपाणि च – **कुर्वीत, कुर्वीयाताम्, कुर्वीरन्। कुर्वीथाः, कुर्वीयाथाम्, कुर्वीध्वम्। कुर्वीय, कुर्वीवहि, कुर्वीमहि।**

**आशीर्लिङि** तिपि यासुटि सुटि कृ यास् स् त् इति जाते सकारद्वयस्यापि स्कोः संयोगाद्योरन्ते च इत्यनेन लोपे यात् यकाराद्यार्धधातुकः लिङ् अस्ति। अतः रिङ् शयग्लिङ्क्षु इत्यनेन कृधातोः ऋकारस्य स्थाने रिङ्-आदेशे अनुबन्धलोपे क् रि या त् इति जाते वर्णसम्मेलने च **क्रियात्** इति रूपं सिध्यति। सूत्रेऽस्मिन् रीङ् ऋतः इत्यतः रीङ् इत्यस्य अनुवर्तमाने पुनः रिङ्-विधानसामर्थ्यात् अकृत्सार्वधातुकयोर्दीर्घः इति रेः इकारस्य दीर्घो न इत्यवधेयम्। एवम् अन्यत्रापि ऊह्यम्।



## तनादितः चुरादिपर्यन्तम्- तन् कृ क्री चुर् धातवः

तथा च परस्मैपदे रूपाणि - **क्रियात्, क्रियास्ताम्, क्रियासुः। क्रियाः, क्रियास्तम्, क्रियास्त। क्रियासम्, क्रियास्व, क्रियास्म।**

आत्मनेपदस्थले उश्च इत्यनेन झलादिलिङः कित्त्वम् विधीयते। अतः ऋकारस्य स्थाने नैव गुणादेशः। प्रथमपुरुषैकवचने तप्रत्यये सीयुटि सुटि कृ सीय् स् त इति जायते। यदागमपरिभाषया अत्र सीय्+स्+त इति समुदायः तिङ्-प्रत्ययः। लिङाशिषि इति सूत्रेण लिङादेशस्य तिङः आर्धधातुकसंज्ञा भवति। अतः सीय्+स्+त इति समुदायस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड् वलादेः इति सूत्रेण इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इति तन्निषेधः। ततः लोपो व्योर्वलि इति सीयुटः यकारलोपे कृ सी स् त इति जाते आदेशप्रत्यययोः इति सीयुटः सकारस्य षत्वे तकारस्य ष्टुत्वे टकारे वर्णसम्मेलने **कृषीष्ट** इति रूपम् सिध्यति।

तथा हि आत्मनेपदे रूपाणि – **कृषीष्ट, कृषीयास्ताम्, कृषीरन्। कृषीष्ठाः, कृषीयास्थाम्, कृषीढ्वम्। कृषीय, कृषीवहि, कृषीमहि।**

{सूत्रम्. **रिङ् शयग्लिङक्षु** (७.४.२८) = शे यकि यादावार्धधातुके लिङि च ऋतः रिङादेशः स्यात्।}

{सूत्रम्. **उश्च** (१.२.१२) = ऋवर्णात् परौ झलादी लिङ् तङ्परः सिच्चेत्येतौ कितौ स्तः।}

**लुङि** तिपि इकारलोपे अडागमे उप्रत्ययापवादे च्लौ सिचि अपृक्तहलः ईडागमे अकृ स् ईत् इति जाते सिचः आर्धधातुकत्वात् प्राप्तस्य वलादिलक्षणस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधः। ततः सिचि वृद्धिः परस्मैपदेषु इत्यनेन कृ इत्यस्य ऋकारस्य वृद्धौ अकार् स् ईत् इति जाते सकारस्य षत्वे वर्णसम्मेलने **अकार्षीत्** इति रूपं भवति। एवमग्रेऽपि। तथा च परस्मैपदे रूपाणि - **अकार्षीत्, अकार्ष्टाम्, अकार्षुः। अकार्षीः, अकार्ष्टम्, अकार्ष्ट। अकार्षम्, अकार्ष्व, अकार्ष्म।**

आत्मनेपदस्थले प्रथमपुरुषैकवचने तप्रत्यये अडागमे उप्रत्ययापवादे च्लौ सिचि अ कृ स् त इति जाते तनादिभ्यस्तथासोः इत्यनेन विकल्पेन सकारस्य लुकि **अकृत** इति रूपं सिध्यति। लुगभावपक्षे **ह्रस्वादङ्गात्** इत्यनेन झलि परे सिचः सकारस्य लोपे **अकृत** इति समानमेव रूपं सिध्यति। झल् परो नास्ति चेत् सकारोलोपोऽपि न भवति तेन **अकृषाताम्** ,**अकृषाथाम्** इत्यादीनि रूपाणि सिध्यन्ति।

तथा च लुङि आत्मनेपदे रूपाणि - **अकृत, अकृषाताम्, अकृषत। अकृथाः, अकृषाथाम्, अकृढ्वम्। अकृषि, अकृष्वहि, अकृष्महि।**

{सूत्रम्. **ह्रस्वादङ्गात्** (८.२.२७) = (ह्रस्वान्तात् अङ्गात्) सिचो लोपो झलि।}

**लृङि** उप्रत्ययापवादस्य स्यस्य आर्धधातुकत्वात् प्राप्तस्य वलादिलक्षणस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधेऽपि ऋद्धनोः स्ये इति इडागमो भवत्येव। किञ्च स्यस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इति इग्लक्षणः गुणः भवति। उभयविधस्थले प्रक्रिया तु स्वयम् बोद्धव्या।

तथा हि परस्मैपदे रूपाणि - **अकरिष्यत्, अकरिष्यताम्, अकरिष्यन्। अकरिष्यः, अकरिष्यतम्, अकिरष्यत। अकरिष्यम्, अकरिष्याव, अकरिष्याम।**



आत्मनेपदे रूपाणि च – **अकरिष्यत, अकरिष्येताम्, अकरिष्यन्त। अकरिष्यथाः, अकरिष्येथाम्, अकरिष्यध्वम्। अकरिष्ये, अकरिष्यावहि, अकरिष्यामहि।**

।।इति कृधातुः।।



## पाठगतप्रश्नाः-१

१. तनादिगणीयधातुभ्यः कः विकरणप्रत्ययो भवति।

२. कृधातोः कः विकरणप्रत्ययो भवति।

३. तनादिभ्यस्तथासोः इत्यस्य कोऽर्थः।

४. ये च इत्यस्य कोऽर्थः।

५. नित्यं करोतेः इत्यस्य कोऽर्थः।

६. अनुदात्तोपदेशादिसूत्रं पूरयत।

७. तन्-धातोः लटि उत्तमपुरुषद्विवचने आत्मनेपदे किम् रूपम्।

८. कृधातोः आशीर्लिङि प्रथमपुरुषैकवचने परस्मैपदे किम् रूपम्।

९. करिष्यति इत्यत्र इडागमः केन।

१०. तन्धातोः लङि प्रथमपुरुषैकवचने आत्मनेपदस्थले कति रूपाणि भवन्ति। तानि च कानि।

## अथ क्र्यादिगणः

क्री (डुक्रीञ् द्रव्यविनिमये) इति उभयपदिनः अनुदात्तेतः अनिटः सकर्मकात् क्र्यादिगणीयधातोः वर्तमानक्रियावृत्तित्वविवक्षायां **लटि** परस्मैपदसंज्ञके तिपि क्री ति इति जाते कर्तरि शप् इत्यनेन शपि प्राप्ते सूत्रमिदमारभ्यते -

### [२३.८] क्र्यादिभ्यः श्ना॥ (३.१.८१)

**सूत्रार्थः** - क्र्यादिगणपठितधातुभ्यः श्ना-प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परे।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। क्र्यादिभ्यः (५/३), श्ना (१/१) इति सूत्रगतपदच्छेदः। कर्तरि शप् इत्यतः कर्तरि (७/१) इति पदं, सार्वधातुके यक् इत्यतः सार्वधातुके (७/१) इति पदं च अनुवर्तते। प्रत्ययः (१/१), परः (१/१) इत्युभयमपि अधिक्रियते। धातोरेकाचो हलादेः



क्रियासमभिव्याहारे यङ् इति सूत्रात् धातोः इति पदम् अनुवर्तते। पदयोजना - कर्तरि सार्वधातुके धातोः श्ना-प्रत्ययः परः इति। क्र्यादिगणः दशसु धातुगणेषु नवमः। क्री आदिः येषाम् (धातूनाम्) ते क्र्यादयः (धातवः) इति तद्गुणसंविज्ञानबहुव्रीहिसमासः, तेभ्यः क्र्यादिभ्यः। सूत्रार्थो हि कर्त्रर्थके सार्वधातुकसंज्ञकप्रत्यये परतः क्र्यादिगणपठितधातुभ्यः श्नाप्रत्ययः परो भवति इति। श्नाप्रत्ययस्य शकारस्य इत्संज्ञा लशक्वतद्धिते इत्यनेन भवति। अतः ना इत्येव शिष्यते। श्नाप्रत्ययः अपित् अस्ति। शित्त्वात् सार्वधातुकसंज्ञकोऽपि। अतः श्नाप्रत्ययस्य सार्वधातुकत्वात् अपित्त्वात् च सार्वधातुकमपित् इति ङिद्वद्भावः।

**उदाहरणम्-** पूर्वोक्तप्रकारेण क्री ति इति जाते प्राप्तं शपं प्रबाध्य प्रकृतसूत्रेण श्नाप्रत्यये अनुबन्धलोपे च क्री ना ति इति जाते श्नाप्रत्ययस्य सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन क्री इत्यस्य ईकारस्य गुणे प्राप्ते सार्वधातुकमपित् इत्यनेन श्नाप्रत्ययस्य ङिद्वद्भावे क्ङिति च इति गुणनिषेधः।ततः नकारस्य अट्कुप्वाङ्नुम्व्यवायेऽपि इति सूत्रेण णत्वे वर्णसम्मेलने च **क्रीणाति** इति रूपं सिध्यति। तसि क्री ना तस् इति जाते सूत्रमिदमारभ्यते -

## [२३.९] ई हल्यघोः॥ (६.४.११३)

**सूत्रार्थः** - श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि, न तु घुसंज्ञकस्य।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदत्रयमस्ति। ई (लुप्तप्रथमैकवचनान्तम् पदम्), हलि (७/१), अघोः (६/१) इति सूत्रगतपदच्छेदः। श्नाभ्यस्तयोरातः इति सूत्रमनुवर्तते। तस्य च सूत्रस्य श्नाभ्यस्तयोः (६/२), आतः (६/१) इति पदच्छेदः। अत उत्सार्वधातुके इत्यतः सार्वधातुके (७/१) इति पदमनुवर्तते। गमहनजनखनघसां लोपः क्ङित्यनङि इत्यतः क्ङिति (७/१) इति पदमनुवर्तते। श्नाभ्यस्तयोः आतः ईत् हलि क्ङिति सार्वधातुके अघोः इति पदयोजना। हलि इति सार्वधातुके इत्यस्य विशेषणमस्ति अतः यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ हलादौ सार्वधातुके इत्यर्थलाभः। क्ङिति इत्यस्य सार्वधातुके इत्यत्र अन्वयः। तेन किति ङिति च सार्वधातुके इत्यर्थलाभः। सूत्रार्थो हि श्ना इत्यस्य आकारस्य, अभ्यस्तसंज्ञकस्य आकारस्य च ईत् स्यात् किति ङिति च हलादौ सार्वधातुके परतः। घुसंज्ञकस्य धातोः आकारस्य तु न इति। सूत्रमिदम् श्नाभ्यस्तयोरातः इति वक्ष्यमाणस्य सूत्रस्य अपवादभूतम्।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण क्री ना तस् इति स्थिते तसः सार्वधातुकमपित् इत्यनेन ङित्त्वात् हलादित्वात् सार्वधातुकत्वात् च तस्मिन् परतः ई हल्यघोः इति प्रकृतसूत्रेण ना इत्यस्य आकारस्य ईकारादेशे क्री नी तस् इति जाते नकारस्य णत्वे सकारस्य रुत्वे रेफस्य च विसर्गे **क्रीणीतः** इति रूपं सिध्यति।

बहुवचने झिप्रत्यये झेरन्तादेशे क्री ना अन्ति इति जाते सूत्रमिदमारभ्यते -



## [२३.१०] श्नाभ्यस्तयोरातः॥ (६.४.११२)

**सूत्रार्थः -** श्नाभ्यस्तयोः आतो लोपः स्यात् क्ङिति सार्वधातुके।

**सूत्रव्याख्या -** विधिसूत्रेऽस्मिन् पदद्वयमस्ति। श्नाभ्यस्तयोः (६/२), आतः (६/१) इति सूत्रगतपदच्छेदः। श्नसोरल्लोपः इत्यतः लोपः (१/१) इति पदम् अनुवर्तते। अत उत्सार्वधातुके इत्यतः सार्वधातुके (७/१) इति पदमनुवर्तते। गमहनजनखनघसां लोपः क्ङित्यनङि इत्यतः क्ङिति (७/१) इति पदमनुवर्तते। श्नाभ्यस्तयोः आतः लोपः क्ङिति सार्वधातुके इति पदयोजना। क्ङिति इत्यस्य सार्वधातुके इत्यत्र अन्वयः। तेन किति ङिति च सार्वधातुके इत्यर्थलाभः। सूत्रार्थो हि श्ना इत्यस्य आकारस्य, अभ्यस्तसंज्ञकस्य आकारस्य च लोपः स्यात् किति ङिति च सार्वधातुके परतः इति।

**अत्र विशेषः** - अत्र श्नाभ्यस्तयोरातः इति उत्सर्गसूत्रम्। ई हल्यघोः इति अपवादसूत्रम्। श्नाभ्यस्तयोरातः इति सूत्रस्य सामान्यतया **अजादौ हलादौ** च किति ङिति च सार्वधातुके परतः प्राप्तिरस्ति। किन्तु **हलादौ** किति ङिति च सार्वधातुके परतः ई हल्यघोः इति सूत्रस्य प्रवृत्तेः ई हल्यघोः इत्ययं योगः श्नाभ्यस्तयोरातः इत्यस्य अपवादः। तेन हलादौ किति ङिति च सार्वधातुके परतः श्नाभ्यस्तयोरातः इत्यस्य न प्रवृत्तिः। अतः अजादौ किति ङिति च सार्वधातुके श्नाभ्यस्तयोरातः इत्यस्य प्रवृत्तिः बोध्या।

**उदाहरणे सूत्रार्थसमन्वयः -** पूर्वोक्तप्रकारेण क्री ना अन्ति इति जाते अन्ति इति अजादिः ङित् सार्वधातुकम् च अस्ति। अतः प्रकृतसूत्रेण नकारोत्तरवर्तिनः आकारस्य लोपे नस्य णत्वे वर्णसम्मेलने **क्रीणन्ति** इति रूपम्। एवमेव अग्रे हलादौ ङिति सार्वधातके परे ईत्त्वम्, अजादौ ङिति सार्वधातुके परे आकारलोपः ज्ञेयः।

**अत्र अवधेयम् -** (डुक्रीञ्) क्री-धातोः ञित्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन क्रियाफलस्य कर्तृगामित्वे क्रीधातोः विहितस्य लस्य स्थाने आत्मनेपदप्रत्ययो भवति। क्रियाफलस्य परगामित्वे तु शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदप्रत्ययो भवति।

तथा हि लटि परस्मैपदे रूपाणि - **क्रीणाति, क्रीणीतः, क्रीणन्ति। क्रीणासि, क्रीणीथः, क्रीणीथ। क्रीणामि, क्रीणीवः, क्रीणीमः।**

आत्मनेपदे रूपाणि च - **क्रीणीते, क्रीणाते, क्रीणते। क्रीणीषे, क्रीणाथे, क्रीणीध्वे। क्रीणे, क्रीणीवहे, क्रीणीमहे।**

**लिटि** परस्मैपदसंज्ञके तिपि णलि अनुबन्धलोपे क्री अ इति जाते क्री इत्यस्य द्वित्वे हलादिशेषे की क्री अ इति जायते। ततः ह्रस्वः इत्यनेन अभ्यासस्य ईकारस्य स्थाने ह्रस्वे इकारादेशे कि क्री अ इति जाते कुहोश्चुः इत्यनेन चुत्वे चकारे चि क्री अ इति जाते णलः णित्त्वात् अचो ञ्णिति इत्यनेन क्री इत्यस्य ईकारस्य वृद्धौ ऐकारे चिक्रै अ इति जाते ऐकारस्य स्थाने आयादेशे वर्णसम्मेलने **चिक्राय** इति रूपं सिध्यति। अतुसादौ असंयोगाल्लिट् कित् इत्यनेन कित्त्वात् गुणनिषेधः। क्रीधातोः अतुसि प्रक्रियया चिक्री अतुस् इति जाते अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यनेन ईकारस्य स्थाने इयङ्-आदेशे चिक् र् इय् अतुस् इति जाते सकारस्य रुत्वे रेफस्य च विसर्गे वर्णसम्मेलने **चिक्रियतुः** इति रूपं सिध्यति। एवम्



## तनादितः चुरादिपर्यन्तम्- तन् कृ क्री चुर् धातवः

अग्रेऽपि ऊह्यम्। थलि आर्धधातुकस्येड्वलादेः इति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधे प्राप्ते तं बाधित्वा क्रादिनियमानुसारं नित्यम् इटि प्राप्ते तस्यापि अचस्तास्वत्थल्यनिटो नित्यम् इत्यनेन निषेधः प्राप्तः। तदा तं बाधित्वा भारद्वाजनियमेन वैकल्पिकः इडागमः। ततः इड्भावे इडभावे चेति पक्षद्वयेऽपि गुणः। वसि मसि च क्रादिनियमानुसारम् नित्यम् इडागमः।विभाषेटः इत्यनेन ध्वमः धस्य विकल्पेन ढत्वम् भवति तेन ध्वमि रूपद्वयम् भवति। ध्वमि वहौ महिङि च क्रादिनियमानुसारम् नित्यम् इडागमः। किञ्च अजादौ प्रत्यये परतः अनभ्यासस्य क्री इत्यस्य ईकारस्य इयङादेशो भवति इत्यवधेयम्। इयङादेशः तिपि सिपि मिपि च न भवति। गुणस्तु अतुसादौ न भवति यतो हि असंयोगाल्लिट् कित् इति किद्वद्भावेन क्ङिति च इति गुणनिषेधः।

तथा च परस्मैपदे रूपाणि - **चिक्राय, चिक्रियतुः, चिक्रियुः। चिक्रयिथ/चिक्रेथ, चिक्रियथुः, चिक्रिय। चिक्राय/चिक्रय, चिक्रियिव, चिक्रियिम।**

आत्मनेपदे रूपाणि च – **चिक्रिये, चिक्रियाते, चिक्रियिरे। चिक्रियिषे, चिक्रियाथे, चिक्रियिढ्वे/चिक्रियिध्वे । चिक्रिये, चिक्रियिवहे, चिक्रियिमहे।**

{सूत्रम्. **विभाषेटः** (८.३.७९) = इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात्।}

**लुटि** श्नाप्रत्यययावपवादः तास्प्रत्ययो भवति। तासः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य निषेधः एकाच उपदेशेऽनुदात्तात् इत्यनेन। अपि च तासः आर्धधातुकसंज्ञकत्वात् तस्मिन् परे सर्वत्रैव सार्वधातुकार्धधातुकयोः इत्यनेन क्री इत्यस्य ईकारस्य गुणे एकारो भवति। इतोऽपि विशेषः अत्र नास्ति।

तथा च परस्मैपदे रूपाणि - **क्रेता, क्रेतारौ, क्रेतारः। क्रेतासि, क्रेतास्थः, क्रेतास्थ। क्रेतास्मि, क्रेतास्वः, क्रेतास्मः।**

आत्मनेपदे रूपाणि च - **क्रेता, क्रेतारौ, क्रेतारः। क्रेतासे, क्रेतासाथे, क्रेताध्वे। क्रेताहे, क्रेतास्वहे, क्रेतास्महे।**

**लृटि** प्रथमपुरुषैकवचने तिपि श्नाप्रत्ययापवादे स्यप्रत्यये स्यस्य आर्धधातुकत्वात् सार्वधातुकार्धातुकयोः इत्यनेन क्री इत्यस्य ईकारस्य गुणे एकारे सकारस्य षत्वे क्रेष्यति इति रूपं सिध्यति। तप्रत्यये क्रेष्यति इति रूपम्। एवम् अन्यत्रापि ऊह्यम्। अत्र लृटि स्यस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य निषेधः एकाच उपदेशेऽनुदात्तात् इत्यनेन।

तथा च परस्मैपदे रूपाणि - **क्रेष्यति, क्रेष्यतः, क्रेष्यन्ति। क्रेष्यसि, क्रेष्यथः, क्रेष्यथ। क्रेष्यामि, क्रेष्यावः, क्रेष्यामः।**

आत्मनेपदे रूपाणि च - **क्रेष्यते, क्रेष्येते, क्रेष्यन्ते। क्रेष्यसे, क्रेष्येथे, क्रेष्यध्वे। क्रेष्ये, क्रेष्यावहे, क्रेष्यामहे।**



**लोटि** उत्तमपुरुषे आडागमः पित् भवति। अतः सार्वधातुकमपित् इत्यनेन ङिद्वद्भावो न भवति। ङित्त्वाभावे च न ईत्त्वं न वा आकारलोपः इत्यवधेयम्। तद्यथा - वसि मसि च आडुत्तमस्य पिच्च इत्यनेन आडागमे सति आकारव्यवधानम् भवति इति हेतोः श्ना इत्यस्मात् परे हल् न लभ्यते तस्मात् ई हल्यघोः इत्यनेन ईत्त्वं न भवति। अपि च आडागमस्य पित्त्वात् आकारलोपोऽपि न। ततः सवर्णदीर्घे **क्रीणाव**, **क्रीणाम** इत्येवं रूपं भवति।

तथा हि परस्मैपदे रूपाणि - **क्रीणातु/क्रीणीतात्, क्रीणीताम्, क्रीणन्तु। क्रीणीहि/क्रीणीतात्, क्रीणीतम्, क्रीणीत। क्रीणानि, क्रीणाव, क्रीणाम।**

आत्मनेपदे रूपाणि च - **क्रीणीताम्, क्रीणाताम्, क्रीणताम्। क्रीणीष्व, क्रीणाथाम्, क्रीणीध्वम्। क्रीणै, क्रीणावहै, क्रीणामहै।**

**लङि** परस्मैपदे रूपाणि - **अक्रीणात्, अक्रीणीताम्, अक्रीणन्। अक्रीणाः, अक्रीणीतम्, अक्रीणीत। अक्रीणाम्, अक्रीणीव, अक्रीणीम।**

आत्मनेपदे रूपाणि च - **अक्रीणीत, अक्रीणाताम्, अक्रीणत। अक्रीणीथाः, अक्रीणाथाम्, अक्रीणीध्वम्। अक्रीणि, अक्रीणीवहि, अक्रीणीमहि।**

विधिलिङि यासुटः ङित्त्वात् सर्वत्रैव ईत्त्वं भवति।

तथा च परस्मैपदे रूपाणि - **क्रीणीयात्, क्रीणीयाताम्, क्रीणीयुः। क्रीणीयाः, क्रीणीयातम्, क्रीणीयात। क्रीणीयाम्, क्रीणीयाव, क्रीणीयाम।**

आत्मनेपदस्थले तु सर्वत्रैव अजादिः ङित्प्रत्ययः परो भवति। अतः आकारलोपो भवति।

तथा च आत्मनेपदे रूपाणि – **क्रीणीत, क्रीणीयाताम्, क्रीणीरन्। क्रीणीथाः, क्रीणीयाथाम्, क्रीणीध्वम्। क्रीणीय, क्रीणीवहि, क्रीणीमहि।**

आशीर्लिङि परस्मैपदे रूपाणि - **क्रीयात्, क्रीयास्ताम्, क्रीयासुः। क्रीयाः, क्रीयास्तम्, क्रीयास्त। क्रीयासम्, क्रीयास्व, क्रीयास्म।**

आत्मनेपदरूपाणि च – **क्रेषीष्ट, क्रेषीयास्ताम्, क्रेषीरन्। क्रेषीष्ठाः, क्रेषीयास्थाम्, क्रेषीढ्वम्। क्रेषीय, क्रेषीवहि, क्रेषीमहि।**

**लुङि** अटि प्रथमपुरुषैकवचने तिपि इकारलोपे श्नाप्रत्ययापवादे च्लौ सिचि अपृक्तहलः तकारस्य ईडागमे अ क्री स् ईत् इति जाते सिचि वृद्धिः परस्मैपदेषु इत्यनेन क्री इत्यस्य ईकारस्य वृद्धौ ऐकारे सकारस्य षत्वे **अक्रैषीत्** इति रूपं सिध्यति। एवम् अग्रेऽपि विद्यार्थिना स्वयम् ऊह्यम्। अत्र लुङि सिचः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य निषेधः एकाच उपदेशेऽनुदात्तात् इत्यनेन।

तथा हि परस्मैपदे रूपाणि - **अक्रैषीत्, अक्रैष्टाम्, अक्रैषुः। अक्रैषीः, अक्रैष्टम्, अक्रैष्ट। अक्रैषम्, अक्रैष्व, अक्रैष्म।**



सार्वधातुकार्धधातुकयोः इति आर्धधातुकलक्षणगुणे आत्मनेपदे रूपाणि - **अक्रेष्ट, अक्रेषाताम्, अक्रेषत। अक्रेष्ठाः, अक्रेषाथाम्, अक्रेढ्वम्। अक्रेषि, अक्रेष्वहि, अक्रेष्महि।**

**लृङि** तिपि इकारलोपे श्नाप्रत्ययापवादे स्यप्रत्यये स्यस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य निषेधः एकाच उपदेशेऽनुदात्तात् इत्यनेन। पुनः स्यस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन क्री इत्यस्य ईकारस्य गुणे एकारे सस्य षत्वे **अक्रेष्यत्** इति रूपम्। त-प्रत्यये पूर्ववत् प्रक्रियया **अक्रेष्यत** इति रूपम् सिध्यति।

तथा च परस्मैपदे रूपाणि - **अक्रेष्यत्, अक्रेष्यताम्, अक्रेष्यन्। अक्रेष्यः, अक्रेष्यतम्, अक्रेष्यत। अक्रेष्यम्, अक्रेष्याव, अक्रेष्याम।**

आत्मनेपदे रूपाणि च - **अक्रेष्यत, अक्रेष्येताम्, अक्रेष्यन्त। अक्रेष्यथाः, अक्रेष्येथाम्, अक्रेष्यध्वम्। अक्रेष्ये, अक्रेष्यावहि, अक्रेष्यामहि।**

।।इति क्र्यादिगणः।।



## पाठगतप्रश्नाः-२

११. क्रीधातोः कः विकरणप्रत्ययो भवति।

१२. श्नाविकरणविधायकसूत्रं लिखत।

१३. क्रीधातोः लिटि मध्यमपुरुषैकवचने परस्मैपदे किम् रूपम्।

१४. लिटि आत्मनेपदस्थले मध्यमपुरुषबहुवचने किं रूपं भवति।

१५. क्रीणन्ति इत्यत्र आकारलोपः केन।

१६. क्रीधातोः कोऽर्थः।

१७. क्रीधातुः उभयपदी अस्ति न वा।

# अथ चुरादिगणः

**अत्र अवधेयम्** - दशसु धातुगणेषु चुरादिगणः अन्तिमः। अन्यस्मात् गणाद् अयं विलक्षणोऽपि। णिच् द्विविधो भवति -१. स्वार्थिकः, २. हेतुमान् च इति। धातोः लकारविधानात् पूर्वं यदा स्वार्थे णिच् भवति तदा तस्य ण्यन्तस्य सनाद्यन्ता धातव इत्यनेन धातुसंज्ञायां लकारः, शप् इत्यादि भवति। प्रकृतेरेव अर्थं परिपोषयति इति हेतोः अयं णिच् स्वार्थिक इत्युच्यते - अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति इति

परिभाषाबलात्। यदा च हेत्वर्थे णिच् भवति तदा स हेतुमाण्णिच् इत्युच्यते। तत्रापि ण्यन्तस्य सनाद्यन्ता धातव इत्यनेन धातुसंज्ञा भवति। अयं विषयः अग्रे णिजन्तप्रकरणे ज्ञास्यते।

**चुर** स्तेये इति धातोः स्वार्थे णिच्-विधानाय सूत्रमिदमारभ्यते -

## [२३.११] सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्॥ (३.१.२५)

**सूत्रार्थः** - सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। सत्यापपाश-रूपवीणा-तूलश्लोक-सेनालोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यः (५/३), णिच् (१/१) इति सूत्रगतपदच्छेदः। चुर् आदिः येषां ते चुरादयः इति बहुव्रीहिसमासः। सत्यापश्च पाशश्च रूपश्च वीणा च तूलञ्च श्लोकश्च सेना च लोम च त्वचश्च वर्म च वर्णञ्च चूर्णञ्च चुरादयश्च तेषामितरेतरयोगद्वन्द्वे सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादयः, तेभ्यः सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यः इति बहुव्रीहिगर्भो द्वन्द्वसमासः। प्रत्ययः (१/१), परः (१/१) इत्युभयमधिक्रियते। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इत्यतः धातोः (५/१) इत्यनुवर्तते। एवञ्च सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्णादिनामधातुभ्यः तथा चुरादिगणपठितधातुभ्यः स्वार्थे णिच्-प्रत्ययः परो भवति इति सूत्रार्थः। णिचः णकारस्य चुटू इत्यनेन इत्संज्ञा। चकारस्य तु हलन्त्यम् इत्यनेन। तेन इ-मात्रम् शिष्यते।

**उदाहरणे सूत्रार्थसमन्वयः**:- चुर्-धातोः लट्-विधानात् पूर्वमेव प्रकृतसूत्रेण स्वार्थे णिचि अनुबन्धलोपे चुर् इ इति जाते णिचः तिङ्शिद्भिन्नत्वात् आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञायां पुगन्तलघूपधस्य च इत्यनेन लघूपधगुणे ओकारे चोरि इति जायते। ततः अस्य समुदायस्य सनाद्यन्ता धातवः इत्यनेन धातुसंज्ञायां कर्तृत्वविवक्षायां लटि लस्य स्थाने आत्मनेपदप्रत्ययपरस्मैपदप्रत्यययोः मध्ये कतरत् स्यात्। तदा उच्यते - शेषात् कर्तरि परस्मैपदम् इति सूत्रेण परस्मैपदप्रत्ययः एव स्यात्। किन्तु लोके कर्त्रभिप्राये क्रियाफले आत्मनेपदस्यापि प्रयोगो दृश्यते। अतः तस्यापि सिद्ध्यर्थम् अग्रिमसूत्रमारभ्यते -

## [२३.१२] णिचश्च॥ (१.३.७४)

**सूत्रार्थः** - णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। णिचः (५/१), च (अव्ययम्) इति सूत्रगतपदच्छेदः। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् (१/१) इत्यस्यानुवृत्तिर्भवति। स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यतः कर्त्रभिप्राये (७/१), क्रियाफले (७/१) इत्यनयोः पदयोः अनुवृत्तिर्भवति। णिच् इति एकः प्रत्ययः, तेन प्रत्ययग्रहणे तदन्ता ग्राह्याः इति परिभाषया तदन्तविधौ



णिजन्तात् इत्यर्थलाभः। णिजन्तात् धातोः आत्मनेपदं भवति कर्तृगामिनि क्रियाफले इति सूत्रार्थः। एवञ्च चुरादिधातुभ्यः कर्तृगामिनि क्रियाफले आत्मनेपदं भवति, क्रियाफलस्य परगामित्वे तु परस्मैपदम्। सूत्रस्य अस्य बोधसौकर्याय स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यस्य व्याख्यानम् द्रष्टुम् शक्यम्।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण चोरि ल् इति जाते क्रियाफलस्य कर्तृगामित्वविवक्षायाम् प्रकृतसूत्रेण लस्य स्थाने आत्मनेपदप्रत्ययस्य विधानम् क्रियते। ततः प्रथमपुरुषैकवचनविवक्षायाम् तप्रत्यये चोरि त इति जाते तप्रत्ययस्य सार्वधातुकत्वात् कर्तरि शप् इत्यनेन शपि शपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन णिचः इकारस्य गुणे एकारे अयादेशे टेः एत्वे वर्णसम्मेलने च **चोरयते** इति रूपं सिध्यति।

क्रियाफलस्य परगामित्वे शेषात्कर्तरि परस्मैपदम् इत्यनेन लस्य स्थाने परस्मैपदप्रत्ययो भवति। ततः प्रथमपुरुषैकवचने तिपि चोरि ति इति जाते तिपः सार्वधातुकत्वात् कर्तरि शप् इत्यनेन शपि शपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन णिचः इकारस्य गुणे एकारे अयादेशे वर्णसम्मेलने च **चोरयति** इति रूपं सिध्यति।

चुर्-धातोः आर्धधातुके लिटि विवक्षिते आदौ स्वार्थे सत्यापादिसूत्रेण णिचि चुर् इ इति जाते णिचः इकारस्य आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञायां पुगन्तलघूपधस्य च इत्यनेन चुरः उपधाभूतस्य उकारस्य गुणे स्थानत आन्तर्यात् ओकारे चोरि इति जायते। तस्य च समुदायस्य सनाद्यन्ता धातवः इत्यनेन धातुसंज्ञा भवति। ततः भूतानद्यतनपरोक्षार्थवृत्तित्वविवक्षायाम् लिट्लकारे विहिते चोरि ल् इति स्थिते चोरि-धातोः अनेकाच्त्वात् कास्यनेकाच आम् वक्तव्यो लिटि इति वार्तिकेन आम्-प्रत्यये चोरि आम् ल् इति जाते अयामन्ताल्वाय्येत्न्विष्णुषु इत्यनेन चोरि इत्यस्य णेः इकारस्य अयादेशे चोर् अय् आम् ल् इति जायते। ततः आमः इति सूत्रेण आमः परस्य लिटः लुकि धात्वधिकारे विहितत्वात् तिङ्शिद्भिन्नत्वाच्च कृदतिङ् इति सूत्रेण लिटः कृत्संज्ञायां चोरयाम् इत्यस्य प्रत्ययलक्षणेन कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां ङ्याप्प्रातिपदिकात् इति सूत्रेण सु-प्रत्यये चोरयाम् सु इति स्थिते आमः इति सूत्रेण सुलुकि चोरयाम् इत्यस्य सुबन्तत्वात् सुप्तिङन्तं पदं इति पदसंज्ञा भवति। ततः चोरयाम् इत्यस्य आमन्तत्वात् कृञ्चानुप्रयुज्यते लिटि इति सूत्रेण लिट्परकस्य कृञः अनुप्रयोगे चोरयाम् कृ लिट् इति जाते अनुबन्धलोपे चोरयाम् कृ ल् इति स्थिते प्रथमपुरुषैकवचनविवक्षायां तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्वम्-इड्वहिमहिङ् इति सूत्रेण लस्य स्थाने तिपि अनुबन्धलोपे चोरयाम् कृ ति इति जाते परस्मैपदानां णलतुसुस्-थलथुस-णल्वमाः इति सूत्रेण तिपो सर्वादेशे णलि अनुबन्धलोपे चोरयाम् कृ अ इति जाते लिटि धातोरनभ्यासस्य इति सूत्रेण अनभ्यासधात्ववयवस्य एकाचः कृ इत्यस्य द्वित्वे चोरयाम् कृ कृ अ इति जाते द्विरुक्तस्य पूर्वभागस्य कृ इत्यस्य पूर्वोऽभ्यासः इति सूत्रेण अभ्याससंज्ञायाम् उरत् इति सूत्रेण अभ्यासऋकारस्य अत्वे उरण् रपरः इति रपरत्वे च चोरयाम् कर् कृ अ इति जाते हलादिः शेषः इति सूत्रेण आदेः हलः शेषे चोरयाम् क कृ अ इति जाते कुहोश्चुः इति अभ्यासककारस्य चुत्वे चकारे चोरयाम् च कृ अ इति जाते णलो णित्त्वात् अचो ञ्णिति इति सूत्रेण अजन्ताङ्गस्य कृञः ऋकारस्य वृद्धौ आकारे उरण् रपरः इति



रपरत्वे च चोरयाम् च कार् अ इति जाते चोरयाम् इति मान्तस्य पदस्य हल्परत्वात् मोऽनुस्वारः इति मस्य अनुस्वारे वा पदान्तस्य इति सूत्रेण अनुस्वारस्य विकल्पेन परसवर्णे स्थानत आन्तर्यात् ञकारे **चोरयाञ्चकार** इति रूपं सिध्यति। परसवर्णाभावे **चोरयांचकार** इति रूपम् भवति।

{सूत्रम्- **अयामन्ताल्वाय्येत्न्विष्णुषु** (६.४.५५) = आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्।}

आम्प्रत्ययस्य प्रकृतिः ण्यन्तः चोरिधातुः उभयपदी अस्ति इति हेतोः लिटि अनुप्रयुज्यमानः कृधातुरपि उभयपदी भवति। तस्मात् आत्मनेपदमपि भवति। अतः प्रथमपुरुषैकवचने तप्रत्यये **चोरयाञ्चक्रे** इति रूपम् सिध्यति। प्रक्रिया - पूर्ववत् प्रक्रियया चोरयाम् कृ लिट् इति जाते अनुबन्धलोपे चोरयाम् कृ ल् इति स्थिते प्रथमपुरुषैकवचनविवक्षायां त-प्रत्यये चोरयाम् कृ त इति स्थिते लिटस्तझयोरेशिरेच् इति लिडादेशस्य त इत्यस्य स्थाने एश् इति सर्वादिशे अनुबन्धलोपे चोरयाम् कृ ए इति जाते सार्वधातुकार्धधातुकयोः इत्यनेन इगन्ताङ्गस्य ऋकारस्य गुणे प्राप्ते असंयोगाल्लिट् कित् इति सूत्रेण लिडादेशस्य त-प्रत्ययस्य कित्त्वे क्क्ङिति च इति गुणनिषेधे लिटि धातोरनभ्यासस्य इति अस्मात् परत्वात् इको यणचि इति यणि प्राप्ते द्विर्वचनेऽचि इति द्वित्वार्थम् अचः यणादेशनिषेधे लिटि धातोरनभ्यासस्य इति सूत्रेण धातोर्द्वित्वे चोरयाम् कृ कृ ए इति जाते पूर्वोऽभ्यासः इति सूत्रेण द्विरुक्तस्य पूर्वभागस्य अभ्याससंज्ञायाम् उरत् इति सूत्रेण अभ्यासऋकारस्य अत्त्वे उरण् रपरः इति रपरत्वे च चोरयाम् कर् कृ ए इति जाते हलादिः शेषः इति सूत्रेण आदेः हलः शेषे चोरयाम् क कृ ए इति जाते कुहोश्चुः इति अभ्यासककारस्य चुत्वे चकारे च चोरयाम् कृ ए इति जाते इको यणचि इति सूत्रेण ऋकारस्य यणि रेफे चोरयाम् च क्र् ए इति जाते चोरयाम् इति मान्तस्य पदस्य हल्परत्वात् मोऽनुस्वारः इति मस्य अनुस्वारे वा पदान्तस्य इति सूत्रेण अनुस्वारस्य विकल्पेन परसवर्णे स्थानत आन्तर्यात् ञकारे **चोरयाञ्चक्रे** इति रूपं सिध्यति। परसवर्णाभावे **चोरयांचक्रे** इति रूपम् भवति। भूधातोः अस्धातोश्च अनुप्रयोगे तु तयोः परस्मैपदित्वात् न आत्मनेपदसम्भवः।

चुरादिगणीयेभ्यः सर्वेभ्यः धातुभ्यः णिच् भवति इति हेतोः ते णिजन्तधातवः अनेकाचो भवन्ति। ततः कास्यनेकाच आम्वक्तव्यो लिटि इति वार्तिकेन सर्वेभ्यः चुरादिगणीयधातुभ्यः लिटि आम्प्रत्ययो भवति किञ्च कृ-भू-अस् इत्येतेषाम् अनुप्रयोगो भवति।

एवञ्च लिटि रूपाणि (**कृ**-धातोः अनुप्रयोगे)

**चोरयाञ्चकार, चोरयाञ्चक्रतुः, चोरयाञ्चक्रुः, चोरयाञ्चकर्थ, चोरयाञ्चक्रथुः, चोरयाञ्चक्र। चोरयाञ्चकार/चोरयाञ्चकर, चोरयाञ्चकृव, चोरयाञ्चकृम।**

**चोरयांचकार, चोरयांचक्रतुः, चोरयांचक्रुः, चोरयांचकर्थ, चोरयांचक्रथुः, चोरयांचक्र। चोरयांचकार/चोरयांचकर, चोरयांचकृव, चोरयांचकृम।**

**चोरयाञ्चक्रे, चोरयाञ्चक्राते, चोरयाञ्चक्रिरे। चोरयाञ्चकृषे, चोरयाञ्चक्राथे, चोरयाञ्चकृढ्वे। चोरयाञ्चक्रे, चोरयाञ्चकृवहे, चोरयाञ्चकृमहे।**



## तनादितः चुरादिपर्यन्तम्- तन् कृ क्री चुर् धातवः

**चोरयांचक्रे, चोरयांचक्राते, चोरयांचक्रिरे। चोरयांचकृषे, चोरयांचक्राथे, चोरयांचकृढ्वे। चोरयांचक्रे, चोरयांचकृवहे, चोरयांचकृमहे।**

**भू**-धातोः अनुप्रयोगे - **चोरयाम्बभूव, चोरयाम्बभूवतुः, चोरयाम्बभूवुः। चोरयाम्बभूविथ, चोरयाम्बभूवथुः, चोरयाम्बभूव। चोरयाम्बभूव, चोरयाम्बभूविव, चोरयाम्बभूविम।**

**चोरयांबभूव, चोरयांबभूवतुः, चोरयांबभूवुः। चोरयांबभूविथ, चोरयांबभूवथुः, चोरयांबभूव। चोरयांबभूव, चोरयांबभूविव, चोरयांबभूविम।**

**अस्**-धातोः अनुप्रयोगे - **चोरयामास, चोरयामासतुः, चोरयामासुः।चोरयामासिथ, चोरयामासथुः, चोरयामास। चोरयामास, चोरयामासिव, चोरयामासिम।** एतेषां प्रक्रियाज्ञानाय लिटि एध्धातुरूपाणि द्रष्टव्यानि।

चुरादिगणीयधातुभ्यः णिच्प्रत्यये विहिते सति निष्पन्नानां णिजन्तानाम् अनेकाच्त्वात् ते सेटो भवन्ति। तस्मात् **लुटि** तासः इडागमः सुलभः। यथा - तिपि शप्-प्रत्ययापवादे तासि इडागमे णिचः इकारस्य गुणे अयादेशे डादेशे टिलोपे चोरयिता इति रूपं भवति। अग्रे रूपाणि स्वयं साधनीयानि।

तथा च **लुटि** परस्मैपदे रूपाणि - **चोरयिता, चोरयितारौ, चोरयितारः। चोरयितासि, चोरयितास्थः, चोरयितास्थ। चोरयितास्मि, चोरयितास्वः, चोरयितास्मः।**

तथा च आत्मनेपदे रूपाणि - **चोरयिता, चोरयितारौ, चोरयितारः। चोरयितासे, चोरयितासाथे, चोरयिताध्वे। चोरयिताहे, चोरयितास्वहे, चोरयितास्महे।**

इतः परं लृटि लोटि लङि विधिलिङि च रूपाणि स्वयं साधयत। अधः केवलं रूपाणि प्रदीयन्ते।

**लृटि** परस्मैपदे रूपाणि - **चोरयिष्यति, चोरयिष्यतः, चोरयिष्यन्ति। चोरयिष्यसि, चोरयिष्यथः, चोरयिष्यथ। चोरयिष्यामि, चोरयिष्यावः, चोरयिष्यामः।**

तथा च आत्मनेपदे रूपाणि - **चोरयिष्यते, चोरयिष्येते, चोरयिष्यन्ते। चोरयिष्यसे, चोरयिष्येथे, चोरयिष्यध्वे। चोरयिष्ये, चोरयिष्यावहे, चोरयिष्यामहे।**

**लोटि** परस्मैपदे रूपाणि - **चोरयतु-चोरयतात्, चोरयताम्, चोरयन्तु। चोरय-चोरयतात्, चोरयतम्, चोरयत। चोरयाणि, चोरयाव, चोरयाम।**

तथा च आत्मनेपदे रूपाणि - **चोरयताम्, चोरयेताम्, चोरयन्ताम्। चोरयस्व, चोरयेथाम्, चोरयध्वम्। चोरये, चोरयावहै, चोरयामहै।**

**लङि** परस्मैपदे रूपाणि - **अचोरयत्, अचोरयताम्, अचोरयन्। अचोरयः, अचोरयतम्, अचोरयत। अचोरयम्, अचोरयाव, अचोरयाम।**

तथा च आत्मनेपदे रूपाणि - **अचोरयत, अचोरयेताम्, अचोरयन्त। अचोरयथाः, अचोरयेथाम्, अचोरयध्वम्। अचोरये, अचोरयावहि, अचोरयामहि।**

**विधिलिङि** परस्मैपदे रूपाणि - **चोरयेत्, चोरयेताम्, चोरयेयुः। चोरयेः, चोरयेतम्, चोरयेत। चोरयेय, चोरयेवहि, चोरयेमहि।**



तथा च आत्मनेपदे रूपाणि - **चोरयेत, चोरयेयाताम्, चोरयेरन्। चोरयेथाः, चोरयेयाथाम्, चोरयेध्वम्। चोरये, चोरयेवहि, चोरयेमहि।**

**आशीर्लिङि** तिपि चोरि यास् स् त् इति जाते यास् स् त् इति समुदायस्य आर्धधातुकत्वं तु अस्ति परन्तु वलादित्वं नास्ति। अतः नेट्। णेः इकारस्य णेरनिटि इत्यनेन लोपे चोर् यास् त् इति जाते सकारद्वयलोपे **चोर्यात्** इति रूपं सिध्यति। एवमेव अग्रे ऊह्यम्। तथा च आशीर्लिङि परस्मैपदस्थले इडागमो न भवति किन्तु आत्मनेपदस्थले भवति इत्यवधेयम्।

तथा च परस्मैपदे रूपाणि - **चोर्यात्, चोर्यास्ताम्, चोर्यासुः। चोर्याः, चोर्यास्तम्, चोर्यास्त। चोर्यासम्, चोर्यास्व, चोर्यास्म।**

तथा च आत्मनेपदे रूपाणि - **चोरयिषीष्ट, चोरयिषीयास्ताम्, चोरयिषीरन्। चोरयिषीष्ठाः, चोरयिषीयास्थाम्, चोरयिषीढ्वम्-चोरयिषीध्वम्। चोरयिषीय, चोरयिषीवहि, चोरयिषीमहि।**

चुर्-धातोः पूर्ववत् प्रक्रियया चोरि इति जाते **लुङि** अडागमे तिपि इकारलोपे अ चोरि त् इति जाते शप्-प्रत्ययापवादे च्लौ च्लेः स्थाने सिजादेशे प्राप्ते तं बाधित्वा **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इत्यनेन च्लेः स्थाने चङ्-आदेशे अनुबन्धलोपे अ चोरि अ त् इति जाते **णेरनिटि** इत्यनेन णेः इकारस्य लोपे अ चोर् अ त् इति जाते **णौ चङ्युपधाया ह्रस्वः** इत्यनेन चोर् इत्यस्य उपधाभूतस्य ओकारस्य ह्रस्वे उकारे अ चुर् अ त् इति जायते। ततः **चङि** इत्यनेन चुर् इत्यस्य द्वित्वे अ चुर् चुर् अ त् इति जाते द्विरुक्तस्य पूर्वभागस्य पूर्वोऽभ्यासः इत्यनेन अभ्याससंज्ञायाम् हलादिः शेषः इत्यनेन अभ्यासस्य आदेः हलः शेषे अ चु चुर् अ त् इति जाते प्रत्ययलोपे प्रत्ययलक्षणम् इत्यनेन णिः लभ्यते। तेन चङ्परे णौ अचुचुर् इति अङ्गम् लभ्यते। तस्य च अङ्गस्य चु इति अभ्याससंज्ञकः लघुपरश्च वर्तते। अतः **सन्वल्लघुनि चङ्परेऽनग्लोपे** इत्यनेन चोः सन्वद्भावे अभ्यासस्य चोः उकारस्य **दीर्घो लघोः** इत्यनेन दीर्घे ऊकारे वर्णसम्मेलने अचूचुरत् इति रूपम् सिध्यति। आत्मनेपदस्थले तु तप्रत्यये अचूचुरत इति रूपम् सिद्ध्यति। एवम् अन्यत्र बोद्धव्यम्।

{सूत्रम्- **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** (३.१.४८) = ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे।}

{सूत्रम्. **णेरनिटि** (६.४.५१) = अनिडादावार्धधातुके परे णेर्लोपःस्यात्।}

{सूत्रम्. **णौ चङ्युपधाया ह्रस्वः** (७.४.१) = चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्।}

{सूत्रम्. **चङि** (६.१.११) = चङि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वेस्तोऽजादेस्तु द्वितीयस्य।}

{सूत्रम्. **सन्वल्लघुनि चङ्परेऽनग्लोपे** (७.४.९३) = चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति।}

{सूत्रम्. **दीर्घो लघोः** (७.४.९४) = लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये।}

तथा हि परस्मैपदे रूपाणि - **अचूचुरत्, अचूचुरताम्, अचूचुरन्। अचूचुरः, अचूचुरतम्, अचूचुरत। अचूचुरम्, अचूचुराव, अचूचुराम।**





तथा च आत्मनेपदे रूपाणि - **अचूचुरत, अचूचुरेताम्, अचूचुरन्त। अचूचुरथाः, अचूचुरेथाम्, अचूचुरध्वम्। अचूचुरे, अचूचुरावहि, अचूचुरामहि।**

तथा हि परस्मैपदे रूपाणि - **अचोरयिष्यत्, अचोरयिष्यताम्, अचोरयिष्यन्। अचोरयिष्यः, अचोरयिष्यतम्, अचोरयिष्यत। अचोरयिष्यम्, अचोरयिष्याव, अचोरयिष्याम।**

तथा हि आत्मनेपदे रूपाणि - **अचोरयिष्यत, अचोरयिष्येताम्, अचोरयिष्यन्त। अचोरयिष्यथाः, अचोरयिष्येथाम्, अचोरयिष्यध्वम्। अचोरयिष्ये, अचोरयिष्यावहि, अचोरयिष्यामहि।**

।।इति चुरादिगणः।।



## पाठगतप्रश्नाः-३

१८. चुर्-धातोः यः णिच्प्रत्ययो भवति स स्वार्थिकः हेतुमान् वा।

१९. चुरादिधातुभ्यः स्वार्थे णिच्प्रत्ययविधायकसूत्रं लिखत।

२०. चोरयति-चोरयते इत्यत्र उभयपदविधानं केन सूत्रेण।

२१. चुर्-धातोः लिटि प्रथमपुरुषैकवचने कति रूपाणि

२२. सत्यापादिसूत्रं पूरयत।

२३. चोरयति इत्यत्र कः विकरणप्रत्ययः।



## पाठसारः

अस्मिन् पाठे तनादिगणः, क्र्यादिदिगणः, चुरादिगणः चेति इति गणत्रयस्य आलोचना विद्यते। तत्रादौ तनादिगणीयस्य तन्-धातोः कृधातोः च आलोचनं विहितम्। तत्र तन्-धातोर्विषये तनादिकृञ्भ्य उः, तनादिभ्यस्तथासोः, अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति, कृधातोः विषये अत उत्सार्वधातुके, न भकुर्छुराम्, नित्यं करोतेः, ये च इत्येतानि सूत्राणि व्याख्यातानि। ततः क्र्यादिगणीयस्य क्रीधातोः विषये आलोचनं कृतम्। तत्र क्री-धातोः विषये क्र्यादिभ्यः श्ना इति श्नाविकरणविधायकम् सूत्रम् आलोचितम्। ततः ई हल्यघोः, श्नाभ्यस्तयोरातः इति सूत्रे व्याख्याते। तदनन्तरम् चुर्-धातुः आलोचितः। तत्र चुर्-धातोः कथं णिच्प्रत्ययो भवति, कश्च विकणप्रत्ययो भवति इत्यादि आलोचितम्। किञ्च लुङि सन्वद्भावो भवति इति विशेषोऽपि प्रक्रियासहयोगेन प्रदर्शितः। पाठेऽस्मिन् न समेषां रूपाणां ससूत्रं प्रक्रियाः प्रदर्शिताः, ताः स्वयं साध्याः।



भ्वादितः चुरादिगणं यावत् दश गणाः सन्ति। अतः अस्य समग्रस्य प्रकरणस्य नाम यथा तिङन्तं प्रकरणं तथैव दशगणी इत्यपि व्याकरणतन्त्रे केचित् व्यवहरन्ति।



## पाठान्तप्रश्नाः

१. सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् इति सूत्रं सोदाहरणं व्याखात।
२. अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति इति सूत्रं सोदाहरणं व्याखात।
३. तनादिभ्यस्तथासोः इति सूत्रं सोदाहरणं व्याखात।
४. तन्-धातोः लटि परस्मैपदे आत्मनेपदे च सविकल्पं रूपाणि लेख्यानि।
५. कृ-धातोः लटि परस्मैपदे आत्मनेपदे च सविकल्पं रूपाणि लेख्यानि।
६. क्री-धातोः लटि परस्मैपदे आत्मनेपदे च रूपाणि लेख्यानि।
७. चुर्-धातोः लटि परस्मैपदे आत्मनेपदे च रूपाणि लेख्यानि।
८. चुर्-धातोः लिटि कृञः अनुप्रयोगे निष्पन्नानि सविकल्पं सर्वाणि रूपाणि लिखत।
९. चुर्-धातोः लिटि भूधातोः अनुप्रयोगे निष्पन्नानि सर्वाणि रूपाणि लिखत।
१०. अचूचुरत् इत्यस्य प्रक्रिया लेख्या।
११. अक्रैषीत् इत्यस्य प्रक्रिया लेख्या।
१२. अकृत इत्यस्य प्रक्रिया लेख्या।
१३. चक्रे चकार इत्यनयोः प्रक्रिया लेख्या।
१४. कुरुतः इत्यस्य प्रक्रिया लेख्या।
१५. चोरयति चोरयते इत्यनयोः प्रक्रिया लेख्या।
१६. चोरयाञ्चकार इत्यस्य प्रक्रिया लेख्या।
१७. चोरयाञ्चक्रे इत्यस्य प्रक्रिया लेख्या।
१८. क्रीधातोः लिटि परस्मैपदे आत्मनेपदे च रूपाणि लिखत।
१९. कृधातोः लिटि परस्मैपदे आत्मनेपदे च रूपाणि लिखत।
२०. अतानीत् अतनीत् इत्यनयोः प्रक्रिया लेख्या।
२१. अतत अतनिष्ट इत्यनयोः प्रक्रिया लेख्या।
२२. चिक्राय इत्यस्य प्रक्रिया लेख्या।



२३. कुर्वन्ति इत्यस्य प्रक्रिया लेख्या।

२४. नित्यं करोतेः इति सूत्रस्य ससन्दर्भं व्याख्या कार्या।

२५. ये च इति सूत्रस्य व्याख्या कार्या।

२६. ई हल्यघोः इति सूत्रस्य व्याख्या कार्या।

२७. श्नाभ्यस्तयोरातः इति सूत्रस्य व्याख्या कार्या।

२८. अत उत्सार्वधातुके इति सूत्रस्य व्याख्या कार्या।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि- १**

१. उ-प्रत्ययः।

२. उ-प्रत्ययः।

३. तनादेः सिचो वा लुक्स्यात्तथासोः।

४. कृञ उलोपो यादौ प्रत्यये परे।

५. करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः।

६. अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति।

७. तन्वहे, तनुवहे।

८. क्रियात्।

९. ऋद्धनोः स्ये।

१०. अतत, अतनिष्ट इति रूपद्वयम्।

**उत्तराणि- २**

११. श्ना।

१२. क्र्यादिभ्यः श्ना।

१३. चिक्रयिथ-चिक्रेथ।

१४. चिक्रियिध्वे-चिक्रियिढ्वे।

१५. श्नाभ्यस्तयोरातः।

१६. द्रव्यविनिमयः।

१७. उभयपदी अस्ति।



**उत्तराणि- ३**

१८. स्वार्थिकः

१९. सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्।

२०. णिचश्च।

२१. चोरयाञ्चकार, चोरयाम्बभूव, चोरयामास इति रूपत्रयम्।

२२. सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्।

२३. शप्।

॥इति त्रयोविंशः पाठः ॥





# एतत्पुस्तकस्थसूत्राणां सूची

## (अकारादिक्रमेण)

**पाठे स्थानम् - सूत्रम् - अष्टाध्यायीक्रमः**



## तनादितः चुरादिपर्यन्तम्- तन् कृ क्री चुर् धातवः

[१२.२] वर्तमाने लट्॥ (३.२.१२३)
[१६.१] विधिनिमन्त्रणा०॥ (३.३.१६१)
[२१.३] शासिवसिघसीनां च॥ (८.३.६०)
[१२.८] शेषात् कर्तरि परस्मैपदम्॥ (१.३.७८)
[१२.१३] शेषे प्रथमः॥ (१.४.१०७)
[२२.१०] श्नसोरल्लोपः॥ (६.४.१११)
[२३.१०] श्नाभ्यस्तयोरातः॥ (६.४.११२)
[२१.९] श्लौ॥ (६.१.१०)
[२३.११] सत्यापपाशरूपवीणा०॥ (३.१.२५)
[२०.११] सवाभ्यां वामौ॥ (३.४.९१)
[१६.१४] सार्वधातुकमपित्॥ (१.२.४)
[१३.६] सार्वधातुकार्धधातुकयोः॥ (७.३.८४)
[१९.५] सिचि वृद्धिः परस्मैपदेषु॥ (७.२.१)
[१९.४] सिजभ्यस्तविदिभ्यश्च॥ (३.४.१०९)
[२०.१६] सुट् तिथोः॥ (३.४.१०७)
[१५.८] सेर्ह्यपिच्च॥ (३.४.८७)
[२२.५] स्तुसुधूञ्भ्यः परस्मैपदेषु॥ (७.२.७२)
[१६.१७] स्मोत्तरे लङ् च॥ (३.३.१७६)
[१४.१२] स्यतासी लृलुटोः॥ (३.१.३३)
[१८.९] स्वरतिसूतिसूयति०॥ (७.२.४४)
[१२.७] स्वरितञितः कर्त्र ०॥ (१.३.७२)
[२२.१] स्वादिभ्यः श्नुः॥ (३.१.७३)
[२०.९] ह एति॥ (७.४.५२)
[१४.६] हलादिः शेषः। ७.४.६०॥
[२१.१४] हलि च॥ (८.२.७७)
[२१.५] हु-झल्भ्यो हेर्धिः॥ (६.४.१०१)
[२२.२] हुश्नुवोः सार्वधातुके॥ (६.४.८७)
[१९.९] ह्म्यन्त-क्षणश्वसजागृ०॥ (७.२.५)
[१४.७] ह्रस्वः॥ (७.४.५९)